**प्रतियोगितावच्छेदकभेदेति** । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकभेदनिवेश इत्यर्थः । **शुद्धवह्नित्वादाविति** । महानसीयत्वादिरूपविशेषणान्तराविशेषितवह्नित्वादावित्यर्थः । **विशिष्टवह्नित्वादिभेदस्यासत्त्वादिति** । विशिष्टस्य शुद्धानतिरिक्तत्वादिति भावः । **प्रतियोगितावच्छेदकाविषयकेति** । प्रतियोगितावच्छेदकपर्याप्तविषयत्वानिरूपकप्रतीतिनिरूपितविषयताश्रयत्वमित्यर्थः । तेन वह्नित्वविषयकप्रतीतेरपि प्रतियोगितावच्छेदकीभूतमहानसीयत्वविशिष्टवह्नित्वविषयकत्वस्य विशिष्टस्य शुद्धविशेष्यानतिरिक्तत्वेनाक्षतत्वेऽपि न क्षतिः । तथात्वेऽपि तादृशप्रतीतेः महानसीयत्वविशिष्टवह्नित्वपर्याप्तविषयत्वानिरूपकत्वात् । एतदुक्तं भवति– विशिष्टविषयकप्रतीतेः शुद्धविशेष्यमात्रविषयकप्रतीतितो विलक्षणतया तदीयविषयतायाः विशेषणविशेष्योभयान्तर्भावेण पर्याप्ततया शुद्धविशेष्यमात्रविषयकप्रतीतौ तादृशविशिष्टपर्याप्तविषयताकत्वाभावेनादोषात् । **तदपेक्षयेति** । साध्यतावच्छेदके प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयत्वविवक्षापेक्षयेत्यर्थः । **न गौरवमिति** । साध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वनिवेशपक्षापेक्षया साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वे हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकानवच्छेद्यत्वनिवेशपक्षे अवच्छिन्नप्रतियोगित्वस्य, प्रतियोगितानवच्छेदकत्वस्थाने प्रतियोगितावच्छेदकानवच्छेद्यत्वस्य च निवेशेन गौरवं प्रसक्तमासीत् । इदानीं तु प्रतियोगितानवच्छेदकमित्यत्र प्रतियोगितावच्छेदकनिष्ठविषयताशून्य- प्रतीतिविषयत्वस्यैव निवेशनीयतया पक्षद्वयेऽपि गौरवसाम्यमिति भावः । **अवच्छेदकाविषयकेति** । प्रतियोगितावच्छेदकाविषयकेत्यर्थः ।।

## गादाधरी

**अवच्छेदकत्वस्य** वह्नित्वमहानसीयत्वादिनिष्ठस्य संबन्धादिभेदेन भिन्नत्वेऽपि तत्तत्प्रतियोगितावच्छेदकत्वत्वाद्यनुगतरूपेण व्यासज्यवृत्तितायाः



**चक्रवर्तिलक्षणे** वह्नित्वादेः अवच्छेदकत्वपर्याप्त्यनधिकरणत्वमुपपादितवतो दीधितिकारस्यानुमतत्वात् ।।

## व्याख्या

ननु महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वं यदि घटपटोभयत्ववत् महानसीयत्ववह्नित्वोभयपर्याप्तमेकं स्यात् तदा तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नभेदः तदेकतरवह्नित्वे स्यात् । तदेव न । महानसीयत्वनिष्ठस्य अवच्छेदकत्वस्य वह्नित्वनिष्ठावच्छेदकत्वस्य च भेदात् । तथा हि– महानसीयवह्नौ महानसीयत्वं वह्नित्वं च वर्तते । महानसीयत्वं नाम महानसानुयोगिकसंयोगप्रतियोगित्वम् । तत् महानसीयवह्नौ स्वरूपसंबन्धेन वर्तते । जात्यतिरिक्तस्य तस्य स्वरूपतोऽवच्छेदकत्वासंभवात् महानसानुयोगिकसंयोगप्रतियोगित्वत्वरूपेण महानसीयत्वत्वेनैवावच्छेदकत्वम् । वह्नित्वं तु जातिरूपं समवायसंबन्धेन महानसीयवह्नौ वर्तते । तत एव तत् स्वरूपेणैवावच्छेदकम् । एवं च महानसीयत्वनिष्ठा अवच्छेदकता महानसीयत्वत्वावच्छिन्ना स्वरूपसंबन्धावच्छिन्ना च । वह्नित्वनिष्ठा अवच्छेदकता तु समवायसंबन्धावच्छिन्ना किंचिद्धर्मानवच्छिन्ना-निरवच्छिन्ना च । एवं चोभयपर्याप्तस्य एकस्यावच्छेदकत्वस्याभावात् हेतुसमानाधिकरणमहानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदः वह्नित्वे दुर्घटः । तस्यापि उक्ताभावीयप्रतियोगितावच्छेदकत्वाश्रयत्वात् इत्याशङ्कायामाह– **अवच्छेदकत्वस्येति** । अस्याः शङ्कायाः समाधानमित्थम्– सत्यं महानसीयत्वनिष्ठा वह्नित्वनिष्ठा च महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकता भिन्ना, तथापि उभयनिष्ठयोः महानसीयवह्न्यभावप्रतियोगितावच्छेदकतयोः संबन्धभेदेन सावच्छिन्नत्वनिरवच्छिन्नत्वभेदेन च भेदात् प्रत्येकवृत्तित्वम् । तथापि

तयोरवच्छेदकतयोः महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वमिति अनुगतधर्मोऽस्ति । तत्तद्व्यक्तित्वमिति अननुगतो धर्मोऽपि अस्ति । अस्तु प्रकृते वह्नित्वस्य कथं प्रतियोगितानवच्छेदकत्वमिति चेत्– श्रूयताम् । उक्तयोः अवच्छेदकतयोः तत्तद्व्यक्तित्वेन प्रत्येकवृत्तित्वेऽपि महानसीयवह्न्यभाव-प्रतियोगितावच्छेदकतात्वेन उभयवृत्तित्वात् तादृशव्यासज्यवृत्ति - अवच्छेदक-तात्वावच्छिन्नावच्छेदकत्वभेदः साध्यतावच्छेदके निवेश्यते । एवं च हेतुसमानाधि-करणाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकत्ववद्भिन्नं यत् साध्यता-वच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पर्यवसन्नम् । महानसीय-वह्न्यभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकतावत् महानसीयत्व-वह्नित्वोभयं तद्भिन्नं साध्यतावच्छेदकं वह्नित्वं भवति । एकं नोभयमितिवत् । अतो नाव्याप्त्यादिदोष इति भावः । एवं निर्वाहे दीधितिकारसंमतिमाह– **चक्रवर्तिलक्षणे** इत्यादिया । **चतुर्दशलक्षण्यां चक्रवर्तिकृतं** किंचित् व्याप्तिलक्षणं **दीधितावनूदितम्** । तदपि सिद्धान्तभूतप्रकृतव्याप्तिसमशीलम् । तत्रापीमां शङ्कामनूद्य उक्तरीत्यैव समाहितम् । तथाहि– ''हेतुसमानाधिकरणस्य व्याप्यवृत्तेः साध्याभावस्य प्रतियोगितायाम् अनवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः । अवच्छेदकत्वं चेह तत्पर्याप्त्यधिकरणत्वम् । तेन विशिष्टवह्न्यभावस्य प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः ।'' इति **दीधितिग्रन्थः** । तत्र वह्नित्वे महानसीयत्वविशिष्टवह्न्यभावप्रतियोगितावच्छेदकत्वविरहमभिप्रेत्यैव अव्याप्तिदोषवारणात् तादृशप्रतियोगितावच्छेदकत्वे केनापि प्रकारेण व्यासज्यवृत्तित्वम् उपपादनीयमित्यभिप्रायावगमात् इति भावः । स च प्रकारः पूर्वप्रदर्शित एव । अन्यथा व्यासज्यवृत्तित्वानिर्वाहात्– इति भावः ।।



## गादाधरी

**सार्वभौमैस्तु– विशेषधर्मावच्छिन्न**प्रतियोगिताकूटानतिरिक्तसामान्यधर्मा-वच्छिन्नप्रतियोगितासंबन्धस्य विशेषरूपेण अव्यासज्यवृत्तेरपि सामान्यधर्मावच्छिन्न-प्रतियोगितासंबन्धत्वेनानुगतेन व्यासज्यवृत्तित्वमिति कण्ठरवेणैवोक्तम् ।।

## व्याख्या

प्रतियोगितायाः तत्तत्प्रतियोगितात्वेन विशेषरूपेण अव्यासज्यवृत्तित्वेऽपि सामान्यरूपेण व्यासज्यवृत्तित्वं वदतां सार्वभौमानां मतमनुसृत्य तत्तद्वह्न्यभाव-मादाय प्रसक्तामव्याप्तिं परिहर्तुं तन्मतमनुवदति - **सार्वभौमैस्तु** इत्या-दिना । **विशेषधर्मावच्छिन्नेति** । घटत्वावच्छिन्नप्रतियोगिता तत्तद्घटत्वावच्छिन्न-प्रतियोगितासमुदायात् नातिरिक्ता । घटत्वावच्छिन्नप्रतियोगिता घटो नास्तीत्यत्र घटस्य अभावस्य च संबन्धः । सा प्रतियोगिता सर्वेषु घटेषु वर्तते । तस्यां प्रतियोगितायां घटत्वावच्छिन्नप्रतियोगितात्वम् इति सामान्यधर्मः, तत्तद्घटत्वा-वच्छिन्नप्रतियोगितात्वरूपाः विशेषधर्माश्च सन्ति । उक्तसामान्यरूपेण प्रतियोगिता सर्वेषु वर्तते । उक्तविशेषरूपेण तु तत्तद्घटनिष्ठतत्तत्प्रतियोगिता तत्तद्घट एवास्ति । एवं च तत्तद्घटवृत्तिप्रतियोगितानां उक्तसामान्यरूपेण सर्वघटवृत्तित्वमस्ति । एवमेव महानसीयवह्न्यादिरूपतत्तद्वह्न्यभावीयप्रतियोगितानां तत्तत्प्रतियोगितात्वेन तत्तद्वह्निमात्रवृत्तित्वेऽपि वह्नित्वरूपसामान्यधर्मावच्छिन्नप्रतियोगितात्वेन सामान्यरूपेण सकलवह्निवृत्तित्वमस्ति । एवमेव धूमसमानाधिकरणमहानसीय-वह्न्यभावप्रतियोगितावच्छेदकता महानसीयत्वे वह्नित्वे च वर्तते । तत्तद्व्यक्तित्वेन तत्तन्मात्रवृत्तिश्च । महानसीयवह्न्यभावीय प्रतियोगितावच्छेदकतात्वेन सामान्यरूपेण तु सा अवच्छेदकता महानसीयत्ववह्नित्वोभयवृत्तिः । ततश्च हेतुसमानाधिकरणा-त्यन्ताभावप्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकतावद्भिन्नत्वं साध्यतावच्छेदके

निवेश्यते। धूमसमानाधिकरणो यो महानसीयवह्न्यभावः तदीयप्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकतावन्महानसीयत्ववह्नित्वोभयभेदः साध्यतावच्छेदके वह्नित्वेऽस्तीति नाव्याप्तिः । तथा च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतात्वनिष्ठावच्छेदकताक प्रतियोगितावच्छेदकनिष्ठावच्छेदकनिष्ठावच्छेदकताक प्रतियोगिताकभेदवत्साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । वह्नित्वं महानसीयवह्न्यभावीय प्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकतावद्भिन्नं महानसीयत्ववह्नित्वोभयभिन्नमिति यावत् । अतः साध्यतावच्छेदके उक्तं परिष्कृतमनवच्छेदकत्वमस्तीति नाव्याप्तिरिति भावः । हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकतापर्याप्त्यधिकरणभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति पर्यवसन्नम् ।।

## गादाधरी

**एवं सति** ''महानसीयवह्निभिन्नवह्निमान् धूमात्'' इत्यादौ साध्यतावच्छेदकमहानसीयवह्निभिन्नत्ववह्नित्वाद्योः **प्रत्येकं** धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वपर्याप्त्यनधिकरणत्वेऽपि **प्रकृतानुमितिविधेयतावच्छेदकता** यादृशरूपावच्छिन्ने पर्याप्ता तादृशरूपावच्छिन्नानुयोगिताकतादृशावच्छेदकत्वावच्छिन्नभेदस्यैव व्याप्तिघटकत्वोपगमेन नातिव्याप्तिः । **उक्तस्थलीया**नुमितिविधेयतावच्छेदकतापर्याप्त्यवच्छेदक**दर्शितधर्मद्वय**निष्ठद्वित्वाद्यवच्छिन्ने हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वपर्याप्तिमति **विरोधेन तदवच्छिन्नभेदासत्त्वात्** ।।

## व्याख्या

नन्वेवं निवेशेऽपि पर्वतः महानसीयवह्निभिन्नवह्निमान् धूमादित्यत्रातिव्याप्तिः । महानसीयवह्निभिन्नवह्निरूपसाध्याभाववति महानसे धूमरूपहेतुसत्त्वात् अयं हेतुः व्यभिचारी । तत्र पूर्वपरिष्कृतव्याप्तिरस्ति । अत्र साध्यतावच्छेदकं



महानसीयवह्निभिन्नत्वं वह्नित्वं च । धूमसमानाधिकरणः धूमाधिकरणमहानसवृत्तिर्यो महानसीयवह्निभिन्नवह्न्यभावः तत्प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणं महानसीयवह्निभिन्नत्व - वह्नित्वोभयं तद्भिन्नत्वस्य प्रत्येकस्मिन् वह्नित्वे महानसीयवह्निभिन्नत्वे च एकं नोभयमितिन्यायेन सद्भावात् अतिव्याप्तिरित्याशङ्क्य समाधत्ते– **एवं सतीत्यादिना** । **एवं सति** = अवच्छेदकतायाः व्यासज्यवृत्तित्वस्वीकारेण प्रत्येकधर्मे अनवच्छेदकत्वोपपादने सति । **प्रत्येकं** = महानसीयवह्निभिन्नत्वे वह्नित्वे च । **प्रकृतानुमितीत्यादि** । प्रकृतानुमिति : पर्वतो महानसीयवह्निभिन्नवह्निमान् इत्यनुमितिः तन्निरूपितविधेयतावच्छेदकता महानसीयवह्निभिन्नत्ववह्नित्वोभयत्वावच्छिन्ने पर्याप्ता तादृशरूपावच्छिन्नानुयोगिताकत्वं धूमसमानाधिकरणमहानसीयवह्निभिन्नवह्न्यभावीयप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य नास्ति । प्रकृतानुमितिविधेयतावच्छेदकतापर्याप्त्यनुयोगि यत् महानसीयवह्निभिन्नत्ववह्नित्वोभयं तस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्याश्रयतया तादृशपर्याप्त्याश्रयभिन्नत्वासंभवात् । अतो नातिव्याप्तिरिति भावः। तथा च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वपर्याप्तिमद्भिन्नं यत् साध्यतावच्छेदकतापर्याप्तिमत् तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकावच्छिन्नभिन्नं यत् साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकावच्छिन्नं तदवच्छिन्नावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति यावत् ।।

अतिव्याप्त्यभावमुपपादयति– **उक्तस्थलीयेत्यादिना** । पर्वतो महानसीयवह्निभिन्नवह्निमान् इत्याकारकानुमितिविधेयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं यत् दर्शितधर्मद्वयनिष्ठं महानसीयवह्निभिन्नत्ववह्नित्वोभयनिष्ठं उभयत्वं तदवच्छिन्ने तदुभयस्मिन्, हेतुमन्निष्ठो यो महानसीयवह्निभिन्नवह्न्यभावः तन्निरूपित-

प्रतियोगितावच्छेदकत्वपर्याप्त्यधिकरणे, **विरोधेन** (उभयस्मित् उभयभेदासंभवरूप-विरोधात्) **तदवच्छिन्नभेदासत्त्वात्** उभयत्वावच्छिन्नप्रतियोगिताकभेदस्य असत्त्वात् नातिव्याप्तिरिति पूर्वेणान्वयः ।।

अत्राहुः–

नन्वत्र महानसीयवह्निमान् धूमात् इत्यत्रैव कुतोऽतिव्याप्तिर्नोक्ता । वह्नित्वरूपसाध्यतावच्छेदके हेतुसमानाधिकरणमहानसीयवह्न्यभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणमहानसीयत्ववह्नित्वोभयभेदस्य सत्त्वात् ।।

न च - यावत्साध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वं निवेश्यते । महानसीयत्वे यावत्साध्यतावच्छेदकान्तर्गते धूमाधिकरणपर्वतवृत्तिर्योऽभावः महानसीयत्वविशिष्टाभावः तत्प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्य सत्त्वेन तदनवच्छेदकत्वविरहेण अतिव्याप्तेरभावात् इति - वाच्यम् ।।

तथा सति प्रमेयवत्साध्यकस्थले साध्यतावच्छेदकीभूतयावत्प्रमेये तादृशप्रतियोगितानवच्छेदकत्वासंभवेन उक्तविवक्षाया असंभवादिति चेत्–

मैवम् । महानसीयवह्निमान् धूमात् इत्यत्र अतिव्याप्तिवारणाय वक्ष्यमाणविवक्षापेक्षया हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकता पर्याप्त्यधिकरणाविषयकप्रतीतिविषयत्वरूपपारिभाषिकभेद एव साध्यतावच्छेदके लाघवात् निवेशयितुमुचितः । तथा च यावत्साध्यतावच्छेदके निरुक्तप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणापर्याप्तविषयताकत्वरूपस्य पारिभाषिकस्य प्रतियोगितावच्छेदकभेदस्य निवेशे वह्नित्वे तादृशभेदसत्त्वेऽपि महानसीयत्वे तदसत्त्वेनातिव्याप्तिवारणसंभवात् ।।

प्रमेयसाध्यतावच्छेदककस्थले घटत्वादिरूपप्रमेयस्य तादृशावच्छेदकत्वपर्याप्त्यधिकरणत्वेन तदविषयकप्रतीतिविषयत्वस्य घटत्वादौ दुरुपपादत्वेऽपि



प्रतियोगितावच्छेदकीभूतघटत्वाद्यपर्याप्ता या विषयता प्रमेयमिदमित्याकारकज्ञानीयप्रमेयत्वविशिष्टप्रमेयपर्याप्ता विषयता तदाश्रयत्वस्य प्रमेयत्वविशिष्टे सूपपादत्वेनाव्याप्त्यभावात् - इत्यतो महानसीयवह्निभिन्नत्वविशिष्टवह्निसाध्यकानुसरणम् ।।

तत्र वह्नित्वे महानसीयवह्निभिन्नत्वे च प्रत्येकं धूमसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणापर्याप्तविषयताकत्वरूपमनवच्छेदकत्वं संभवति । कथमिति चेत्– हेत्वधिकरणे महानसे महानसीयवह्निभिन्नद्रव्यत्वादिसत्त्वेन सामान्यतो वह्निभिन्नाभावस्य असत्त्वेन महानसीयवह्निभिन्नत्वे उक्तप्रतियोगितावच्छेदकतापर्याप्त्यसत्त्वेन महानसीयवह्निभिन्नत्वविशिष्टवह्नित्व एव तत्सत्त्वेन प्रत्येकं वह्नित्वे महानसीयत्वे च तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणाविषयकप्रतीतिविषयत्वरूपस्य प्रतियोगितानवच्छेदकत्वस्य सत्त्वेन अतिव्याप्तिपरिहारो न संभवतीति तत्परिहाराय **प्रकृतानुमितिविधेयतावच्छेदकता** इत्यादिपरिष्कारः **भट्टाचार्यैः** प्रदर्शितः । तथा हि– प्रकृतानुमितिविधेयतावच्छेदकता यादृशरूपावच्छिन्ने पर्याप्ता तादृशरूपावच्छिन्नानुयोगिताको यः हेतुसमानाधिकरणाभावप्रयोगितावच्छेदकत्वावच्छिन्नभेदः तद्वत्साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । प्रकृते महानसीयवह्निभिन्नवह्निमान् धूमात् इत्यत्र महानसीयवह्निभिन्नत्ववह्नित्वयोः प्रत्येकं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वेऽपि प्रकृतानुमितिविधेयतावच्छेदकतायाः महानसीयवह्निभिन्नत्ववह्नित्वोभयत्वावच्छिन्ने पर्याप्ततया तदवच्छिन्ने हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वपर्याप्तिसत्त्वेन तद्विरोधात् हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदो नास्तीति नातिव्यप्तिरिति भावः ।।

तथा च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नभेदानुयोगितावच्छेदकधर्मपर्याप्तावच्छेदकताकधर्मावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति पर्यवसितम् ।।

**उक्तस्थलीयेति** । महानसीयवह्निभिन्नवह्निमान् धूमात् इत्यत्रेत्यर्थः । **दर्शितधर्मद्वयेति** । महानसीयवह्निभिन्नत्ववह्नित्वरूपधर्मद्वयेत्यर्थः । **विरोधेनेति** । प्रतियोगिना साकमभावस्य विरोधादित्यर्थः ।।

## गादाधरी

**साध्यतावच्छेदकवृत्ति**वह्नित्वत्व - महानसीय- वह्निभिन्नत्व वह्नित्वोभयत्वाद्यनुपस्थितिकाले **तदवच्छिन्ने**ऽनवच्छेदकत्वस्य दुर्ग्रहतया अनुमित्यनुत्पादो व्यापकताज्ञानकारणतावादिनामिष्ट एव ।।

**तेन तेन रूपेणा**नवच्छेदकताग्रहात् **तत्तद्रूपा**नवच्छिन्नविधेयतावच्छेदकताका**नुमित्यनुपपत्तिश्च केवलान्वयिग्रन्थे** ग्रन्थकृतैव वक्ष्यते ।।

## व्याख्या

ननु प्रकृतानुमितिविधेयतावच्छेदकता यद्रूपावच्छिन्ने पर्याप्ता तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकधर्मावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति परिष्कारे क्रियमाणे पर्वतो महानसीयवह्निभिन्नवह्निमान् धूमात् इत्यत्र अनुमितिविधेयतावच्छेदकतायाः महानसीयवह्निभिन्नत्ववह्नित्वोभयत्वावच्छिन्ने पर्याप्ततया तादृशोभयत्वावच्छिन्नोभयभेदावगाहि व्याप्तिज्ञानस्यैवानुमितिहेतुत्वं स्यात् । तथा सति यस्य पुरुषस्य तादृशोभयत्वमनुपस्थितं तस्य तद्घटितव्याप्तिज्ञानासंभवात् अनुमित्यनुपपत्तिः इत्याशङ्क्य इष्टापत्त्या परिहरति– **साध्यतावच्छेदकवृत्तीत्यादिना** । **तदवच्छिन्ने** इति । महानसीयवह्निभिन्नत्ववह्नित्वोभयावच्छिन्ने इत्यर्थः ।।



नन्वेवमपि सर्वत्र साध्यतावच्छेदकवृत्तिधर्मोपस्थितेरावश्यकतया स्वरूपतो वह्नित्वसाध्यतावच्छेदककानुमितिः पर्वतो वह्निमान् इत्याकारिका न स्यात्, पर्वतो वह्नित्ववद्वान् इत्याकारिका अनुमितिरेव स्यात् । एतदुक्तं भवति कदाचित् स्वरूपतो वह्नित्वप्रकारिका पर्वतो वह्निमान् इत्यनुमितिः, कदाचित् वह्नित्वत्वेन वह्नित्वप्रकारिका पर्वतो वह्नित्ववद्वान् इत्यनुमितिश्च भवतीति अनुमितौ वैलक्षण्यमनुभूयते । तच्च व्याप्तिज्ञानवैलक्षण्येनैव निर्वहणीयम् । उक्तपरिष्कारे तु सर्वत्रैव अनुमितौ कारणीभूतव्याप्तौ साध्यतावच्छेदकतावच्छेदकावच्छिन्ने एव हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य निवेशात् साध्यतावच्छेदकतावच्छेदकरूपेण साध्यतावच्छेदकविषयकव्याप्तिज्ञानस्यैव हेतुतया पर्वतो वह्नित्ववद्वान् इत्येवानुमितेः संभवात् इत्याशङ्क्य अयं दोषः व्यापकताज्ञानकारणतावादिमते अपरिहार्य इति **दीधितिकारेणैव केवलान्वयिग्रन्थे** वक्ष्यत इति समाधत्ते– **तेन तेन रूपेणेति** । साध्यतावच्छेदकतावच्छेदकेन वह्नित्वत्वादिनेत्यर्थः । **तत्तद्रूपेति** । वह्नित्वत्वादिरूपेत्यर्थः । **अनुमित्यनुपपत्तिरिति** । व्याप्तिज्ञाने साध्यतावच्छेदकस्य यादृशी विषयता अनुमितावपि तस्य तादृश्येव विषयता इत्याशयेनेदम् ।।

## गादाधरी

**यत्त्वतत्त्वेन** हेतोर्निवेशे हेतुव्यक्तिभेदेन व्याप्तिर्भिद्येत । सा च नानुमित्युपयोगिनी । पक्षीयधूमादिव्यक्तिव्यापकतायाः पूर्वं **वह्न्यादा**वगृहीतत्वादिति **यद्रूपविशिष्टेत्युक्तम्** । तथा च धूमत्वादिरूपहेतुतावच्छेदकधर्मानेव विशिष्य निवेश्य तत्तद्रूपावच्छिन्नहेतुकानुमित्यौपयिकव्याप्तिर्निर्वाच्या । तथा च महानसादौ धूमवह्न्यादिसहचारग्रहात् वह्न्यादौ तद्धूमत्वाद्यवच्छिन्ननिरूपिताया इव पक्षीयधूमादिसाधारणधूमत्वाद्यवच्छिन्ननिरूपिताया अपि व्यापकतायाः ग्रहसंभवात् तद्घटितव्याप्तेः पक्षधर्मे धूमे ग्रहात् अनुमितिनिर्वाह इति भावः ।।

## व्याख्या

**मणिग्रन्थस्थयत्पदस्य** यद्रूपविशिष्टपरत्वेन **तस्येत्यत्र तत्पदस्य** तद्रूपविशिष्टपरतया च दीधितौ व्याख्यानस्य प्रयोजनमाह– **यत्त्वतत्त्वेनेत्यादिना** । हेतोः यत्त्वेन साध्यस्य तत्त्वेन च निवेशः यथाश्रुत**मणिग्रन्थाद**वगम्यते । तथा सति यत्तत्पदयोः बुद्धिस्थहेतुसाध्यव्यक्तिविशेषवाचकतया तादृशहेतुसाध्यव्यक्तिभेदेन व्याप्तेः भेदः स्यात् । तथा सति पूर्वं महानसादौ दृष्टान्ते स्थितायां धूमव्यक्तावेव तत्रत्यवह्निव्याप्यत्वस्य गृहीततया अर्थात् महानसीयधूमव्यापकमहानसीयवह्निसामानाधिकरण्यस्य महानसीयधूमे ज्ञाततया पर्वतस्थधूमव्यापकतायाः पर्वतस्थवह्नौ, पर्वतस्थवह्निसामानाधिकरण्यस्य पर्वतीयधूमे चागृहीततया, इदानीं पर्वते धूमदर्शनेन एतद्धूमव्यापकैतद्वह्निसामानाधिकरण्यरूपव्याप्तिस्मरणं न संभवतीति व्याप्तिज्ञानरूपकारणविरहात् पर्वतो वह्निमान् इत्यनुमितिर्न स्यात् । अतः यत्पदस्य यद्रूपविशिष्टपरतया तत्पदस्य तद्रूपविशिष्टपरतया च **दीधितौ** व्याख्यातम् । तथा सति धूमत्वविशिष्टनिष्ठा वह्नित्वविशिष्टनिरूपिता व्याप्तिः– धूमत्वविशिष्ट-समानाधिकरणाभावप्रतियोगितानवच्छेदक- वह्नित्वावच्छिन्नसामानाधिकरण्यरूपेति भावः ।।

**वह्न्यादाविति** । पर्वतीयवह्न्यादावित्यर्थः । पक्षीयवह्न्यादाविति यावत् । अयं भावः– पूर्वं महानसादौ अनेकवारं धूमवह्न्योः सहचारग्रहानन्तरं महानसीयवह्न्यादौ महानसीयधूमव्यापकत्वं गृह्यते । तदनन्तरं पर्वतीयधूमसाधारणो यो धूमत्वरूपः सामान्यधर्मः तदवच्छिन्ननिरूपितं व्यापकत्वमपि पर्वतीयवह्निसाधारणवह्नित्वावच्छिन्ने सामान्यलक्षणप्रत्यासत्त्या गृह्यते । ततः वह्नित्वावच्छिन्ननिरूपितसामानाधिकरण्यत्वरूपसामान्यलक्षणाप्रत्यासत्त्या पर्वतीयधूमनिष्ठं वह्निसामानाधिकरण्यं ज्ञायते । एतदुक्तं भवति – यथा चक्षुस्संनिकृष्टधूमग्रहणानन्तरं धूमत्वरूपसामान्यप्रत्यासत्त्या सकलधूमग्रहणं भवति, तथा महानसे महानसीयधूमव्यापक-



महानसीयवह्निसामानाधिकरण्यग्रहानन्तरं धूमत्वावच्छिन्नव्यापकतावच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यत्वरूपया सामान्यलक्षणप्रत्यासत्त्या पर्वतीयधूमनिष्ठं पर्वतीयधूमव्यापकपर्वतीयवह्निसामानाधिकरण्यमपि पूर्वं ज्ञातमेव । पश्चात् पर्वते धूमदर्शनानन्तरं पूर्वोक्तव्याप्तिस्मरणात् पर्वतीयवह्न्यनुमितिर्भवितुमर्हतीति ।।

## गादाधरी

**न** च **सामानाधिकरण्यस्य व्याप्तित्वपक्षे हेतुव्यक्तिभेदेन** व्याप्तिभेद आवश्यक एवेति **अनुगतरूपेण हेतुनिवेशो** व्यर्थ इति वाच्यम् । **हेतुव्यक्तिभेदेन** व्याप्तिभेदेऽपि अनुगतरूपेण हेतुनिवेशे धूमव्यापकवह्निप्रतियोगिकधूमनिष्ठसामानाधिकरण्यत्वादिना धूमनिष्ठसकलवह्निसामानाधिकरण्यव्यक्तीनामनुगमात् सामान्यप्रत्यासत्त्या पक्षीयहेतुनिष्ठव्याप्तेरपि प्रथमं ग्रहसंभवेन अनुमित्युपपत्तेः । तत्तद्व्यक्तित्वेन हेतुनिवेशे अननुगमात् सामान्यप्रत्यासत्त्यापि पक्षीयहेतु-निष्ठव्याप्तेः व्याप्तित्वेन दुर्ग्रहतया अनुमित्यनुपपत्तेः ।।

## व्याख्या

हेतुतावच्छेदकस्य धूमत्वादेः सामान्यरूपस्य व्याप्तिघटकत्वेऽपि धूमत्वावच्छिन्नव्यापकवह्निसामानाधिकरण्यस्यैव व्याप्तित्वात् तस्य च आश्रयभूतहेतुव्यक्तिभेदेन भेदात् सकलहेतुव्यक्तिसाधारण्याभावात्, अनुगतेन धूमत्वेन व्याप्तिशरीरे हेतुनिवेशो व्यर्थः । व्याप्तेः सकलधूमगतवह्निसामानाधिकरण्यसंपादनमेव हि तथा निवेशस्य प्रयोजनम् । तच्च तथा हेतुनिवेशेऽपि प्रकारान्तरेण सामानाधिकरण्यरूपव्याप्तिभेदस्यैव सत्त्वात् - इत्याशयेन शङ्कते - **न चेति । सामानाधिकरण्यस्य व्याप्तित्वपक्ष** इति । वक्ष्यमाणस्य साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकस्य व्याप्तित्वपक्षे धूमत्वादिरूपस्य तस्य अनुगतत्वेन उक्तदोषो नास्तीति सूच्यते । **हेतुव्यक्तिभेदेनेति** । महानसीयधूमादिभेदेनेत्यर्थः । **अनुगतरूपेणेति** ।

सकलधूमव्यक्तिसाधारणधूमत्वेनेत्यर्थः । **हेतुनिवेश** इति '। व्यापकत्वनिरूपकतयेति शेषः ।।

उक्तशङ्कां समाधत्ते– **हेतुव्यक्तिभेदेनेत्यादिना** । धूमव्यक्तिभेदेन उक्तसामानाधिकरण्यरूपव्याप्तेः भेदेऽपि व्याप्तिशरीरे धूमत्वेन धूमस्य व्यापकत्व-निरूपकतया निवेशे धूमत्वावच्छिन्नव्यापकवह्निसामानाधिकरण्यस्यैव व्याप्ति-पदार्थत्वात् तस्य च महानसीयधूमाद्याश्रयभेदेन भेदेऽपि धूमत्वावच्छिन्न-व्यापकवह्निसामानाधिकरण्यत्वेन सकलसामानाधिकरण्यव्यक्तीनां एकीकारसंभवात् तादृशधर्मस्य पक्षीयधूमनिष्ठं यत् वह्निसामानाधिकरण्यं तत्साधारणत्वात् महानसीयधूमादौ व्याप्तिग्रहणकाल एव तादृशसाधारणरूपया सामान्यलक्षण-प्रत्यासत्त्या पक्षीयधूमनिष्ठसामानाधिकरण्यरूपव्याप्तेरपि ग्रहणसंभवात् पर्वते धूमदर्शनानन्तरं तत्स्मरणात् अनुमित्युपपत्तिर्भवति । हेतोः तत्तद्व्यक्तित्वेन व्याप्तिघटकत्वे तु तद्धूमव्यापकवह्निसामानाधिकरण्यस्य तद्धूममात्रवृत्तित्वेन धूमान्तरवृत्तित्वाभावेन सामान्यलक्षणप्रत्यासत्त्यापि पक्षीयधूमनिष्ठव्याप्तेः प्रथमं दुर्ग्रहतैवेति अनुमित्यनुपपत्तिरिति भावः ।।

## गादाधरी

हेतुतावच्छेदकाश्रयाधिकरणत्वमुपेक्ष्य तद्विशिष्टनिरूपिताधिकरणत्वप्रवेश-प्रयोजनमग्रे वक्ष्यते ।।

## व्याख्या

नन्वेवमपि यद्रूपाश्रयसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मः तद्धर्माश्रयेण येन केनापि सामानाधिकरण्यं व्याप्तिः इति रीत्यैव लक्षणमस्तु । किं यद्रूपविशिष्टसमानाधिकरणत्वपर्यन्तनिवेशेन । न च विनिगमकाभाव इति वाच्यम् । यद्रूपविशिष्टसमानाधिकरणत्वं हि यद्रूपावच्छिन्न-निरूपिताधिकरणत्वम् ।



तदपेक्षया यद्रूपाश्रयनिरूपिताधिकरणत्वनिवेशे लाघवात् इत्यत आह– **हेतुतावच्छेदकेति** । **अग्रे वक्ष्यत** इति । ''इत्थं च इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्'' इति **दीधितिग्रन्थे** इति शेषः ।।

## गादाधरी

प्रतियोगितानवच्छेदकत्वमात्रेण साध्यतावच्छेदकनिवेशे वह्नित्वत्वादिना वह्नित्वादिकमनवगाहमानात् प्रतियोगितानवच्छेदकवत्समानाधिकरणवान् इत्यादि ज्ञानात् वह्निमान् इत्याद्यनुमितिः स्यात् । न चेष्टापत्तिसंभवः । कदाचित् वह्नित्वेन कदाचित् द्रव्यत्वादिना वह्न्यनुमितिरिति नियमानुपपत्तेः ।।

## व्याख्या

ननु **दीधितौ** हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्न-सामानाधिकरण्यं व्याप्तिः इत्यनुक्त्वा तादृशप्रतियोगितानवच्छेदको यो धर्मः तदवच्छिन्नसामानाधिकरण्यमिति कुत उक्तम् । एतदुक्तं भवति - साध्यतावच्छेदकस्य वह्नित्वादेः प्रतियोगितानवच्छेदकत्वमात्रेण निवेशोऽस्तु वह्नित्वत्वादिरूपेण निवेशो मास्तु इति । न चेष्टापत्तिरिति वाच्यम् । तथा निवेशे पर्वतो वह्निमान् इत्याकारकानुमितिं प्रति धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकाश्रय-समानाधिकरणधूमवान् पर्वतः इत्याकारकः परामर्शः कारणमिति वक्तव्यं स्यात् । न च तथैवोच्यताम् इति वाच्यम् । तादृशपरामर्शस्यानुमितिहेतुत्वे कदाचित् वह्नित्वेन वह्न्यवगाहिनी पर्वतो वह्निमान् इत्यनुमितिः, कदाचित् द्रव्यत्वेन वह्न्यवगाहिनी पर्वतो द्रव्यवान् इत्यनुमितिः इति व्यावस्थायाः अनुपपत्तेः । धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वस्य वह्नित्वे इव द्रव्यत्वेऽपि सत्त्वात् । धूमाधिकरणे पर्वतादौ वह्न्यभावस्येव द्रव्याभावस्यापि असत्त्वात् धूमसमानाधिकरणघटाद्यभावप्रतियोगितानवच्छेदकत्वस्य वह्नित्व इव द्रव्यत्वेऽपि

सत्त्वात् । तत्तदाश्रयसामानाधिकरण्यस्य धूमे सत्त्वात् । परामर्शे हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतया यो धर्मो भासते तस्यानुमितौ विधेयतावच्छेदकतया भानमिति स्वीकारात् इति भावः ।।

### गादाधरी

**न चानवच्छेदकत्वेन** तत्तद्धर्मावगाहित्वमेव व्याप्तिग्रहस्य अनुमितौ विधेयतावच्छेदकतया तत्तद्धर्मभाननियामकमिति वाच्यम् । **अनवच्छेदकत्वेन** वह्नित्वादिभाने द्रव्यत्वादिभानस्यापि प्रायशः संभवात् ।।

### व्याख्या

ननु धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवत्समानाधिकरण-धूमवान् इत्याकारकः परामर्शः अनुमितौ कारणम् । तादृशानवच्छेदकत्वस्य वह्नित्वे द्रव्यत्वे च सत्त्वेऽपि उभयोः तत्र परामर्शे भानमिति नियमाभावात् यदा अनवच्छेदकत्वेन वह्नित्वं भासते, तदा वह्निमान् इत्यनुमितिः, यदा अनवच्छेदकत्वेन द्रव्यत्वं भासते तदा द्रव्यवान् इत्यनुमितिर्भवतीति व्यवस्था संभवतीति शङ्कते– **न चानवच्छेदकत्वेनेति** ।

अनवच्छेदकत्वं तावत् द्रव्यत्ववह्नित्वोभयसाधारणम् । अनवच्छेदकत्वेन रूपेण परामर्शे धर्मभानं चेत्– वह्नित्वभानकाले द्रव्यत्वभानमपि संभवति । मानसप्रत्यक्षरूपपरामर्शे हेतुभूतस्य मनस्संयुक्तसमवायरूपस्य संनिकर्षस्य वह्नित्वे इव द्रव्यत्वेऽपि सद्भावात् । सामान्यधर्मप्रकारकज्ञानस्थले तदाश्रय-विशेषधर्मभानस्य सामग्र्यधीनतया यदा उभयोः विशेषयोः सामग्रीतौल्यं तदा उभयोरपि भानं, न तु एकतरपरिशेषः युक्त इत्याशयेन समाधत्ते– **अनवच्छेदकत्वेनेति**।।

B3



### गादाधरी

**एवं तत्तत्साध्यतावच्छेदकावच्छिन्नव्यभिचारितया हेतुज्ञानस्य** हेतु-समानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमात्रेण तत्तत्साध्यतावच्छेदकावगाहि-व्याप्तिज्ञानांशे **अविरोधितया** विशिष्य साध्यतावच्छेदकानवगाहिव्याप्तिज्ञानस्य हेतुत्वे व्यभिचारस्य हेत्वाभासत्वानुपपत्तिश्चेति विशिष्य साध्यतावच्छेदकस्य व्याप्तिघटक-तालाभाय प्रतियोगितानवच्छेदकावच्छिन्नेनेत्यनुक्त्वा प्रतियोगितान-वच्छेदको यो **धर्मः तदवच्छिन्नेनेत्युक्तम्** ।।

### व्याख्या

ननु हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवत्समानाधिकरण-हेतुमान् पक्ष इत्याकारकव्याप्तिज्ञानस्य नानुमितिहेतुत्वमिति ब्रूमः । येन धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वस्य वह्नित्वद्रव्यत्वोभयोः सत्त्वात् तादृशव्याप्तिज्ञानात् कदाचित् वह्निमान् कदाचित् द्रव्यवानित्यनुमितिरिति व्यवस्था न स्यात् । अपि तु निरुक्तव्याप्तिघटकानवच्छेदकधर्मितावच्छेदकतया यो धर्मो भासते स धर्मोऽनुमितौ विधेयतावच्छेदकतया भासत इति नियमः स्वीक्रियते । तथा च पर्वतो वह्निमान् इत्यनुमितौ धूमसमानाधिकरणात्यन्ता-भावप्रतियोगितानवच्छेदकवद्वह्निसमानाधिकरणधूमवान् पर्वत इति व्याप्तिज्ञानं कारणम् । अत्र ज्ञाने हि अनवच्छेदकस्य धर्मितया वह्नित्वेन वह्नेर्भानात् अनवच्छेदकधर्मितावच्छेदकतया वह्नित्वं भासत इति तादृशज्ञानात् पर्वतो वह्निमान् इत्यनुमितिः भवति ।।

एवं पर्वतो द्रव्यवान् इत्यनुमितौ धूमसमानाधिकरणात्यन्ताभाव-प्रतियोगितानवच्छेदकवद्द्रव्यसमानाधिकरणधूमवान् पर्वत इति व्याप्तिज्ञानं कारणम् । अत्र ज्ञाने अनवच्छेदकस्य धर्मितया द्रव्यत्वेन द्रव्यस्य भानात्

अनवच्छेदकधर्मितावच्छेदकतया द्रव्यत्वं भासत इति तादृशज्ञानात् पर्वतो द्रव्यवान् इत्याकारकानुमितिर्भवति । अतो नाव्यवस्था इत्याशङ्क्य दूषणान्तरमाह– **एवमित्यादिना** ।।

अयमाशयः - पर्वतो धूमवान् वह्नेरिति व्यभिचारिहेतुस्थले व्याभिचार-ज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वमिष्टम् । तत्र पर्वतः वह्निसमानाधिकरणात्यन्ता-भावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नसमानाधिकरणो वह्निः इत्याकारकं व्यभिचारज्ञानम् । वह्न्यधिकरणायोगोलके धूमाभावसत्त्वात् तत्प्रतियोगितावच्छेदकं यत् धूमत्वं तदवच्छिन्नाधिकरणपर्वतवृत्तित्वस्य वह्नौ सत्त्वात् । इदं व्यभिचार-ज्ञानं वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नसमानाधि-करणो वह्निः इत्याकारकव्याप्तिज्ञानस्यैव प्रतिबन्धकं, न तु वह्निसमानाधि-करणात्यन्ताभावप्रतियोगितानवच्छेदकवद्धूमसमानाधिकरणो वह्निः इत्याकारकज्ञानस्य प्रतिबन्धकमिति व्यभिचारस्य हेत्वाभासत्वं न स्यात् । व्याप्तिज्ञानप्रतिबन्धकज्ञान-विषयस्यैव व्यभिचाररूपहेतुदोषत्वात् इति ।।

**तत्तत्साध्यतावच्छेदकावच्छिन्नव्यभिचारितया हेतुज्ञानस्येति** । वह्नि-समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नसमानाधिकरणो वह्निः इत्याकारकव्यभिचारज्ञानस्येत्यर्थः । अनवच्छेदकत्वमात्रेणेति मात्रपदेन धूमत्वत्वव्य-वच्छेदः । **अविरोधितयेति** । समानधर्मितावच्छेदककज्ञानयोरेव प्रतिबध्यप्रति-बन्धकभावस्वीकारात् ''धूमत्वं वह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकं'' इत्याकारकव्यभिचारज्ञानस्य धूमत्वत्वधर्मितावच्छेदककस्य ''धूमत्वं वह्निसमानाधि-करणात्यन्ताभावप्रतियोगितानवच्छेदक''मिति ज्ञानं प्रत्येव प्रतिबन्धकत्वम् । भवदुक्तव्याप्तिज्ञाने तु धूमत्वमनवच्छेदकत्वरूपेण भासते, न तु धूमत्वत्वेन । अतः व्याप्तिज्ञानव्यभिचारज्ञानयोः समानधर्मितावच्छेदककत्वाभावात् प्रतिबध्य-



प्रतिबन्धकभावो न स्यात् । ततश्च व्यभिचारस्य हेत्वाभासत्वं न स्यादित्याशयः । **विशिष्येति** । वह्नित्वत्वधूमत्वत्वादिरूपेणेत्यर्थः ।।

ननु व्यभिचारस्य हेत्वाभासत्वरक्षणार्थं व्याप्तौ गौरवाङ्गीकारो न युक्तः । तस्य हेत्वाभासत्वाभावे इष्टापत्तिसंभवात् इति चेत्– तर्हि सर्वत्र व्यभिचार-ज्ञानकाले निर्बाधा व्याप्तिधीः स्यात् । पूर्वोक्तव्याप्तिज्ञानस्य व्यभिचारज्ञाना-प्रतिबध्यत्वात् । न हि व्यभिचारज्ञानदशायां कोऽपि व्याप्तिनिश्चयमुपैति ।।

**यो धर्मः तदवच्छिन्नेनेत्युक्तमिति** । तथा च हेत्वधिकरणवृत्त्यत्यन्ता-भावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः । पर्वतो वह्निमान् धूमात् इत्यत्र धूमाधिकरणवृत्त्यत्यन्ताभावप्रतियोगि-तानवच्छेदकवह्नित्वावच्छिन्नवह्निसामानाधिकरण्यं धूमनिष्ठा वह्निव्याप्तिः । पर्वतो वह्निमान् इत्यनुमितिं प्रति धूमाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदक-वह्नित्वावच्छिन्नाधिकरणवृत्तिः धूमः इत्याकारकं व्याप्तिज्ञानं कारणम् । अत्र ज्ञाने प्रतियोगितानवच्छेदकत्वधर्मितावच्छेदकतया वह्नित्वत्वं भासते । पर्वतो द्रव्यवान् इत्यनुमितिं प्रति धूमाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकद्रव्यत्वा-वच्छिन्नसमानाधिकरणो धूमः इति ज्ञानं कारणम् । अत्र ज्ञाने प्रतियोगितान-वच्छेदकत्वधर्मितावच्छेदकतया द्रव्यत्वत्वं भासते इति स्थितम् ।।

## गादाधरी

**यत्र वह्नित्वत्वादि**विशेषणावच्छिन्नस्य साध्यतावच्छेदकता तत्र **तेन तेन रूपेणैव** तत्तद्धर्माणां **व्याप्तिघटकता** । यत्र **स्वरूपत एव** वह्नित्वाद्यखण्ड-धर्माणां साध्यतावच्छेदकत्वं तत्रापि विशेषणावच्छिन्नतत्तद्धर्मघटिततत्तद्धर्म-वदितरावृत्तित्वरूपवह्नित्वत्वादिना **तन्निवेशो न तु स्वरूपत एव** ।

अनवच्छेदकत्वरूपविशेषणपुरस्कारेण भाने **निर्विशेषणकभाना**त्मकस्य स्वरूपतो भानस्य असंभवात् ।।

### व्याख्या

ननु व्याप्तौ साध्यतावच्छेदकतावच्छेदकवह्नित्वत्वादिरूपेण साध्यता-वच्छेदकस्य वह्नित्वादेः प्रवेशे अनुमितावपि वह्नित्वत्वादिरूपेणैव वह्नित्वादेः भानं स्यात् । तथा च पर्वतो वह्नित्ववद्वान् इत्येव अनुमितिः स्यात् । स्वरूपतो वह्नित्वप्रकारकवह्निमान् इत्याकारकानुमितिः न स्यात् । व्याप्तिज्ञाने साध्यतावच्छेदकस्य यादृशं भानं तादृशमेव तस्यानुमितावपि भानमिति नियमादित्याशङ्कां समाधत्ते– **यत्र वह्नित्वत्वादीत्यादिना** । अयं भावः– वह्नित्वत्वं तावत् द्विविधं वह्नीतरावृत्तित्वं वह्नित्ववदितरावृत्तित्वं चेति । तत्र आद्यं स्वरूपतो वह्नित्वघटितम्, वह्न्यंशे स्वरूपतो वह्नित्वप्रवेशात् । द्वितीयं वह्नित्वत्वेन वह्नित्वघटितम्, तत्र वह्नौ वह्नित्वस्य वह्नित्वत्वेन प्रवेशात् । तथा च स्वरूपतो वह्नित्वविधेयतावच्छेदकक ''वह्निमान्'' इत्यनुमितिं प्रति स्वरूपतो वह्नित्वघटित– वह्नीतरावृत्तित्वरूपवह्नित्वत्वावच्छिन्ने धूमसमानाधिकरणात्यन्ता-भावप्रतियोगितानवच्छेदकत्वावगाहिव्याप्तिज्ञानं कारणम् । धूमसमानाधि-करणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नीतरावृत्तिमदाश्रयसमानाधिकरणधूमवान् पर्वतः इति ज्ञानं कारणमिति यावत् । वह्नित्वत्वेन वह्नित्वविधेयतावच्छेदकक– ''पर्वतो वह्नित्ववद्वान्'' इत्याकारकानुमितिं प्रति वह्नित्वत्वेन वह्नित्वघटित-वह्नित्ववदितरावृत्तित्वरूप-वह्नित्वत्वावच्छिन्ने धूमसमानाधिकरणात्यन्ताभाव-प्रतियोगितानवच्छेदकत्वावगाहिव्याप्तिज्ञानं कारणम् । धूमसमानाधिकरणात्यन्ता-भावप्रतियोगितानवच्छेदकवह्नित्ववदितरावृत्तिमदाश्रयसमानाधिकरणधूमवान् पर्वत इति ज्ञानं कारणमिति यावत् इति ।।



**तेन तेन रूपेणैवेति** । वह्नित्वत्वादिनेत्यर्थः । **व्याप्तिघटकता** – व्याप्तिघटकानवच्छेदकत्वधर्मितावच्छेदकघटकता । **स्वरूपत एवेति** । वह्नित्व-त्वाद्यनवच्छिन्नेन वह्नित्वादिना घटितं यत् वह्नीतरावृत्तित्वत्वरूपं वह्नित्वत्वं तेनैव वह्नित्वस्य अनवच्छेदकत्वविशेष्यतया निवेशः, न तु स्वरूपत इत्यर्थः ।।

ननु पर्वतो वह्निमान् इत्याकारकानुमित्यौपयकव्याप्तिशरीरे अनवच्छेद-कत्वधर्मितया वह्नित्वस्य स्वरूपत एव कुतो न निवेश इत्यत्राह– **न तु** इति । **स्वरूपत** एवेत्यनन्तरं **तन्निवेश** इत्यनुषज्यते । **निर्विशेषणकभानेति** । जातेर्यत्र विशेष्यतया भानं तत्र तस्याः किंचिद्रूपेणैव भानमिति नियमादिति भावः ।।

### गादाधरी

**वन्ह्यादीतरावृत्तित्वस्य** वन्ह्यादिमात्रवृत्ति**धर्मान्तर**साधारण्येऽपि **तन्मात्रपुरस्कारेण** व्यापकतावच्छेदकत्वग्रहस्यापि वन्हित्वाद्यवच्छिन्न-विधेयकानुमितिहेतुत्वम् उपेयते, सकलवन्ह्यादिवृत्तित्वविषयतानिवेशे **गौरवात्, सकलवन्ह्यादिवृत्तित्वस्य** वन्ह्यादीतरवृत्तिसाधारणतया तन्मात्रपुरस्कारेण व्यापकतावच्छेदकत्वग्रहस्य न हेतुतासंभवः । तथा सति इन्धनादिहेतुनापि वन्हित्वाद्यवच्छिन्नानुमितिप्रसङ्गात्, सकलवन्ह्यादिवृत्तिद्रव्यत्वादौ इन्धनादि-व्यापकतावच्छेदकत्वसत्त्वात् ।।

**वन्हित्वादिनिष्ठ**तद्व्यक्तित्वधूमजनकतावच्छेदकजातित्वादेः वन्हित्वादि-मात्रवृत्तित्वेऽपि तेन रूपेण व्यापकतावच्छेदकत्वग्रहात् ''वन्हिमान्'' इत्याद्यनुमितिः अनुभवविरुद्धा । येन रूपेण उपस्थिते वन्हित्वादौ वन्ह्यादीतर-साधारण्यसंशयः न जायते, तत्पुरस्कारेण व्यापकतावच्छेदकत्वग्रहादेव उक्तानुमित्युत्पादानुभवात् ।।

## व्याख्या

ननु वह्नित्वत्वरूपेण वह्नित्वस्य व्याप्तिघटकत्वे वह्नित्वत्वस्य वह्नीतरावृत्तित्वे सति सकलवह्निवृत्तित्वरूपतया सकलवह्निवृत्तित्वांशपरित्यागेन वह्नीतरावृत्तित्वमात्रेण वह्नित्वस्य निवेशः कुतः । किं च वह्नीतरावृत्तित्वमात्रस्य वह्निमात्रवृत्तितार्णत्वतद्व्यक्तित्वादिसाधारणतया तेष्वपि यदा अनवच्छेदकत्वग्रहः तदापि वह्निमान् इत्यनुमितिः स्यादित्यत्राह– **वह्न्यादीतरावृत्तित्वस्येति** । **धर्मान्तरेति** । तार्णत्वतद्व्यक्तित्वादीत्यर्थः । **तन्मात्रपुरस्कारेणेति** । वह्न्यादीतरावृत्तित्वमात्ररूपेणेत्यर्थः । मात्रपदेन सकलवह्निवृत्तित्वव्यवच्छेदः । तथा च वह्निवृत्तौ वह्नित्वेतरतार्णत्वादिधर्मेऽपि वह्नीतरावृत्तित्वेन व्यापकतावच्छेदकत्वग्रहात् वह्निमान् इत्यनुमितिः इष्टैवेति भावः ।।

सकलवह्निवृत्तित्वांशपरित्यागे हेतुमाह– **गौरवादिति** ।

तर्हि सकलवह्निवृत्तित्वेनैव वह्नित्वे व्यापकतावच्छेदकत्वग्रहस्यानुमितिहेतुत्वमस्तु । वह्नीतरावृत्तित्वांशः परित्यज्यतामित्यत आह– **सकलवह्निवृत्तित्वस्येति** । तथा सति सकलवह्निवृत्तित्वस्य द्रव्यत्वेऽपि सत्त्वेन धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसकलवह्निमत्समानाधिकरणधूमवानिति ज्ञानात् पर्वतो वह्निमान् इत्यनुमितेरिव, इन्धनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसकलवह्निवृत्तिमत्समानाधिकरणेन्धनवान् पर्वत इति ज्ञानादपि पर्वतो वह्निमान् इत्यनुमितिसंभवात् ''पर्वतो वह्निमान्, इन्धनवत्त्वात्'' इत्यपि प्रयोगप्रसङ्गः। न चेष्टापत्तिः । इन्धनस्य वह्निव्यभिचारित्वेन अभ्रान्तानां तल्लिङ्गकानुमितिस्वीकारा-संभवात् ।।

तस्मात् वह्नीतरावृत्तित्वेनैव वह्नित्वे हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वग्रहस्य पर्वतो वह्निमान् इत्यनुमितिं प्रति कारणत्वं स्वीकरणीयम् । तथा सति द्रव्यत्वस्य वह्नीतरवृत्तित्वेन तस्य व्यापकतावच्छेदकतभावानं न संभवतीति इन्धनादिना हेतुना न पर्वतो वह्निमान् इत्यनुमित्यापत्तिरिति भावः ।।



ननु वह्नित्वमात्रवृत्ति यत् तद्व्यक्तित्वं तेन रूपेण वह्नित्वे धूमव्यापकतावच्छेदकत्वावगाहिज्ञानस्यैव– ''धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्व्यक्तिमत्समानाधिकरणधूमवान् पर्वत'' इत्याकारकज्ञानस्यैव वह्निमानित्यनुमितिहेतुत्वमस्तु, वह्नीतरावृत्तित्वापेक्षया तद्व्यक्तित्वस्य लघुत्वात् इत्याशङ्क्याह– **वह्नित्वनिष्ठेति** । एवं धूमजनकतावच्छेदकजातित्वमपि वह्नित्वमात्रवृत्तीति तेन रूपेण व्यापकतावच्छेदकत्वविषयकज्ञानस्यैव धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधूमजनकतावच्छेदकजातिमत्समानाधिकरणधूमवान् पर्वत इत्याकारकज्ञानस्य हेतुत्वमस्त्वित्यपि शङ्का । तत्र समाधानमेवम्– येन रूपेणोपस्थिते वह्नित्वे वह्नीतरवृत्तित्वसंशयो नोत्पत्तुमर्हति तद्रूपप्रकारेण धूमव्यापकतावच्छेदकत्वग्रहादेव पर्वतो वह्निमान् इत्यनुमितिर्जायते इत्यनुभवो वर्तते । वह्नित्वं वह्नीतरवृत्तीति संशयः वह्नित्वं वह्नीतरावृत्तीति ज्ञानेनैव प्रतिबध्यते, न तु वह्नित्वं तद्व्यक्तित्ववत् इति ज्ञानेन वा, वह्नित्वं धूमजनकतावच्छेदकजातित्ववत् इति ज्ञानेन वा प्रतिबध्यते । अतः तद्व्यक्तित्वावच्छिन्ने धूमजनकतावच्छेदकजातित्वावच्छिन्ने वा धूमव्यापकतावच्छेदकत्वज्ञानात् वह्निमान् इत्यनुमितिर्न भवितुमर्हतीति भावः ।।

एतदुक्तं भवति– यादृशधर्मविषयकत्वं वह्नीतरवृत्तित्वग्रहप्रतिबन्धकतावच्छेदकं तादृशधर्मपुरस्कारेण हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वग्रहः कारणमिति ।।

### गादाधरी

**अत एव** ज्ञानत्वत्वानुभवत्वव्यापकगुणत्वव्याप्यजातित्वयोः अविशेषेण ज्ञानत्वत्वेन रूपेण व्यापकतावच्छेदकत्वग्रहात् ज्ञानवान् अयम् इत्यनुमितिर्न भवितुमर्हतीति **दीधितिकार**वक्ष्यमाणदूषणं प्रत्युक्तम् । अधिकमग्रे वक्ष्यामः ।।

### व्याख्या

**अत एवेति** । साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्ने हेतुव्यापकतावच्छेदकत्वप्रकारकव्याप्तिज्ञानस्य अनुमितिहेतुत्वाङ्गीकारे स्वरूपतो वह्नित्वविधेयतावच्छेदककानुमितौ नियामकविशेषस्य कथनादेवेत्यर्थः । अस्य प्रत्युक्तमित्युत्तरेणान्वयः । अयं भावः - हेतुव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपव्याप्तिज्ञानस्य अनुमितिकारणत्वाङ्गीकारे ''अयमात्मा ज्ञानवान् आत्मत्वात्'' इत्यत्र स्वरूपतो ज्ञानत्वविधेयतावच्छेदकताकानुमितिर्न निर्वहति । आत्मत्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकज्ञानत्वावच्छिन्नसमानाधिकरणात्मत्ववान् आत्मा इत्याकारकपरामर्शस्यानुमितिहेतुतया तत्र प्रतियोगितानवच्छेदकत्वधर्मितावच्छेदकतया ज्ञानत्वत्वस्य भानावश्यंभावात् तेन रूपेणैवानुमितौ ज्ञानत्वभानमावश्यकमिति अयं ज्ञानत्ववद्वान् इत्येव अनुमितिः स्यात् न तु ज्ञानवानिति । एवं ज्ञानत्वत्वं यथा ज्ञानत्वमात्रवृत्ति तथा अनुभवत्वव्यापकगुणत्वव्याप्यजातित्वमपि ज्ञानत्वमात्रवृत्तीति तदवच्छिन्ने आत्मत्वव्यापकता-वच्छेदकत्वावगाहिज्ञानस्यापि कारणत्वं वाच्यमिति ततः अयम् अनुभवत्वव्यापकगुणत्वव्याप्यजातित्ववद्वान् इत्येवानुमितिः स्यात् न तु ज्ञानवानिति । अत्र सत्ताव्यावर्तनाय गुणत्वव्याप्यत्वनिवेशः । रूपत्वादिव्यावर्तनाय अनुभवत्वव्यापकत्वनिवेशः । अतो व्यापकत्वावच्छेदकत्वघटितव्याप्तिलक्षणं न युक्तम् इति **केवलान्वयिग्रन्थे दीधितिकारो** वक्ष्यति । तत् दूषणं न लगति ।



पूर्वोक्तरीत्या ज्ञानत्वत्वं द्विविधं, ज्ञानेतरावृत्तित्वं ज्ञानत्ववदितरावृत्तित्वं चेति द्विधा निरुच्य अयं ज्ञानत्ववद्वान् अथ वा ज्ञानवान् इति अनुमितिद्वयस्यापि निर्वोढुं शक्यत्वादिति भावः ।।

अपि च ज्ञानत्वत्व– अनुभवत्वव्यापकगुणत्वव्याप्यजातित्वयोरविशेषेणेति यदुक्तं तदपि न संगच्छते । अविशेषेणेत्यस्य हि ज्ञानेतरावृत्तित्वाविशेषेणेत्यर्थः । तत्र उभयोः उक्ताविशेषेऽपि, ज्ञानत्वे येन रूपेणोपस्थिते ज्ञानेतरसाधारण्यसंशयो नोत्पद्येत तादृशरूपस्यैव विवक्षितत्वेन अनुभवत्वव्यापकगुणत्वव्याप्यजातित्वेन ज्ञानत्वोपस्थितावपि ज्ञानत्वे ज्ञानेतरवृत्तित्वसंशयसंभवेन तस्य ज्ञानेतरवृत्तित्वसंशयप्रतिबन्धकतावच्छेदकप्रकारताशालित्वविरहात् ।।

तथा चैतत् सिद्धम्– अयमात्मा ज्ञानवान् आत्मत्वात्, आत्मा ज्ञानत्ववद्वान् आत्मत्वात् इत्यत्र ज्ञानत्वस्य स्वरूपतः ज्ञानत्वत्वेन च भानम् एवं निर्वहणीयम्-आत्मत्वव्यापकतावच्छेदक - ज्ञानत्ववदितरावृत्तिधर्मवत्समानाधिकरणात्मत्ववान् इति ज्ञानात् अयं ज्ञानत्ववद्वान् इत्यनुमितिः । आत्मत्वव्यापकतावच्छेदक - ज्ञानेतरावृत्तिमत्समानाधिकरणात्मत्ववान् इति ज्ञानात् अयं ज्ञानवान् इत्यनु-मितिरिति ।।

### गादाधरी

**तत्तद्व्यक्ति**सामानाधिकरण्यं न **तत्तद्व्यक्तिगमकता**प्रयोजकम् । पर्वतीयधूमे महानसीयवह्निसामानाधिकरण्याग्रहेऽपि ततः पर्वते लाघवज्ञानादिवशात् महानसीयवह्न्यनुमितेरिति दर्शयति– **येन केनापि यावन्निरूपितेत्याभ्याम्** । **तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरिति** । **तद्रूपावच्छिन्नस्य तद्धर्मावच्छिन्नयावद्व्यक्ति**गमकताप्रयोजिका व्याप्ति-

रित्यर्थः । **यथाश्रुते** एकसाध्यव्यक्तिसामानाधिकरण्यस्यापरव्यक्तिप्रतियोगिकत्वासंभवेनासंगतेः ।।

### व्याख्या

**दीधितौ** तद्धर्मावच्छिन्नसामानाधिकरण्यमित्यनुक्त्वा तद्धर्मावच्छिन्नेन येन केनापीत्युक्तेः यावन्निरूपितेत्युक्तेश्च फलं दर्शयति - **तत्तद्व्यक्तीति** । महानसीयवह्न्यादिसामानाधिकरण्यम् । **तत्तद्व्यक्तिगमकतेति** । महानसीयवह्न्यादिव्यक्तिविषयकानुमितिजनकताप्रयोजकमित्यर्थः ।।

अयमत्राशयः– साध्यसामानाधिकरण्यं हेतुनिष्ठा व्याप्तिरित्युक्ते पर्वते वह्न्यनुमितिं प्रति पर्वतीयधूमे पर्वतीयवह्निसामानाधिकरण्यं प्रयोजकम् । एवं महानसीयवह्न्यनुमितौ महानसीयधूमे महानसीयवह्निसामानाधिकरण्यं प्रयोजकम् इति वक्तव्यम् । तथा सति पर्वतीयधूमे महानसीयवह्निसामानाधिकरण्यस्याज्ञानेऽपि वह्नित्वाश्रयपर्वतीयवह्निसामानाधिकरण्यज्ञानादपि वह्नेः महानसीयत्वे लाघवमिति लाघवज्ञानसहकृतात् पर्वतो महानसीयवह्निमान् इत्यनुमितिरिष्यते । सा न स्यात् । पर्वतीयधूमे वह्निसामानाधिकरण्यस्य अज्ञानात् । अतो येन केनापि सामानाधिकरण्यमित्युक्तम् । तथा च व्यक्तिनियमो नापेक्षित इति । तद्धर्माश्रयसाध्यतावच्छेदकधर्माश्रययत्किंचिद्व्यक्तिनिरूपितसामानाधिकरण्यमेव हेतोः यावत्साध्यव्यक्तिगमकताप्रयोजकमितीष्यते । तद्धर्माश्रयतद्व्यक्तिसामानाधिकरण्यं यावद्व्यक्तिगमकताप्रयोजकम् इत्युक्तावपि व्यक्त्यन्तरसामानाधिकरण्यस्य अप्रयोजकतापत्तिः । अतः अनियमेन सामानाधिकरण्यसामान्यस्य प्रयोजकतालाभाय **येन केनापीति** । एवं तद्व्यक्तिगमकताप्रयोजकमित्युक्तौ व्यक्त्यन्तरागमकत्वं लभ्येत । अतो **यावन्निरूपितेति** । तदेव स्पष्टयति - **तद्रूपावच्छिन्नस्येति** । हेतुतावच्छेदकधर्मावच्छिन्नस्येत्यर्थः । **तद्धर्मावच्छिन्नयावद्व्यक्तीति** ।



साध्यतावच्छेदकविशिष्टयावद्व्यक्तीत्यर्थः । यावदित्यस्य सकलेत्यर्थः । यथाश्रुतार्थे बाधकमाह– **यथाश्रुते** इति । तद्रूपविशिष्टनिष्ठं तद्धर्मावच्छिन्नेन येन केनापि सामानाधिकरण्यं तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्युक्तौ यत्किंचित्साध्यव्यक्तिसामानाधिकरण्यस्य धूमनिष्ठस्य यावद्वह्नि व्यक्तिप्रतियोगिकत्वाभावेनासंगतिः स्यात् । अतो यावन्निरूपितेत्यस्य यावद्व्यक्तिगमकताप्रयोजिकेत्यर्थ इत्युक्तमिति भावः ।।

### दीधितिः

**दण्ड्यादौ** साध्ये **परम्परासंबद्धं** दण्डत्वादिकमेव **साध्यतावच्छेदकम्** । अतो नाव्याप्तिः ।।

### गादाधरी

**यत्र एकापि** साध्यतावच्छेदकव्यक्तिर्न सकलहेतुमद्वृत्तितावच्छेदिका तत्रानुगतरूपावच्छिन्नेनापि तेन रूपेण न तादृशहेतुव्यापकतासंभवः, सकलसाध्यतावच्छेदकव्यक्तीनामेव चालिनीन्यायेन हेतुसमानाधिकरणतद्व्यक्त्यवच्छिन्नाभावप्रतियोगितावच्छेदकत्वात् इत्याशङ्काम् इष्टापत्त्या परिहरति - **दण्ड्यादाविति** । **परम्परासंबद्धमिति** । **स्वसमवायि**संयोगादिसंबन्धेन साध्यसंबद्धमित्यर्थः । **एतच्च** साध्यावृत्तितया दण्डत्वादेः न व्यापकतावच्छेदकत्वसंभव इत्याशङ्कानिराकरणाय । **साध्यतावच्छेदकम्** – **दण्डिसंयोगत्वादि**रूपनानाधिकरणवृत्तितावच्छेदकावच्छिन्नहेतुव्यापकतावच्छेदकमित्यर्थः । एवकारेण दण्डादिरूपसखण्डधर्मव्यवच्छेदः । तथा च तत्र प्रतियोगितानवच्छेदकत्वस्य दुरुपपादत्वेऽपि **न क्षतिः** । **दण्डत्वादिनैव** प्रकारेण तद्धेतुकदण्ड्याद्यनुमितेरुपगन्तव्यत्वात् । **दण्डादौ** व्यापकतावच्छेदकत्वभ्रमादेव दण्डादिप्रकारकदण्ड्याद्यनुमितेरुपगमात् ।।

### व्याख्या

एतावता हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति निष्कृष्टम् । एतदुपरि

नानाव्यक्ति साध्यतावच्छेदककसद्धेतावव्याप्तिरिति शङ्का । तथा हि– अयं प्रदेशः दण्डिमान् दण्डिसंयोगात् इत्ययं सद्धेतुः । दण्डी – दण्डवान् पुरुषः । तत्संयोगः गृहे भूतले वा वर्तते । तत्र दण्डवान् पुरुषो वर्तते । दण्डिसंयोगः समवायेन हेतुः । दण्डी संयोगेन साध्यः । अयं सद्धेतुः । अत्र उक्तव्याप्तिलक्षणं नास्तीति अव्याप्तिः । अत्र दण्डिनः अनेके, दण्डाश्च अनेके । एतद्दण्डवत्पुरुषसंयोगवति एतद्देशे तद्दण्डवतः पुरुषस्य संयोगेनाभावो वर्तते । तत्प्रतियोगी तद्दण्डवान् पुरुषः तत्प्रतियोगितावच्छेदकः तद्दण्डः । एवं तद्दण्डवत्पुरुषसंयोगरूपहेतुमति तद्भूतले एतद्दण्डवत्पुरुषस्य संयोगसंबन्धेन अभावो वर्तते । तत्प्रतियोगी एतद्दण्डवत्पुरुषः । तत्प्रतियोगितावच्छेदकः एतद्दण्डः । एवंरीत्या चालिनीन्यायेन सर्वेषामपि साध्यतावच्छेदकानां दण्डानां हेत्वधिकरणवृत्त्यभावप्रतियोगिता-वच्छेदकत्वमेवास्ति, न तु तदनवच्छेदकत्वमित्यव्याप्तिः इति शङ्का । तत्समाधानार्थं **दण्ड्यादौ साध्ये** इत्यादिः **दीधितिग्रन्थः** प्रवृत्तः । अव्याप्तिवारणप्रकारस्तु– दण्डिमान् दण्डिसंयोगात् इत्यत्र साध्यो दण्डी । साध्यतावच्छेदकं तु दण्डत्व-मिति । न च साध्ये दण्डिनि दण्डस्य सत्त्वेऽपि दण्डत्वस्याभावात् कथं तस्य साध्यतावच्छेदकत्वमिति वाच्यम् । दण्डत्वस्य स्वाश्रयसंयोगरूपपरंपरासंबन्धेन दण्डिनि पुरुषे सत्त्वात् साध्यतावच्छेदकत्वसंभवात् । एवं च दण्डिसंयोगवति अत्र भूतले तद्दण्डवत्पुरुषाभावस्य सत्त्वेऽपि स्वाश्रयसंयोगसंबन्धेन दण्डत्व-वान्नास्तीति प्रतीतिसिद्धः स्वाश्रयसंयोगसंबन्धावच्छिन्न**दण्डत्वनिष्ठावच्छेदकताक**-प्रतियोगिताकाभावो नास्ति । तेन संबन्धेन दण्डत्ववतः एतद्दण्डिपुरुषस्यैव सत्त्वात् तदभावासंभवात् । एवं तद्दण्डिमति भूतले एतद्दण्डवान् नास्तीति प्रतीतिसिद्धस्य एतद्दण्ड्यभावस्य सत्त्वेऽपि उक्तपरंपरासंबन्धेन दण्डत्ववान्नास्ति इति प्रतीतिसिद्धः अभावः नास्ति । तेन संबन्धेन दण्डत्ववतः पुरुषान्तरस्य तत्र



सत्त्वात् । तथा च तत्तद्दण्डानां हेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वेऽपि दण्डत्वस्य प्रतियोगितानवच्छेदकत्वमस्तीति नाव्याप्तिः इति **दीधितिग्रन्थाशयः** । उक्तमेव सावतरणं स्पष्टयति गादाधर्यां **यत्र एकापीत्यादिना** ।।

न च उक्तस्थले तत्त्वैतत्त्वादिविशिष्टदण्डे हेतुमद्वृत्त्यत्यन्ताभावप्रतियोगिता-वच्छेदकत्वसत्त्वेऽपि दण्डत्वविशिष्टदण्डे साध्यतावच्छेदके प्रतियोगितावच्छेदकत्वा-भावसत्त्वात् नाव्याप्तेः प्रसक्तिः इति वाच्यम् । विशेष्यवृत्तिधर्मप्रतियोगिक-विशिष्टानुयोगिकाभावानङ्गीकारात् केनापि रूपेण विशेष्ये दण्डे प्रतियोगिता-वच्छेदकत्वसत्त्वे रूपान्तरविशिष्टे तदभावासंभवादित्याशयेनाव्याप्तिप्रसञ्जनात् ।।

**स्वसमवायीति** । समवायसंबन्धेन स्वाश्रयेत्यर्थः । **एतच्चेति** । परं-परासंबद्धेति दण्डत्वविशेषणमित्यर्थः । साध्यसंबद्धधर्मस्यैव व्यापकतावच्छेदकत्व-नियमादिति भावः ।।

ननु साध्यतावच्छेदकमिति **दीधिति**ग्रन्थस्य व्यापकतावच्छेदकमित्यर्थ-वर्णनं किमर्थम् । यथाश्रुतार्थाङ्गीकारे किं बाधकमिति चेत्– उच्यते । पूर्वोक्तरीत्या अव्याप्तिशङ्कायाः परिहारार्थं खलु अयं ग्रन्थः । स च व्यापकतावच्छेदकत्वोपपादनेनैव भवेदिति तात्पर्यार्थतया व्यापकतावच्छेदकमित्यर्थः कथितः । व्याप्तिज्ञाने व्यापकतावच्छेदकतया यो धर्मो भासते, स एव हि अनुमितौ साध्यतावच्छेदकतया भासते । साध्यतावच्छेदकमित्युक्तावपि एतादृशांशोपपादनं विना अव्याप्तिपरिहारा-संभवात् । **सखण्डधर्मव्यवच्छेद** इति । दण्डादिरूपस्य धर्मस्य साध्यता-वच्छेदकत्वव्यवच्छेद इत्यर्थः । **दण्डिसंयोगत्वादिति** । दण्डिसंयोगत्वाक्रान्तानां नानादण्डिसंयोगानां प्रत्येकं नानाधिकरणवृत्तित्वात् दण्डिसंयोगत्वं नानाधिक[illegible]-वृत्तितावच्छेदकं भवति । तदवच्छिन्नो हेतुः तद्व्यापकतावच्छेदकं परंप[illegible] दण्डत्वमित्यर्थः । **न क्षतिरिति** । साध्यतावच्छेदकधर्मे एव हेतुसमानाधिकर[illegible]

प्रतियोगितानवच्छेदकत्वमपेक्षितम् । साध्यतावच्छेदकं चात्र दण्डत्वमेव । तत्र च पूर्वोक्तरीत्या प्रतियोगितानवच्छेदकत्वमक्षतमेवेति भावः ।।

नन्वेवं सति दण्डिमान् इत्याकारकानुमितिर्न स्यात् । तद्धर्मावच्छिन्न-विधेयताकानुमितिं प्रति तद्धर्मे हेतुव्यापकतावच्छेदकत्वावगाहिपरामर्शस्य कारणतया प्रकृते दण्डत्वस्यैव हेतुव्यापकतावच्छेदकत्वसमर्थनेन तत्रैव तदवगाहिज्ञानात् दण्डत्वावच्छिन्नविधेयताशालिन्याः दण्डत्ववद्वान् इत्यनुमितेरेव संभवात् इति शङ्काम् इष्टापत्त्या परिहरति– **दण्डत्वादिनैवेति** । अस्य दण्डिन्यन्वयः । दण्डत्वप्रकारकदण्डिविशेष्यकानुमितेरित्यर्थः । प्रकारतावच्छेदकसंबन्धः स्वसमवायि-संयोगः । स्वसमवायिसंयोगसंबन्धावच्छिन्नदण्डत्वनिष्ठप्रकारतानिरूपितदण्डिनिष्ठ-संयोगसंबन्धावच्छिन्नविधेयताकानुमितेरुपगमादिति भावः ।।

नन्वेवं सति दण्डिमान् इत्यनुमितिः कथमपि न स्यादित्यत आह– **दण्डादाविति** । तथा च दण्डादौ हेतुव्यापकतावच्छेदकत्वभ्रमादेव दण्डिमान् इत्यनुमितिः नान्यदेति भावः ।।

**गादाधरी**

**स्वाश्रयघटितपरम्परासंबन्धेन** यत्र धर्मे व्यापकतावच्छेदकत्वग्रहः तद्विशिष्ट-धर्मिप्रकारेण सामानाधिकरण्यप्रतियोगितया साध्यावगाहिव्याप्तिग्रहस्यैव वा **तद्धर्मविशिष्ट**दण्डादिरूपधर्मिणोऽनुमितिविधेयतावच्छेदकताप्रयोजकत्वोपगमेन दण्डिमान् इत्याद्याकारानुमितेः भ्रमशून्यतादशायां निर्वाह्यत्वादिति भावः ।।

**व्याख्या–**

प्रमात्मकपरामर्शादपि दण्डिमान् इत्यनुमितिमुपपादयति– **स्वाश्रयेत्यादिन** । **स्वाश्रयघटितपरम्परासंबन्धेन** – स्वसमवायिसंयोगेन **यत्र धर्मे** दण्डत्वादौ व्यापकतावच्छेदकत्वग्रहः – हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वग्रहः



तद्विशिष्टधर्मिप्रकारेण – दण्डत्वविशिष्टो यो धर्मी दण्डः तत्प्रकारेण – सामानाधिकरण्यप्रतियोगितया साध्यस्य दण्डिनः अवगाही विषयीकुर्वन् दण्डि-विधेयकानुमितौ कारणमित्यर्थः । एतदुक्तं भवति – अयं दण्डिमान् इत्याकारकदण्डा-वच्छिन्नदण्डिनिष्ठविधेयताकानुमितिं प्रति दण्डिसंयोगत्वरूपहेतुतावच्छेदका-वच्छिन्नाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकदण्डत्ववद्दण्डविशिष्टदण्डि-समानाधिकरणदण्डिसंयोगवान् अयं प्रदेश इत्याकारकं ज्ञानं कारणम् । अत्र सामानाधिकरण्यप्रतियोगितया दण्डी भासते । तत्र व्यापकतावच्छेदकं यत् दण्डत्वं तद्विशिष्टो दण्डः प्रकारः इति सूक्ष्मतया ज्ञेयम् । पर्वतो वह्निमान् इत्यत्र तु व्याप्तिघटकसामानाधिकरण्यप्रतियोगितया वह्निः भासते । स च धूमसमानाधिकरणा-भावप्रतियोगितानवच्छेदकवह्नित्वप्रकारेण भासते इति वैलक्षण्यम् ।।

अथ पङ्क्त्यर्थः– **स्वाश्रयघटितपरम्परासंबन्धेन** स्वाश्रय (स्वसमवायि) संयोगसंबन्धेन यत्र धर्मे – दण्डत्वे, **व्यापकतावच्छेदकत्वग्रहः** – दण्डिसंयोग-रूपहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वग्रहः **तद्विशिष्टधर्मि-प्रकारेण** – दण्डविशिष्टदण्डिप्रकारेण **सामानाधिकरण्यप्रतियोगितया** – सामानाधिकरण्यनिरूपकतया **साध्यावगाहिव्याप्तिग्रहस्य** – दण्डिरूपसाध्य-विषयक– व्याप्तिज्ञानस्य । षष्ठ्यर्थः आधेयत्वम् । तस्य प्रयोजकत्वेऽन्वयः । व्याप्तिज्ञानाकारः पूर्वं प्रदर्शितः । **तद्धर्मविशिष्टस्य** – दण्डत्वविशिष्टस्य दण्डरूपस्य धर्मिणः । षष्ठ्यर्थः आधेयत्वम् । तस्य अनुमितिविधेयतावच्छेदकतायामन्वयः ।।

**गादाधरी**

अथ महानसीयत्वादिसहितवह्नित्वादेः धूमादिमन्निष्ठाभावप्रतियोगिता-वच्छेदकत्वेऽपि शुद्धवह्नित्वादिरूपसाध्यतावच्छेदकस्य तादृशप्रतियोगितानवच्छे-दकत्ववत् तत्तादिविशिष्टदण्डस्य तादृशप्रतियोगितावच्छेदकत्वेऽपि दण्डत्वाद्य-

वच्छिन्नस्य तादृशप्रतियोगितानवच्छेदकत्वस्य सुघटतया तस्य व्यापकतावच्छेदकत्वानुपगमो न संगच्छते ।।

### व्याख्या

ननु दण्डिमान् दण्डिसंयोगादित्यत्र परम्परासंबन्धेन संबद्धस्य दण्डत्वस्य साध्यतावच्छेदकत्वमुपगम्य अव्याप्तिपरिहरणमनावश्यकम् । तदनुपगमेऽपि अव्याप्तिवारणसंभवात् । तथाहि– दण्डिसंयोगरूपहेतुमति तद्दण्डवदभावस्य एतद्दण्डवदभावादेश्च चालिनीन्यायेन सत्त्वेऽपि तादृशाभावप्रतियोगितावच्छेदकत्वं तत्ताविशिष्टदण्डे एतत्ताविशिष्टे दण्डे च । साध्यतावच्छेदकस्तु दण्डत्वविशिष्टदण्डः तस्य प्रतियोगितानवच्छेदकत्वं भवितुमर्हति । हेतुमति दण्डत्वविशिष्टदण्डवदभावस्यासत्त्वात् । यथा पर्वतो वह्निमान् धूमादित्यत्र हेतुमति पर्वते महानसीयत्वविशिष्टवह्न्यभावस्य सत्त्वेऽपि तत्प्रतियोगितावच्छेदकं महानसीयत्वविशिष्टवह्नित्वं तदनवच्छेदकं शुद्धवह्नित्वरूपं साध्यतावच्छेदकं भवति, तद्वत् । तथा च दण्डत्वस्य परंपरासंबन्धेन साध्यतावच्छेदकत्वकथनमयुक्तम् इति भावः । अवच्छेदककोटिप्रविष्टेषु अवच्छेदकतापर्याप्तिरिति शङ्कितुराशयः ।।

### गादाधरी

**न च तद्दण्डी** नास्तीति बुद्धौ तत्त्वोपलक्षित एव दण्डे प्रतियोगितावच्छेदकत्वपर्याप्तिर्भासते । न तु तत्तामन्तर्भाव्य । तत्त्वोपलक्षितव्यक्तेरेव अनतिप्रसक्ततया तत्तांशस्यावच्छेदकान्तर्भावे गौरवात् । अतो विशेष्यस्य अवच्छेदकत्वपर्याप्त्यधिकरणतया दण्डत्वविशिष्टस्यापि तस्यानवच्छेदकत्वं दुर्घटम् । महानसीयवह्न्यभावप्रतियोगितायां वह्नित्वादेरतिप्रसक्ततया तन्मात्रे अवच्छेदकतापर्याप्त्यसंभवेन महानसीयत्वादेः अवच्छेदकान्तर्भाव आवश्यक इति शुद्धवह्नित्वादेः तादृशप्रतियोगितानवच्छेदकत्वं सुघटमिति वाच्यम् ।।





### व्याख्या–

पूर्वोक्तशङ्कायाः समाधानं शङ्कते– **न च तद्दण्डी** इत्यादिना । अत्रायं न चेत्यादिग्रन्थस्याशयः– तद्दण्डी नास्तीति बुद्धौ तत्त्वोपलक्षितदण्डस्यैव प्रतियोगितावच्छेदकत्वं भासते, न तु तत्तायामपि । तत्त्वोपलक्षितदण्डस्यैव तद्दण्डवान्नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगिताशून्यावृत्तित्वेन अवच्छेदकत्वसंभवेन गौरवेण तत्तांशेऽप्यवच्छेदकत्वस्यास्वीकारात् । एवं च विशेष्यस्य दण्डस्य प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वेन दण्डत्वविशिष्टेऽपि दण्डे प्रतियोगितावच्छेदकत्वाभावरूपं प्रतियोगितानवच्छेदकत्वं दुर्घटम् । विशेष्यवृत्तिधर्मप्रतियोगिकविशिष्टानुयोगिकाभावस्याप्रामाणिकत्वात् ।।

महानसीयवह्न्यभावीयप्रतियोगितायां तु महानसीयत्वोपलक्षितस्यापि वह्नित्वस्य अतिप्रसक्ततया प्रतियोगिताशून्यवह्न्यन्तरवृत्तितया वह्नित्वमात्रे प्रतियोगितावच्छेदकत्वपर्याप्त्यसंभवेन महानसीयत्वान्तर्भावेण प्रतियोगितावच्छेदकत्वपर्याप्तिस्वीकारेण तदनवच्छेदकत्वं वह्नित्वे उपपादितम् ।।

एवं च दण्डत्वस्य व्यापकतावच्छेदकत्वस्वीकार आवश्यक इति ।।

### गादाधरी

**स्वरूपतो भासमानस्यैव स्वरूपतोऽवच्छेदकतायाः** सिद्धान्तसिद्धतया **सखण्डपदार्थस्य** दण्डादेः **स्वरूपतोऽवच्छेदकत्वासंभवेन** दण्डत्वादिविशिष्टस्यातिप्रसक्ततया तत्तादिरूपविशेषणमनन्तर्भाव्य तत्रावच्छेदकत्वपर्याप्तेरसंभवात् । **अभावप्रतियोगितावच्छेदकतया भासमाने** उपलक्षणीभूतधर्मान्तरस्य भानोपगमे उपलक्षणतया दण्डत्वमात्रं तद्दण्डावच्छिन्नाभावप्रतियोगितावच्छेदकतया भासमानतद्दण्डांशे विषयीकृत्य दण्डिमति दण्डी नास्तीति प्रत्ययस्य दुर्वारत्वाच्च ।।

### व्याख्या

**न चे**त्यादिना उद्भावितां शङ्कां समाधत्ते– **स्वरूपतो भासमानस्यैवेति** । स्वरूपतः किंचिद्रूपानवच्छिन्नत्वेन । एवकारेण किंचिद्रूपेण भासमानस्य स्वरूपतोऽवच्छेदकत्वव्यवच्छेदः । **स्वरूपतोऽवच्छेदकतायाः** – किंचिद्धर्मानवच्छिन्नावच्छेदकतायाः । **सखण्डपदार्थस्य** – स्वरूपतो भानानर्हपदार्थस्य । **स्वरूपतोऽवच्छेदकत्वासंभवेनेति** । जात्यखण्डोपाध्यतिरिक्तानां किंचिद्रूपेणैव भानमित्यङ्गीकारादिति भावः । अयं भावः– तद्दण्ड्यभावप्रतियोगिताशून्ये दण्डान्तरवत्यपि पुरुषे दण्डत्वविशिष्टस्य दण्डस्य सत्त्वेन तस्यातिप्रसक्ततया अवच्छेदकत्वासंभवात् तत्त्वविशिष्टस्यैव दण्डस्यावच्छेदकत्वं वाच्यम् । तथा च तत्त्वान्तर्भावेणैव तद्दण्ड्यभावप्रतियोगितावच्छेदकतायाः पर्याप्ततया दण्डत्वविशिष्टदण्डस्य प्रतियोगितानवच्छेदकत्वमनपवादमिति दण्डत्वस्य परंपरासंबन्धेन व्यापकतावच्छेदकत्वानुसरणमनावश्यकम् । तथा च तत्तायाः उपलक्षणत्वेऽपि प्रतियोगितावच्छेदकान्तर्भाव आवश्यक इति भावः ।।

**अभावप्रतियोगितावच्छेदकतया भासमाने** इति । तद्दण्डवान् नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकतया भासमाने दण्डे तत्तातिरिक्तस्य अवच्छेदककोट्यप्रविष्टस्य दण्डत्वस्य उपलक्षणतया भानोपगमे, तद्दण्डावच्छिन्नाभावप्रतियोगितावच्छेदकतया भासमाने दण्डे दण्डत्वमुपलक्षणीकृत्य दण्डिमति दण्डी नास्तीति प्रतीतिर्दुर्वारा स्यात् । एतदुक्तं भवति– दण्डिमति आपाद्यमाने दण्डी नास्तीति प्रत्यये विषयः वस्तुतः तद्दण्डावच्छिन्नप्रतियोगिताकाभावः । तादृशाभावस्य तत्त्वविशिष्टदण्डावच्छिन्नप्रतियोगिताकत्वेऽपि अवच्छेदकानन्तर्भूतस्यापि उपलक्षणतया अभावप्रतियोगितावच्छेदककोटौ **भानस्वीकारे** तद्दण्डांशे दण्डत्वम् उपलक्षणतया विषयीकृत्य तादृशप्रतीतिः निराबाधा स्यात् । तस्मात्–



तादृशमुपलक्षणं नास्ति, यत् अनवच्छेदकं सदपि भासेत, अपि तु अवच्छेदकं सदेव भासेत इति स्वीकरणीयम् । तथा स्वीकारे च दण्डी नास्तीत्यत्र दण्डत्वविशिष्टदण्डा-वच्छिन्नप्रतियोगिताकाभाव एव विषयः भवति । स चाभावः न तद्दण्ड्यभावः । तस्य तत्त्वविशिष्टदण्डावच्छिन्नप्रतियोगिताकत्वात् इति तदभावतात्पर्येण दण्डिमति दण्डी नास्तीति प्रत्ययः नापादयितुं शक्यः इति ।।

### गादाधरी

**अत्र केचित्– उक्तानुशयेनैव** दण्ड्यादाविति आदिपदोपादानम् । आदिपदस्य **पृथिवीत्वादि**व्याप्यजातित्वादिना अनुगतीकृतघटत्वपटत्वमृत्तिकात्वपाषाणत्वादिना पृथिव्यादिहेतुकसाध्यपरिग्रहः । समवायादिना हेतुभूतपृथिव्यादिमति तन्तुकपालादौ विशेषणानवच्छिन्नघटत्वपटत्वाद्यवच्छिन्नाभावस्य सत्त्वात् सर्वास्वेव साध्यतावच्छेदकतादृशजातिषु तथाविधाभावप्रतियोगितावच्छेदकत्वपर्याप्तेः तासां व्यापकतावच्छेदकत्वासंभवेन तदनुगमकोक्तधर्मस्यैव **परम्परासंबन्धेन** तथात्वोपगमस्यावश्यकत्वात् इत्याहुः ।।

### व्याख्या

उक्तपूर्वपक्षमभ्युपगम्य परंपरासंबद्धधर्मस्य साध्यतावच्छेदकत्वकथनस्य आदिपदग्राह्यस्थलान्तरे अव्याप्तिवारणप्रयोजनकत्वं वदतां मतमनुवदति– **अत्र केचिदिति** । **उक्तानुशयेनैवेति** । दण्डिमान् दण्डिसंयोगात् इत्यत्र अव्याप्त्यप्रसक्तिरूपास्वारस्येनैवेत्यर्थः । तथा च दण्डिमान् दण्डिसंयोगात् इत्यत्र अव्याप्त्यभावे इष्टापत्तिरेव । आदिपदग्राह्यस्थल एव अव्याप्तिवारणाय परंपरासंबद्धधर्मस्य व्याप्यतावच्छेदकत्वानुधावनं दीधितिकृतामित्याशयः ।।

**पृथिवीत्वादीति** । तन्तुकपालादिः पृथिवीत्वव्याप्यजातिमद्वान् समवायेन पृथिव्याः (पृथिवीमत्त्वात्) । अयं सद्धेतुः । समवायेन पृथिवी यत्र वर्तते

तन्तुकपालादौ, तत्र पृथिवीत्वव्याप्या या जातिः पटत्वं घटत्वं वा तद्वान् पटो घटो वा समवायसंबन्धेन तद्वान् पक्षः तत्त्वादिः भवति इति । अत्र समवायसंबन्धेन घटरूपपृथिव्याः अधिकरणे कपाले पृथिवीत्वव्याप्यपटत्वरूपजातिमतः पटस्याभावः वर्तते तत्प्रतियोगितावच्छेदकं पटत्वम् । एवं समवायसंबन्धेन पटरूपपृथिव्यधिकरणे तन्तौ पृथिवीत्वव्याप्यघटत्वजातिमद्धटाभावो वर्तते, तत्प्रतियोगितावच्छेदकं घटत्वम् इत्येवं चालिनीन्यायेन साध्यतावच्छेदकपृथिवीत्वव्याप्यजातीनां घटत्वपटत्वादीनां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वमेवास्ति, न तदनवच्छेदकत्वमित्यव्याप्तिः । तद्वारणाय अत्र स्वाश्रयसमवायिसमवायरूप-परंपरासंबन्धेन पृथिवीत्वव्याप्यजातित्वस्य साध्यतावच्छेदकत्वं हेतुव्यापकता-वच्छेदकत्वं च स्वीकरणीयम् । स्वं पृथिवीत्वव्याप्यजातित्वं, तदाश्रयः पृथिवीत्वव्याप्यजातिः घटत्वपटत्वादिः तत्समवायी घटपटादिः तत्समवायः पक्षे कपालतन्त्वादौ । तथा च समवायसंबन्धेन पृथिवीरूपहेत्वधिकरणे तन्तुकपालादौ समवायसंबन्धावच्छिन्नघटाद्यभावस्य सत्त्वेऽपि स्वाश्रयसमवायिसमवायसंबन्धेन पृथिवीत्यव्याप्यजातित्ववान् नास्तीति प्रतीतिसिद्धाभावो नास्तीति जलत्वव्याप्य-जातित्ववान्नास्तीति च प्रतीतिसिद्धाभाव एव तादृशः । उक्तपरंपरासंबन्धेन तत्प्रतियोगितावच्छेदकत्वं जलत्वव्याप्यजातित्वे, तदनवच्छेदकत्वं पृथिवीत्वव्याप्य-जातित्वेऽस्तीति तदवच्छिन्नावच्छिन्नसामानाधिकरण्यस्य हेतौ सत्त्वान्नाव्याप्तिः इति भावः । **परम्परासंबन्धेन** – स्वाश्रयसमवायिसमवायेन ।।

## गादाधरी

अन्ये तु– तद्दण्डवान् नास्तीत्यादौ प्रतियोगिविशेषणतया भासमान-**दण्डादिष्वेव** प्रतियोगितावच्छेदकत्वपर्याप्तिः भासते । **तद्विशेषणतत्त्वादौ** तु



**तदवच्छेदकतावच्छेदकत्वमेव । प्रतियोगिताव्यधिकरणस्य** तदवच्छेदकत्वा-संभवेन **तदन्तर्भावेण तदवच्छेदकतापर्याप्त्यसंभवात्** ।।

**न चानवच्छिन्नमवच्छेदकत्वमेव** निवेशनीयमिति वाच्यम् । सखण्ड-साध्यतावच्छेदकव्यभिचारिण्यतिप्रसङ्गात् । अनवच्छिन्नावच्छेदकत्वमेव च स्वरूपतोऽवच्छेदकत्वम् । तत् सखण्डे नास्त्येव । अतो दण्डादेः अनवच्छेदकत्वं दुर्घटम् । **महानसीयवह्निर्नास्ति इत्यादौ** च महानसीयत्वादेः प्रतियोगिन्येव विशेषणतया भानात् तदन्तर्भाविणैव प्रतियोगितावच्छेदकत्वपर्याप्तिः भासत इति विशेषः ।।

## व्याख्या

दण्डिमान् दण्डिसंयोगात् इत्यादौ परंपरासंबद्धदण्डत्वादेः व्यापकता-वच्छेदकत्वस्वीकारमन्तरा अव्याप्तिवारणं न संभवतीति उपपादयतां मतमुपन्यस्यति- **अन्ये तु** इत्यारभ्य इति **वदन्तीति** पर्यन्तग्रन्थेन । यत्तु तद्दण्डवान् नास्तीत्यादि प्रतीतिसिद्धानां हेतुसमानाधिकरणानाम् अभावानां प्रतियोगितावच्छेदकत्वं – तादृशाभावनिरूपितप्रतियोगितावच्छेदकत्वं तत्तादिविशिष्टदण्डे पर्याप्तम् । दण्डत्वविशिष्टदण्डे न पर्याप्तम् । अतः साध्यतावच्छेदकस्य दण्डत्वविशिष्टस्य प्रतियोगितानवच्छेदकत्वमक्षतमिति अथेत्यादिना शङ्कितम् । तत्रोच्यते । प्रतियोगिनि यत् विशेषणं तदेव प्रतियोगितावच्छेदकम् । प्रतियोगिविशेषणे यत् विशेषणं तन्न प्रतियोगितावच्छेदकम् । अपि तु प्रतियोगितावच्छेदकतावच्छेदकम् । तद्दण्डवान् नास्तीति प्रतीतिसिद्धाभावस्य प्रतियोगी तद्दण्डवान् पुरुषः तस्य विशेषणं दण्डः । तत्त्वं तु दण्डस्य विशेषणम् । तथा चाभावप्रतियोगितावच्छेदको दण्डः । तद्व्यक्तित्वरूपं तत्त्वं तु प्रतियोगितावच्छेदकतावच्छेदकम् । ततश्च दण्डिमान् दण्डिसंयोगात् इत्यत्र हेतुसमानाधिकरणतद्दण्डवदभावप्रतियोगितावच्छेदकत्वं दण्डस्य

साध्यतावच्छेदकस्य अक्षतमिति साध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वं नास्तीत्यव्याप्तेः दुर्वारतया परंपरासंबन्धेन दण्डत्वस्य साध्यतावच्छेदकत्वमुक्तं **दीधितिकारेण** । महानसीयवह्निः नास्तीत्यत्र तु महानसीयत्ववह्नित्वयोरपि प्रतियोगिन्येव विशेषणतया प्रतियोगितावच्छेदकत्वं पर्याप्तमिति साध्यतावच्छेदके वह्नित्वे तदनवच्छेदकत्वं सुघटमिति विशेषः । **दण्डादिष्वेवेति** । एवकारेण तत्तादिव्यवच्छेदः । **तद्विशेषणतत्वादौ** । दण्डविशेषणतद्व्यक्तित्वादौ । **तदवच्छेदकतावच्छेदकत्वमेव** । प्रतियोगितावच्छेदकतावच्छेदकत्वमेव । एवकारेण प्रतियोगितावच्छेदकत्वव्यवच्छेदः । **प्रतियोगिताव्यधिकरणस्य**– प्रतियोगिताश्रयप्रतियोग्यवृत्तिधर्मस्य । **तदवच्छेदकत्वासंभवेन** – प्रतियोगितावच्छेदकत्वासंभवेन । **तदन्तर्भावेण** – प्रतियोग्यवृत्तिधर्मे । **तदवच्छेदकतापर्याप्त्यसंभवात्** – प्रतियोगितावच्छेदकतापर्याप्त्यसंभवात् ।।

ननु व्यापकतावच्छेदकत्वेऽनवच्छिन्नत्वं निवेश्यते । तथा च हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानिरूपितानवच्छिन्नावच्छेदकताशून्यं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः । तथा च दण्डिमान् दण्डिसंयोगादित्यत्र हेतुदण्डिसंयोगाधिकरणवृत्तिर्योऽत्यन्ताभावः तत्तद्दण्ड्यभावः तदीयप्रतियोगितावच्छेदकता साध्यतावच्छेदके दण्डे विद्यमाना तत्त्वावच्छिन्ना न अनवच्छिन्नेति अनवच्छिन्नावच्छेदकताशून्यत्वस्य साध्यतावच्छेदके दण्डे सद्भावात् नाव्याप्तिप्रसक्तिरित्याशयेन शङ्कते– **न चानवच्छिन्नमवच्छेदकत्वमेवेति** । तथा निवेशे दण्डिमान् द्रव्यत्वात् इत्यत्र व्यभिचारिणि अतिव्याप्तिः स्यात् । तत्र हि साध्यतावच्छेदके दण्डे, हेतुभूतद्रव्यत्वाधिकरणे दण्डिशून्ये प्रदेशे वर्तमानो योऽत्यन्ताभावः दण्ड्यभावः तत्प्रतियोगितावच्छेदकत्वमेवास्ति, न तु तदनवच्छेदकत्वमित्यतिव्याप्तिर्वारणीया । परं तु दण्डस्य जातिव्यतिरिक्तस्य



स्वरूपतो भानासंभवात् दण्डत्वेनैव प्रतियोगिविशेषणतया भानं वक्तव्यम् । तथा च दण्डनिष्ठायाः उक्ताभावीयप्रतियोगितावच्छेदकतायाः दण्डत्वावच्छिन्नतया अनवच्छिन्नावच्छेदकताशून्यत्वं साध्यतावच्छेदके दण्डेऽस्तीत्यतिव्याप्तिः प्रसजति । अतः अनवच्छिन्नत्वमवच्छेदकत्वे न निवेशनीयम् । तदनिवेशे च दण्डिमान् दण्डिसंयोगात् इत्यत्र पूर्वोक्तरीत्या अव्याप्तिः प्रसजति । अतः परंपरासंबन्धेन दण्डत्वस्य साध्यतावच्छेदकत्वं **दीधितिकारेण** उक्तमिति भावः ।।

महानसीयवह्न्यभावस्य तद्दण्डवदभावपेक्षया वैलक्षण्यमाह - **महानसीयवह्निर्नास्तीत्यादाविति** । उपपादितमेतत्पूर्वमेव ।।

## गादाधरी

**अथ वह्नित्वाद्यंश एव** सामानाधिकरण्यसंबन्धेन विशेषणतया महानसीयत्वादिकमवगाहमाना महानसीयत्वविशिष्टवह्नित्ववान्नास्तीत्याद्याकारिका या प्रतीतिः तस्या **उक्तयुक्त्या** वह्नित्वादावेव प्रतियोगितावच्छेदकत्वपर्याप्तिविषयकतया वह्नित्वादावप्यनवच्छेदकत्वं दुर्घटं स्यात् । **यदि च** वह्नित्वादेः समवायेन **प्रतियोगितायां**, सामानाधिकरण्येन च महानसीयत्वादेः **तदवच्छेदकतायामवच्छेदकत्वे** गौरवात् महानसीयत्वादिसहितवह्नित्वस्य प्रतियोगितायामेवावच्छेदकत्वम् । उक्तप्रतीतिस्तु कम्बुग्रीवादिमान् नास्तीति प्रतीतिवत् अवच्छेदकत्वांशे भ्रमरूपैव इत्युच्यते– तदा यत्र सामानाधिकरण्यसंबन्धेन महानसीयत्वादिविशिष्टस्य वह्नित्वादेः साध्यतावच्छेदकता तत्स्थलीयव्यभिचारिणि धूमादिहेतावतिव्याप्तिः ।।

## व्याख्या

महानसीयत्वं वह्नित्वं चोभयमपि प्रतियोगिनि महानसीयवह्नौ विशेषणतया अवगाहमाना या महानसीयवह्निर्नास्तीति प्रतीतिः तद्विषयीभूतस्य महानसीयवह्न्य-

भावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकत्वं महानसीयत्वे वह्नित्वे च पर्याप्तम् । साध्यतावच्छेदके शुद्धवह्नित्वे तादृशाभावप्रतियोगितावच्छेदकत्व-पर्याप्त्यनधिकरणत्वमस्तीति पर्वतो वह्निमान् धूमात् इत्यत्राव्याप्तिवारणेऽपि, हेत्वधिकरणे पर्वते वर्तमानः यः सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्ट-वह्नित्ववान्नास्तीति प्रतीतिसिद्धो महानसीयवह्न्यभावः तत्प्रतियोगितावच्छेदकत्वं साध्यतावच्छेदके वह्नित्व एव पर्याप्तमिति प्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणत्वं वह्नित्वे नास्तीत्यव्याप्तिरिति शङ्का । तथा हि उक्तप्रतीतौ प्रतियोगिनि वह्नौ वह्नित्वं विशेषणम् । वह्नित्वे सामानाधिकरण्यसंबन्धेन महानसीयत्वं विशेषणम् । अतस्तत् प्रतियोगितावच्छेदकतावच्छेदकमिति शङ्कितुराशयः । **वह्नित्वाद्यंश एवेति** एवकारेण महानसीयत्वे वह्निविशेषणत्वव्यवच्छेदः । **उक्त-युक्त्येति** । प्रतियोगिनि यत् विशेषणतया भासते तत् प्रतियोगितावच्छेदकम्, प्रतियोगिविशेषणे यत् विशेषणतया भासते तत् प्रतियोगितावच्छेदकतावच्छेदकमिति पूर्वोक्तयुक्त्येत्यर्थः ।।

ननु सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्टवह्नित्ववान्नास्तीति या प्रतीतिः सा भ्रमरूपा । तथा हि– प्रतियोगिनि वह्नौ विद्यमानयोः महानसीयत्व-वह्नित्वयोः द्वयोः मध्ये एकस्य प्रतियोगितावच्छेदकत्वं अन्यस्य प्रतियोगिता-वच्छेदकतावच्छेदकत्वमिति स्वीकारे गौरवम् । उक्तप्रतीतिस्तु महानसीयत्वस्य प्रतियोगितावच्छेदकत्वांशे भ्रमरूपा । यथा कम्बुग्रीवादिमान् नास्तीति प्रतीतिः कम्बुग्रीवादिमत्त्वांशे प्रतियोगितावच्छेदकत्वभ्रमः । घटत्वापेक्षया कम्बुग्रीवादिमत्त्वस्य गुरुत्वादिति शङ्कते– **यदि** चेत्यादिना । प्रतियोगितायामित्यस्य अवच्छेदकत्वे इत्युत्तरेणान्वयः । **तदवच्छेदकतायाम्** – प्रतियोगितावच्छेदकतायाम् । **महानासीयत्वसहितस्य वह्नित्वस्येति** । महानसीयत्ववह्नित्वयोरुभयोरपीत्यर्थः ।



तथा च प्रतियोगितावच्छेदकत्व-पर्याप्त्यधिकरणमुभयम् । पर्याप्त्यनधिकरणं साध्यतावच्छेदकं वह्नित्वमिति नाव्याप्ति-रित्याशयः ।।

उक्तशङ्कायाः समाधानमाह– **तदा यत्रेति** । अयं भावः । पर्वतः सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्टवह्नित्ववद्वान् धूमात् इत्यत्र व्यभिचारात् अयं असद्धेतुः । तत्रापि व्याप्तिलक्षणमस्तीत्यतिव्याप्तिः । तत्र साध्यतावच्छेदकम् वह्नित्वम् । साध्यतावच्छेदकतावच्छेदकं महानसीयत्वमिति बुद्धौ धार्यम् । तथा च तत्र भवदुक्तरीत्या धूमाधिकरणपर्वतवृत्तिर्योऽत्यन्ताभावः सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्टवह्नित्ववान् नास्तीति प्रतीतिसिद्धोऽभावः तत्प्रतियोगिता-वच्छेदकतापर्याप्त्यधिकरणं महानसीयत्ववह्नित्वोभयम् । तत्पर्याप्त्यनधिकरणं साध्यतावच्छेदकं वह्नित्वमिति अतिव्याप्तिः प्रसजतीति भावः ।।

## गादाधरी

स्वविशिष्टसंबन्धिनिष्ठेत्यादिना निर्वाच्यं पारिभाषिकमेवावच्छेदकत्वं निवेश-नीयम् । तच्च तल्लक्षणे यादृशस्य स्वपदार्थस्य निवेशः तादृशत्वम् । एवं च महानसीयत्वादिविशिष्टस्य वह्नित्वादेः तत्र स्वपदेन उपादानसंभवात् विशिष्ट-वह्नित्वादिकमेव पारिभाषिकमवच्छेदकम् । तद्भेदश्च शुद्धवह्नित्वादावपि दुर्घटः । तथा चावच्छेदकं यादृशं स्वं तादृशाविषयकप्रतीतिविषयत्वमेवान-वच्छेदकत्वपदेन विवक्षणीयम् । तथा च सति सखण्डस्य दण्डादेः स्वरूपतोऽ-भानात् तत्तादिविशेषणविशिष्टस्यैव अवच्छेदकलक्षणस्थस्वपदेनोपादेयतया तद्वि-शिष्टाविषयकप्रतीतिविषयत्वस्य दण्डत्वादिविशिष्टे सुघटत्वात् व्यापकतावच्छेदकत्वम् अव्याहतमेवेति चेत्–

## व्याख्या

वह्निमान् धूमात् इत्यादौ सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्टं यत् वह्नित्वं तदवच्छिन्नप्रतियोतिकाभावमादाय प्रसक्ताव्याप्तिवारणाय लक्षणं परिष्कुर्वन्

तेन परिष्कारेण दण्डिमान् दण्डिसंयोगात् इत्यत्र परंपरासंबन्धेन दण्डत्वस्य साध्यतावच्छेदकत्वं विनैव अव्याप्तिवारणं संभवतीति स्वकीयशङ्कां प्रस्तौति पूर्वपक्षी । तथा हि - हेतु समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकभिन्नं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । तत्र प्रतियोगितावच्छेदकत्वं न स्वरूपसंबन्धरूपम् । अपि तु पारिभाषिकम् । तच्च स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वरूपम् । तथा च स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं यत् हेतुसमानाधिकरणाभाव-प्रतियोगितावच्छेदकं तत्कं यत् तद्भिन्नं यत् साध्यतावच्छेदकं तदवच्छिन्न-सामानाधिकरण्यं हेतुनिष्ठा व्याप्तिः । स्वपदेन यस्य अवच्छेदकत्वमुपपादनीयं तत् ग्राह्यम् । पर्वतो वह्निमान् धूमात् इत्यत्र घटत्वादेः अवच्छेदकत्वमुपपादनीयम् । स्वं घटत्वादि तद्विशिष्टघटादिसंबन्धि भूतलम् । तद्वृत्त्यभावः न घटाद्यभावः, अपि तु पटाद्यभावः तत्प्रतियोगितानवच्छेदकं घटत्वादि, तच्च धूमसमानाधिकरणा-भावप्रतियोगितावच्छेदकं भवति । धूमाधिकरणपर्वतादिवृत्तिर्योऽभावः घटाद्यभावः तत्प्रतियोगितावच्छेदकत्वात् घटत्वादेः । तत्कं यत् घटत्वादि तद्भिन्नं यत् साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नसामानाधिकरण्यस्य धूमे सत्त्वात् लक्षणसमन्वयः । परं तु स्वपदेन सामानाधिकरण्यसंबन्धेन महानसीयत्व-विशिष्टवह्नित्वमपि ग्रहीतुं शक्यम् । तद्विशिष्टमहानसीयवह्निसंबन्धी महानसः तद्वृत्त्यभावः न महानसीयत्वविशिष्टवह्नित्ववदभावः, तादृशवह्नित्ववतः महानसीय-वह्नेः महानसे सत्त्वेन तदभावासंभवात् । अपि तु घटाद्यभावः; तत्प्रतियोगिता-वच्छेदकं घटत्वादि तत्प्रतियोगितानवच्छेदकं महानसीयत्वविशिष्टवह्नित्वं, तच्च धूमसमानाधिकरणः धूमाधिकरणपर्वतवृत्तिर्योऽभावः महानसीयत्वविशिष्टवह्नित्व-वदभावः तत्प्रतियोगितावच्छेदकं भवति, तत्कं यत् स्वं महानसीयत्वविशिष्टं



वह्नित्वं तद्भेदः साध्यतावच्छेदके वाह्नित्वे न संभवति । विशिष्टशुद्धयोः अनतिरेकात् इत्यव्याप्तिः प्रसजति । तद्वारणाय तदविषयकप्रतीतिविषयत्वरूपः पारिभाषिकः भेदः अनवच्छेदकपदेन विवक्षणीयः । तथा च स्वपदगृहीतं यत् महानसीयत्व-विशिष्टवह्नित्वरूपं पारिभाषिकावच्छेदकं तदविषयकप्रतीतिविषयत्वरूपः पारि-भाषिकभेदः साध्यतावच्छेदके वह्नित्वे अस्ति । वह्नित्वविषयकप्रतीतौ विशिष्ट-वह्नित्वस्याविषयत्वात् । अतो नाव्याप्तिः ।।

इत्यंच दण्डिमान् दण्डिसंयोगात् इत्यादौ स्वपदेन तत्त्वविशिष्टदण्डं गृहीत्वा तस्य स्वविशिष्टसंबन्धिनिष्ठेत्यादिपारिभाषिकावच्छेदकत्वमुपपाद्य तत्ताविशिष्टा-विषयकप्रतीतिविषयत्वरूपभेदस्य साध्यतावच्छेदके दण्डत्वविशिष्टदण्डे सत्त्वेन अव्याप्तिवारणस्य कर्तुं शक्यत्वात् दण्डत्वस्य परंपरासंबन्धेन साध्यता-वच्छेदकत्वानुसरणं **दीधितिकृतां** न युक्तमिति आक्षेपसारांशः ।।

## गादाधरी

न । **पारिभाषिकावच्छेदकत्वस्य** स्वत्वघटितत्वेन अननुगतस्य अभावकूट-ज्ञानासंभवेन प्रतियोगितायाः स्वरूपसंबन्धरूपावच्छेदकत्वस्य अगत्या गुरुधर्मसा-धारण्यमङ्गीकृत्य व्याप्तिलक्षणे तदेव निवेशनीयम् । **एवं च** सामानाधिकरण्य-संबन्धेन महानसीयत्वादिविशेषणावच्छिन्नस्य वह्नित्वादेः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि महानसीयत्वविशिष्टनिरूपित-समवायादेरेव प्रतियोगितावच्छेदकताघटकसंबन्धत्वं तत्रोपेयम् । **शुद्धसमवायादिना** वह्नित्वादेः अतिप्रसक्तत्वात् । **शुद्धसमवायादेस्तत्रा**वच्छेदकतावच्छेदकत्वे **महानसीयत्वादि**सामानाधिकरण्योपलक्षितवह्नित्वाद्यवच्छिन्नाभावात् तद्विशिष्ट-वह्नित्वाद्यवच्छिन्नाभावस्य वैलक्षण्यानुपपत्तेश्च । **तथा च** साध्यतावच्छेदकताघटक-शुद्धसमवायादिना अखण्डवह्नित्वादेरनवच्छेदकत्वं न दुर्लभम् ।।

## व्याख्या

तादृशाक्षेपं समाधत्ते– **पारिभाषिकावच्छेदकत्वस्येत्यादिना** । पूर्वोक्तं यत् पारिभाषिकमवच्छेदकत्वं तद्घटकस्वपदस्य तत्तद्व्यक्तिमात्रपरतया घटत्वादि-रूपं यत् अवच्छेदकं तद्भिन्नत्वस्य साध्यतावच्छेदके धूमत्वे सत्त्वेन धूमवान् वह्नेः इत्यादौ व्यभिचारिणि अतिव्याप्तिप्रसक्त्या तद्वारणाय तादृशँ यद्यत्स्वं तत्तद्भेदकूटस्य साध्यतावच्छेदके निवेशनीयतया तादृशभेदकूटस्य असर्वज्ञदुर्ज्ञेयतया पारिभाषिकावच्छेदकत्वं न लक्षणे निवेशनीयम् । तथा सति पर्वतो वह्निमान् धूमात् इत्यादौ पूर्वोक्तरीत्या धूमसमानाधिकरणो यः सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्टवह्नित्ववतः अभावः तत्प्रतियोगितावच्छेदकत्वमेव साध्यता-वच्छेदके वह्नित्वेऽस्तीत्यव्याप्तिः प्रसजति । तद्वारणाय हेतुसमानाधिकरणाभाव-प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वं निवेश-नीयम् । वह्निमान् धूमात् इत्यादौ साध्यतावच्छेदकतावच्छेदकसंबन्धः शुद्ध-समवायः । येन संबन्धेन साध्यतावच्छेदकं साध्ये वर्तते स संबन्धः साध्यता-वच्छेदकतावच्छेदकसंबन्धः । एवं च वह्निमान् धूमात् इत्यत्र धूमाधिकरणपर्वत-वृत्तिर्योऽभावः सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्टवह्नित्ववदभावः तन्निरूपितप्रतियोगितावच्छेदकतायाः वह्नित्वे सत्त्वेऽपि सा महानसीयत्वविशिष्ट-वह्नित्वप्रतियोगिकसमवायसंबन्धावच्छिन्ना न साध्यतावच्छेदकतावच्छेदक-शुद्धसमवायसंबन्धावच्छिन्नेति तत्संबन्धानच्छिन्नावच्छेदकताशून्यत्वं साध्यता-वच्छेदके वह्नित्वेऽस्तीति नाव्याप्तिः ।।

न च महानसीयत्वविशिष्टवह्नित्ववदभावीयप्रतियोगितावच्छेदकतायाः शुद्ध-समवायसंबन्धावच्छिन्नत्वं कुतो नास्तीति वाच्यम् । तथा सति महानसीयत्वविशिष्ट-वह्नित्ववदभावस्य महानसीयत्वोपलक्षितवह्नित्ववदभावस्य च वैलक्षण्यानुप-



पत्तेः । अपि च शुद्धसमवायसंबन्धेन वह्नित्वस्य तादृशाभावीयप्रतियोगिताशून्ये पर्वतीयवह्नावपि सत्त्वेन अतिप्रसक्ततया अवच्छेदकत्वानुपपत्तेः इति समुदायार्थः।।

**अथ पङ्क्त्यर्थः–**

**पारिभाषिकावच्छेदकत्वस्येति** । स्वपदस्य तत्तद्व्यक्तिमात्रपरतया तादृशयत्किंचित्पदार्थभेदनिवेशे व्यभिचारिणि अतिव्याप्त्यापत्त्या तादृशं यद्यत्स्वं तत्तद्भेदकूटस्य निवेशनीयतया असर्वज्ञस्य तज्ज्ञानासंभवेन पारिभाषिकावच्छेदकत्वं न निवेशनीयम् । किं तु स्वरूपसंबन्धरूपमेवावच्छेदकत्वम् । तस्य च गुरुधर्म-साधारण्यमेष्टव्यम् । तावतैव महानसीयत्वविशिष्टवह्नित्वावच्छिन्नसाध्यक-व्यभिचारिणि साध्यतावच्छेदके वह्नित्वे हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदक-त्वस्यैव सत्त्वेन नातिव्याप्तिरिति । वह्निमान् धूमात् इत्यादौ पूर्वोक्तरीत्या प्रसक्तामव्याप्तिं परिहर्तुमाह– **एवं चेति** । स्वरूपसंबन्धरूपावच्छेदकत्वस्य गुरुधर्मसाधारण्ये इत्यर्थः । **शुद्धसमवायादिना वह्नित्वादेरिति** । प्रतियोगितावच्छेदकता-वच्छेदकसंबन्धेन प्रतियोगिताशून्यावृत्तिधर्मस्यैव प्रतियोगितावच्छेदकत्वादिति भावः।।

ननु शुद्धसमवायस्यैव प्रतियोगितावच्छेदकतावच्छेदकसंबन्धत्वेऽपि महानसीयत्वविशिष्टवह्नित्वस्य प्रतियोगितानतिप्रसक्तत्वं न संभवति । तथा हि– प्रतियोगितानतिप्रसक्तत्वं न प्रतियोगिताशून्यावृत्तित्वम् । येन वह्नित्वस्याति-प्रसक्ततया विशिष्टवह्नित्वे अनतिप्रसक्तत्वं दुर्घटं स्यात् । किं तु स्वव्यापक-प्रतियोगिताकत्वम् । तथा चात्र स्वपदेन विशिष्टवह्नित्वमादाय तद्व्यापकत्वस्य सुघटत्वात् इत्यतो युक्त्यन्तरमाह– **शुद्धसमवायादेरिति** । **तत्र** – सामानाधि-करण्यसंबन्धेन महानसीयत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगितायाम् । **महा-नसीयत्वादीति** । सामानाधिकरण्यसंबन्धेन महानसीयत्वोपलक्षितवह्नित्वावच्छिन्ना-

भावात् तेन संबन्धेन महानसीयत्वविशिष्टवह्नित्वावच्छिन्नाभावस्य वैलक्षण्यमावश्यकम् । अभावयोः वैलक्षण्यं हि प्रतियोगितावच्छेदकसंबन्धभेदात् प्रतियोगितावच्छेदकधर्मभेदाद्वा भवति । यथा संयोगसंबन्धावच्छिन्नघटाभावसमवायसंबन्धावच्छिन्नघटाभावयोः घटत्वावच्छिन्नाभावपटत्वावच्छिन्नाभावयोश्च । प्रकृते च यदि महानसीयत्वसामानाधिकरण्योपलक्षितवह्नित्वावच्छिन्नाभावे महानसीयत्वसामानाधिकरण्यविशिष्टवह्नित्वावच्छिन्नाभावे च शुद्धसमवाय एव प्रतियोगितावच्छेदकतावच्छेदकसंबन्धः स्यात् तदा संबन्धवैलक्षण्याभावात् उक्ताभावयोः वैलक्षण्यं न स्यात् । एवं च पूर्वोक्तरीत्या वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतवृत्तिर्योऽभावः महानसीयत्वसामानाधिकरण्यविशिष्टवह्नित्ववदभावः तन्निरूपितप्रतियोगितावच्छेदकतायाः वह्नित्वनिष्ठायाः विशिष्टवह्नित्वप्रतियोगिकसमवायसंबन्धावच्छिन्नत्वमेवास्ति, न तु शुद्धसमवायावच्छिन्नत्वमिति साध्यतावच्छेदकतावच्छेदकः यः शुद्धसमवायसंबन्धः तदवच्छिन्नावच्छेदकताशून्यत्वरूपमनवच्छेदकत्वं साध्यतावच्छेदके वह्नित्वेऽस्तीति नाव्याप्तिः । तदाह– **तथाचेति**।।

ननु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वं कुतो निवेशनीयमिति चेत् - श्रूयताम् । घटः रूपवान् पृथिवीत्वात् इत्यत्र अव्याप्तिवारणाय तन्निवेशनीयम् । तत्र हि हेतुः पृथिवीत्वम्, तदधिकरणं घटः तद्वृत्तिः अत्यन्ताभावः विषयितासंबन्धेन रूपत्ववतः ज्ञानस्य समवायसंबन्धेन अभावः तन्निरूपितप्रतियोगिता ज्ञाननिष्ठा तदवच्छेदकत्वं रूपत्वे साध्यतावच्छेदके अस्ति, न तदनवच्छेदकत्वम् इत्यव्याप्तिः । तद्वारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयम् । तन्निवेशे च रूपवान् पृथिवीत्वात् इत्यत्र साध्यतावच्छेदकतावच्छेदकसंबन्धः समवायः । तदवच्छिन्नत्वं उक्ताभावप्रतियोगितावच्छेदकतायां रूपत्वनिष्ठायां नास्ति, अपि तु विषयितासंबन्धावच्छिन्नत्वमेवेति नाव्याप्तिरिति ।।



तथा च प्रकृते वह्निमान् धूमात् इत्यत्र धूमसमानाधिकरणः अभावः न महानसीयत्वसामानाधिकरण्योपलक्षितवह्नित्ववदभावः तदुपलक्षितवह्नित्वोपलक्षितस्य पर्वतीयवह्नेः तत्र सत्त्वात्, अपि तु महानसीयत्वसामानाधिकरण्यविशिष्टवह्नित्ववदभावः । तत्प्रतियोगितावच्छेदकता च वह्नित्वनिष्ठा उक्तयुक्त्या विशिष्टनिरूपितसमवायसंबन्धावच्छिन्ना, न तु साध्यतावच्छेदकतावच्छेदकशुद्धसमवायसंबन्धावच्छिन्नेति तादृशसंबन्धावच्छिन्नावच्छेदकता घटत्वादौ, तादृशावच्छेदकताशून्यत्वं वह्नित्वेऽस्तीति नाव्याप्तिरिति भावः ।।

## गादाधरी

**न च – महानसीयत्वादि**सामानाधिकरण्यस्य यत्रोपलक्षणता तत्र **तस्य अवच्छेदककोटौ न प्रवेशः** । यत्र विशेषणत्वं तत्र तत्प्रवेश इत्यत एव वैलक्षण्यमिति – वाच्यम् ।।

## व्याख्या

ननु अभावप्रतियोगितावच्छेदकांशे यस्योपलक्षणतया भानं तस्य न प्रतियोगितावच्छेदकतावच्छेदकत्वम्; यस्य तत्र विशेषणतया भानं तस्य प्रतियोगितावच्छेदकतावच्छेदकत्वम् इत्यत एव उपलक्षितधर्मावच्छिन्नाभावविशिष्टधर्मावच्छिन्नाभावयोः वैलक्षण्यसिद्धौ अवच्छेदकतावच्छेदकसंबन्धवैलक्षण्येन तयोः वैलक्षण्यकथनमनुचितम् । न च विनिगमकाभावः । उभयत्र उभयोः धर्मयोः अवच्छेदकत्वं स्वीकृत्य संबन्धभेदानुसरणापेक्षया अवच्छेदकधर्मभेदाधीनभेदकल्पने लाघवात्, विशेषरूपेण संबन्धत्वानुपगमाच्चेत्याशयेन शङ्कते– **न च महानसीयत्वादीति** । **तस्येति** । महानसीयत्वसामानाधिकरण्यस्येत्यर्थः । **अवच्छेदककोटौ न प्रवेश** इति । अवच्छेदकतावच्छेदकत्वं नेत्यर्थः ।।

## गादाधरी

**उपलक्षणीभवत्त**त्तद्रूपावच्छिन्नप्रतियोगितावच्छेदकताकाभावबुद्धावपि तत्तद्रूपस्य प्रतियोगितावच्छेदकांशे प्रकारतया भानात् तत्रावच्छेदकतावच्छेदकत्वस्यावश्यकतया अवच्छेदकशरीराप्रवेशरूपोपलक्षणतायाः उपलक्षणविधयावच्छेदके तत्र असंभवात् ।।

**यदुपलक्षित**निरूपितसमवायादेरवच्छेदकताघटकसंबन्धत्वं तस्योपलक्षणतया अवच्छेदकत्वम्, **यद्विशिष्टनिरूपित**समवायादेः अवच्छेदकताघटकसंबन्धत्वं तस्य विशेषणविधया अवच्छेदकत्वम् इत्यस्यैव **विशेषत्वात्** ।।

## व्याख्या

समाधत्ते– **उपलक्षणीभवदिति** । अभावप्रतियोगितावच्छेदककोटौ प्रकारतया भासमानस्य तादृशप्रतियोगितावच्छेदकतावच्छेदकत्वमावश्यकम् । ''महानसीयत्वसामानाधिकरण्योपलक्षितवह्नित्ववान्नास्ति'' इति प्रतीतौ वह्नित्वांशे महानसीयत्वसामानाधिकरण्यस्य प्रकारतया भानमङ्गीकर्तव्यम् । अन्यथा तादृशप्रतीतेः वह्नित्ववान्नास्तीति प्रतीतितो वैलक्षण्यानुपपत्तेः । अवच्छेदककोट्यप्रविष्टस्य न भानमिति सिद्धान्तात् इति भावः । एवं चोपलक्षितधर्मावच्छिन्नप्रतियोगिताकाभावे शुद्धसमवायस्य प्रतियोगितावच्छेदकतावच्छेदकसंबन्धत्वम्, विशिष्टधर्मावच्छिन्नप्रतियोगिताकाभावे विशिष्टसमवायस्य प्रतियोगितावच्छेदकतावच्छेदकसंबन्धत्वमिति सिद्धम् ।।

उपलक्षितधर्मावच्छिन्नाभावविशिष्टधर्मावच्छिन्नाभावयोः अवच्छेदकतावच्छेदकसंबन्धेन भेदसिद्धावपि उपलक्षणविधया अवच्छेदकत्वं विशेषणविधया अवच्छेदकत्वं च किंरूपमित्याशङ्कां तयोः स्वरूपनिर्वचनेन निरस्यन् तेनैवाभावद्वयभेदं



चाह– **यदुपलक्षितेति** । यदाश्रयप्रतियोगिकेत्यर्थः । **यद्विशिष्टनिरूपितेति** । यदवच्छिन्नप्रतियोगिकेत्यर्थः । **विशेषत्वादिति** । अभावद्वयभेदत्वादित्यर्थः ।।

तथा च तस्योपलक्षणतया अवच्छेदकत्वं नाम अभावप्रतियोगितावच्छेदकतावच्छेदकसंसर्गप्रतियोगितानवच्छेदकत्वे सति तत्समानाधिकरणत्वम् । विशेषणविधया अवच्छेदकत्वं नाम अभावप्रतियोगितावच्छेदकतावच्छेदकसंसर्गप्रतियोगितावच्छेदकत्वे सति तत्समानाधिकरणत्वमिति पर्यवसितमिति **पितृचरणाः** प्राहुः।।

## गादाधरी

एवं च **एकत्वप्रागभावविशिष्टघटादेः** संयोगादिसंबन्धेना**भावस्य प्रतियोगितायामप्रसिद्धतया** विशिष्टनिरूपितसंयोगादेः **अवच्छेदकत्वासंभवेन** अगत्या विशेषणविधया प्रतियोगितावच्छेदकत्वस्य अन्यथैव वैलक्षण्यस्य उपपादनीयतया शुद्धसमवायादेरेव विशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकसंबन्धतया तादृशाभावस्य तादृशसंबन्धेन प्रतियोगिसमानाधिकरणतया दीधितिकृता प्रतियोगितावच्छेदक-विशिष्टासामानाधिकरण्यपर्यन्तनिवेशव्यावृत्तिसंगतिः ।।

## व्याख्या

ननु विशिष्टधर्मावच्छिन्नप्रतियोगिताकाभाव-उपलक्षितधर्मावच्छिन्नप्रतियोगिताकाभावयोः वैलक्षण्यनिर्वाहाय विशिष्टप्रतियोगिकसंबन्धः विशिष्टधर्मावच्छिन्नाभावनिरूपितप्रतियोगितावच्छेदकतावच्छेदकसंबन्धः, शुद्धसमवायादिः उपलक्षितधर्मावच्छिन्नाभावनिरूपितप्रतियोगितावच्छेदकतावच्छेदकसबन्ध इति स्वीकारे तुल्यन्यायेन विशिष्टाभावोपलक्षिताभावयोः, वैलक्षण्याय विशिष्टनिरूपितसंबन्धः विशिष्टाभावप्रतियोगितावच्छेदकः शुद्धसमवायादिः उपलक्षिताभावप्रतियोगितावच्छेदकसंबन्ध इति स्वीकरणीयम् । तथा सति लक्षणघटकप्रतियोग्यसामानाधिकरण्यशरीरे प्रतियोगिपदेन प्रतियोगितावच्छेदकावच्छिन्नत्वविवक्षायाः

**दीधितिकृत्कृ**तायाः असंगतिः । तथा हि– प्रतियोग्यसमानाधिकरणहेतु-समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्य-सामानाधिकरण्यं व्याप्तिः । अव्याप्यवृत्तिसाध्यकसद्धेतौ कपिसंयोगी एतद्वृक्षत्वात् इत्यादावव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणेति अभावविशेषणम् । तस्मिन् विशेषणे दत्ते सति गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्रातिव्याप्तिः । हेतोः जातेः अधिकरणे गुणे कर्मणि च विशेषणाभावप्रयुक्तस्य गुणकर्मान्यत्व-विशिष्टसत्ताभावस्य सत्त्वेऽपि स न प्रतियोग्यसमानाधिकरणः । विशिष्टशुद्धयोः ऐक्यात् सत्तारूपप्रतियोग्यधिकरणे गुणे कर्मणि च सतः विशिष्टाभावस्य प्रतियोगिसमानाधिकरणत्वात् । अतः घटाद्यभावः द्रव्यत्वाभावो वा प्रतियोग्य-समानाधिकरणः तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विशिष्टसत्तात्वे सत्त्वात् इत्यतिव्याप्तिः । तद्वारणाय प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्य-समानाधिकरण्यं विवक्षणीयमिति वक्ष्यति । तद्विवक्षणे च प्रतियोगितावच्छेदकं यत् गुणकर्मान्यत्वविशिष्टसत्तात्वं तदवच्छिन्नाधिकरणं न गुणः कर्म वा, अपि तु द्रव्यमेव । तदनधिकरणं गुणः कर्म च, तद्वृत्तिः गुणकर्मान्यत्व-विशिष्टसत्ताभावोऽपि तत्प्रतियोगितावच्छेदकमेव विशिष्टसत्तात्वरूपं साध्यतावच्छेदकमिति नातिव्याप्तिरिति स्थितिः । विशिष्टनिरूपितसमवायस्य विशिष्टाभावप्रतियोगितावच्छेदकत्वे प्रतियोगितावच्छेदकेन तेन संबन्धेन सत्तारूपप्रतियोग्यधिकरणं गुणः कर्म वा न भवति । अतः प्रतियोग्यनधिकरणं गुणः कर्म च तद्वृत्तिः विशिष्टसत्ताभावोऽपि, तत्प्रतियोगितावच्छेदकमेव विशिष्टसत्तात्वरूपं साध्यतावच्छेदकमिति नाति-व्याप्तिः । अतः प्रतियोगिता-वच्छेदकविशिष्टप्रतियोग्यसामानाधिकरण्यविवक्षा असंगता स्यात् इति शङ्का । तत्रेत्थं समाधानम्– विशिष्टधर्मावच्छिन्नाभावोपलक्षित-धर्मावच्छिन्नाभावयोः पूर्वोक्तरीत्या प्रतियोगितावच्छेदकतावच्छेदकसंबन्धवैलक्षण्येन



भेदस्वीकारेऽपि विशिष्टाभावोपलक्षिताभावयोः प्रतियोगितावच्छेदकसंबन्धवैलक्षण्येन भेदो न स्वीक्रियते । अपि तु विशिष्टाभावीयप्रतियोगिता विशेषणविशेष्योभयपर्याप्ता, उपलक्षिताभावीयप्रतियोगिता विशेष्यमात्रे पर्याप्तेति तयोरभावयोर्भेदः । तथा च समवायेन सत्तारूपप्रतियोग्यधिकरणगुणकर्मवृत्तितया विशिष्टसत्ताभावः न प्रतियोग्यसमानाधिकरणः, अपि तु द्रव्यत्वाद्यभावः, तत्प्रतियोगितानवच्छेदकत्वं विशिष्टसत्तात्वेऽस्तीत्यतिव्याप्तिप्रसक्त्या तद्वारणाय प्रतियोगिपदेन प्रतियोगिता-वच्छेदकावच्छिन्नविवक्षा **दीधितिकृतां** संगच्छते । ननु विशिष्टाभावोपलक्षिता-भावयोरपि विशिष्टसमवायशुद्धसमवायरूपसंबन्धभेदेनैव भेदः कुतो न संभवतीति चेत् तत्राह– **एकत्वप्रागभावविशिष्टेति** । एकत्वप्रागभावविशिष्टघटः संयोग-संबन्धेन नास्ति, एकत्वप्रागभावोपलक्षितघटः संयोगेन नास्तीति प्रतीती भवतः। तादृशप्रतीतिसिद्धयोः विशिष्टघटाभावोपलक्षितघटाभावयोः एकत्वप्राग-भावविशिष्टघटप्रतियोगिकसंयोग-शुद्धसंयोगयोः प्रतियोगितावच्छेदकत्वस्वीकारेण वैलक्षण्यं वक्तुं न शक्यते । एकत्वप्रागभाव विशिष्टघटप्रतियोगिकसंयोगस्या-प्रसिद्धेः । एकत्वप्रागभावविशिष्टघटो हि उत्पत्तिक्षणावच्छिन्नघटः । तस्मिन्नेव एकत्वप्रागभावसंभवात् । उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति न्यायात् । तत्र तेनैव न्यायेन संयोगाख्यगुणोऽपि नास्तीति एकत्वप्रागभावविशिष्टघटप्रतियोगिक-संयोगोऽप्रसिद्ध इति । तथा च विशिष्टाभावोपलक्षिताभावयोः प्रतियोगितावच्छेदक-संबन्धवैलक्षण्यात् वैलक्षण्यं न संभवतीति तदीयप्रतियोगितयोः व्यासज्यवृत्तित्व-तदभावाभ्यामेव वैलक्षण्यम् । व्यासज्यवृत्तित्वं नाम प्रतियोगितायाः विशेषण-विशेष्योभयवृत्तित्वम् । अव्यासज्यवृत्तित्वं विशेष्यमात्रवृत्तित्वमिति भावः ।।

**एकत्वप्रागभावविशिष्टघटादेरिति** । अस्य **अभावस्य** इत्यत्रान्वयः । **अभावस्य** इत्यत्र षष्ठ्यर्थः निरूपितत्वम् । तस्य **प्रतियोगितायाम्** अन्वयः ।

**प्रतियोगितायाम्** इत्यस्य **अवच्छेदकत्वासंभवेने**त्यत्रान्वयः । तदसंभवे हेतुः **अप्रसिद्धतयेति** । एवं च एकत्वप्रागभावविशिष्टघटनिरूपितसंयोगस्य अप्रसिद्धतया एकत्वप्रागभावविशिष्टघटनिष्ठसंयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावनिरूपित-प्रतियोगितावच्छेदकत्वं एकत्वप्रागभावविशिष्टघटप्रतियोगिकसंयोगस्य न संभवतीत्यर्थः । **अन्यथैव** प्रतियोगितायाः विशेषणविशेष्योभयवृत्तित्वस्वीकारेणैव एकत्वप्रागभावस्य विशेषणविधया प्रतियोगितावच्छेदकत्वं – एकत्वप्रागभाव विशिष्टघटनिष्ठप्रतियोगितानिरूपितावच्छेदकत्वं स्वीकृत्य तस्य उपलक्षणविधया प्रतियोगितावच्छेदकत्वापेक्षया वैलक्षण्यस्योपपादनीयतयेत्यर्थः । शिष्टं स्पष्टम् । अत्रत्य**गदाधरग्रन्थस्य** तात्पर्यं सावधानं ज्ञातव्यं भवतीति यथाशक्ति विस्तरेणैवालिखम् ।।

## गादाधरी

**मा भूद्वा विशिष्टनिरूपित**समवायत्वादिना प्रतियोगितावच्छेदकता-वच्छेदकसंबन्धता, तथापि महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वादेः **तद्विशिष्टवह्नित्वादेश्च** प्रतियोगितावच्छेदकतयोर्भेदेन वैलक्षण्यम् । **आद्या तद्धर्मावच्छिन्ना विशेष्यपर्याप्ता; अन्त्या** च विशेष्यविशेषणभावापन्नयोः **धर्मधर्मिणोः** द्वयोः पर्याप्तेत्येवंरीत्यैवोपपादनीया । **तावताप्यखण्डस्य** शुद्ध-वह्नित्वादेः हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमुपपद्यते । **धर्मान्तरो**पलक्षित-वह्नित्वाद्यवच्छिन्नाभावस्य धूमादिमत्य-वृत्तेः, विशिष्टवह्नित्वाद्यवच्छिन्नाभाव-प्रतियोगितावच्छेदकतायाश्च विशेषणान्तर्भावेणैव पर्याप्तेः ।।

## व्याख्या

विशेषरूपेण – महानसीयत्वसामानाधिकरण्यविशिष्टवह्नित्वावच्छिन्न प्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकतावच्छेदकसंबन्धः महानसीयत्वसामा-



नाधिकरण्यविशिष्टवह्नित्वप्रतियोगिकसमवायः, महानसीयत्वसामानाधिकरण्यो-पलक्षित-वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकतावच्छेदक-संबन्धः शुद्धसमवायः इत्येवं प्रतियोगितावच्छेदकतावच्छेदकसंबन्धभेदात् तयोरभावयोः भेदः पूर्वमुपपादितः । इत्थमुपपादनं समवायादेः विशेषरूपेण संबन्धत्वाङ्गीकारपक्षे संगच्छते । तथा अनङ्गीकारपक्षे तु उक्तरीत्या वैलक्षण्योपपादनासंभवात् प्रकारान्तरेण तयौर्वैलक्षण्यमाह – **माभूद्वेत्यादिना** । **विशिष्टनिरूपितेति** । महानसीयत्व-सामानाधिकरण्यविशिष्टवह्नित्वप्रतियोगिकसमवायत्वादिनेत्यर्थः । तद्विशिष्ट-वह्नित्वादेश्चेति । महानसीयत्वसामानाधिकरण्यविशिष्टवह्नित्वादेश्चेत्यर्थः । **आद्येति** । महानसीयत्वसामानाधिकरण्योपलक्षितवह्नित्वादिनिष्ठा प्रतियोगिता-वच्छेदकतेत्यर्थः । **तद्धर्मावच्छिन्नेति** । उपलक्षणीभूतं यत् महानसीयत्वसामानाधि-करण्यं तदवच्छिन्नेत्यर्थः । **विशेष्यपर्याप्ता** – वह्नित्वरूपविशेष्यपर्याप्ता । **अन्त्येति** । महानसीयत्वसामानाधिकरण्यविशिष्टवह्नित्वनिष्ठा प्रतियोगिता-वच्छेदकतेत्यर्थः । **धर्मधर्मिणोः** विशेषणविशेष्ययोः महानसीयत्वसामानाधिकरण्य-वह्नित्वयोरुभयोः पर्याप्ता । तथा च द्विविधयोरप्यभावयोः विलक्षणावच्छेदकताकत्वादेव वैलक्षण्यं संपादनीयम् । न तु पूर्वोक्तरीत्या संबन्धभेदेनेति भावः ।।

अत्र च महानसीयत्वविशिष्टवह्नित्ववान्नास्तीति प्रतीतिविषयाभावापेक्षया महानसीयवह्निर्नास्तीति प्रतीतिविषयाभावस्य वैलक्षण्यमेवं संपादनीयम् । प्रथमे महानसीयत्ववह्नित्वोभयोः प्रतियोगितावच्छेदकतापर्याप्त्या सह महानसीयत्वे प्रतियोगितावच्छेदकतावच्छेदकत्वमपि स्वीकर्तव्यम् । द्वितीये च महानसीयत्व-वह्नित्वयोः प्रतियोगितावच्छेदकतापर्याप्तिमात्रम्, न तु महानसीयत्वे प्रतियोगिता-वच्छेदकतावच्छेदकत्वमपीति । अस्मिन् पक्षे पर्वतो वह्निमान् धूमात् इत्यादौ साध्यतावच्छेदकवह्नित्वादेः प्रतियोगितानवच्छेदकत्वमुपपादयति– **तावतापीति** ।

**अखण्डस्येति** । महानसीयत्वाविशेषितस्य वह्नित्वादेरित्यर्थः । **धर्मान्तरेति** । महानसीयत्वसामानाधिकरण्येत्यर्थः । तथा च धूमाधिकरणपर्वतवृत्तिर्योऽत्यन्ताभाव इत्यनेन महानसीयत्वसामानाधिकरण्योपलक्षितवह्नित्ववदभावः न ग्रहीतुं शक्यते । तादृशवह्नित्ववतः पर्वतीयवह्नेः तत्र सत्त्वात् । अपि तु महानसीयत्वसामानाधिकरण्यविशिष्टवह्नित्वावच्छिन्नाभावः ग्रहीतुं शक्यते । तदीयप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणं महानसीयत्वसामानाधिकरण्यवह्नित्वोभयम्, तत्पर्याप्त्यनधिकरणं शुद्धवह्नित्वरूपं साध्यतावच्छेदकं भवतीति नाव्याप्तिरिति भावः ।।

## गादाधरी

**तत्त्वोपलक्षित**दण्डावच्छिन्नप्रतियोगिताकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकता च तत्तावच्छिन्ना शुद्धविशेष्य एव पर्याप्ता, साध्यतावच्छेदकताघटकशुद्धसंयोगादिसंबन्धावच्छिन्ना चेति तादृशसंबन्धेन दण्डादेः तादृशाभावप्रतियोगितानवच्छेदकत्वं दुरुपपादमिति सामञ्जस्यमिति वदन्ति ।।

## व्याख्या

अत्र मते दण्डिमान् दण्डिसंयोगात् इत्यत्र साध्यतावच्छेदकस्य दण्डस्य हेतुव्यापकतावच्छेदकत्वासंभवम् अत एव परंपरासंबद्धदण्डत्वस्य हेतुव्यापकतावच्छेदकत्वं च **दीधितिकारो**क्तमुपपन्नमित्याह– **तत्त्वोपलक्षितेत्यादिना** । अयं भावः – दण्डिमान् दण्डिसंयोगात् इत्यत्र दण्डिसंयोगरूपहेत्वधिकरणे एतद्भूतले तत्त्वोपलक्षितदण्डवतः भूतलान्तरवर्तिनः पुरुषस्य अभावोऽपि संभवति । तन्निरूपितप्रतियोगितावच्छेदकता च पूर्वोक्तरीत्या तत्त्वावच्छिन्ना शुद्धदण्ड एव पर्याप्ता, साध्यतावच्छेदकतावच्छेदकीभूतशुद्धसंयोगसंबन्धावच्छिन्नेति दण्डरूपसाध्यतावच्छेदकस्य हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपं



हेतुव्यापकतावच्छेदकत्वं दुर्घटमिति दण्डत्वस्य हेतुव्यापकतावच्छेदकत्वानुसरणं **दीधितिकृताम्** उपपन्नमिति ।।

## गादाधरी

(**वस्तुतः** गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे पारिभाषिकावच्छेदकत्वं निवेशनीयम् । तच्छरीरे यादृशं स्वं निविष्टं तादृशधर्मभेदनिवेशे वह्नित्वादौ विशिष्टवह्नित्वादिभेदासत्त्वेन तादृशधर्माविषयकप्रतीतिविषयत्वं निवेशनीयमिति गौरवम् ।।

अतः प्रतियोगितावच्छेदकं यादृशयादृशरूपं स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकतत्कत्वरूपं तत्तदतिरिक्तवृत्तित्वमेवानवच्छेदकान्तेन विवक्षणीयम् । तथा च सर्वासामेव दण्डादिव्यक्तीनां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतया कस्याश्चिदपि दण्डादिव्यक्तेः न यावत्प्रतियोगितावच्छेदकातिरिक्तवृत्तित्वम्, स्वस्य स्वातिरिक्तत्वविरहात् इत्यखण्डधर्मस्य व्यापकतावच्छेदकत्वानुसरणम् ।।)

## व्याख्या

अयं कुण्डलितो भागः केषुचित् कोशेषु न दृश्यते । अथापि यथास्थितं विवृणुमः । हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति परिष्कारे वह्निमान् धूमात् इत्यत्र धूमाधिकरणपर्वतवृत्तिर्यः सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्टं वह्नित्वं तदवच्छिन्नाभावः तत्प्रतियोगितावच्छेदकं यत् विशिष्टवह्नित्वं तद्भेदः साध्यतावच्छेदके शुद्धवह्नित्वे नास्तीत्यव्याप्तिः प्रसक्ता । तदुपरि कोटिक्रमेण पारिभाषिकावच्छेदकत्वं निवेशनीयमित्युक्त्वा तत्रापि दोषमाशङ्क्य पारिभाषिकावच्छेदकभेदोऽपि पारिभाषिक इत्याशङ्क्य स्वत्वघटिताभावकूटज्ञानासंभवेन

गुरुधर्मसाधारणं स्वरूपसंबन्धरूपमवच्छेदकत्वं निवेशनीयमित्याद्युक्तम् । तत्र पारिभाषिकावच्छेदकभिन्नत्वनिवेशापेक्षया लाघवात् लक्षणं परिष्कृत्य तद्रीत्या वह्निमान् धूमात् इत्यादावव्याप्तिवारणेऽपि दण्डिमान् दण्डिसंयोगात् इत्यत्राव्याप्ति-वारणासंभवात् परंपरासंबन्धेन दण्डत्वस्य साध्यतावच्छेदकत्वमाश्रितं **दीधिति-कारेणे**त्याह– **वस्तुत** इत्यादिना । तथा च एतद्रीत्या व्याप्तिलक्षणं तावत्– हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकं यद्यत् स्वविशिष्टसंबन्धि-निष्ठाभावप्रतियोगितावच्छेदकं तत्कं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्य-सामानाधिकरण्यं व्याप्तिरिति । पर्वतो वह्निमान् धूमात् इत्यत्र समन्वयः एवम्– स्वपदेन साध्यतावच्छेदकं वह्नित्वं ग्राह्यम् । तद्विशिष्टवह्निसंबन्धि महानसादि। तद्वृत्तिर्यः अभावः न वह्न्यभावः अपि तु घटाद्यभावः, तत्प्रतियोगितावच्छेदकं घटत्वादिकम् । तच्च धूमाधिकरणपर्वतवृत्त्यभावप्रतियोगितावच्छेदकम् । पर्वते घटाद्यभावस्य सत्त्वात् । तत्कं यत् साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्न-सामानाधिकरण्यं धूमेऽस्तीति समन्वयः । परं तु दण्डिमान् दण्डिसंथोगात् इत्यत्र अव्याप्तिः । तथा हि– स्वपदेन साध्यतावच्छेदकः दण्डः ग्राह्यः । दण्डपदेन तत्त्वविशिष्टस्य दण्डस्य ग्रहणे तद्विशिष्टतद्दण्डवत्पुरुषसंबन्धिनि भूतले एतद्दण्डवत्पुरुषाभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य एतद्दण्डे सत्त्वेऽपि तस्य दण्डिसंयोग इत्यनेन एतद्दण्डवत्पुरुषसंयोगस्यापि ग्रहीतुं शक्यतया तदधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वं नास्ति । अर्थात् हेतुपदेन यादृशदण्ड-वत्पुरुषसंयोगो गृह्यते तद्वृत्त्यभावप्रतियोगितावच्छेदकं दण्डान्तरमेव । तदपि साध्यतावच्छेदकान्तर्गततया स्वपदेन ग्रहीतुं शक्यमिति तद्विशिष्टसंबन्धिनिष्ठाभाव-प्रतियोगितावच्छेदकत्वं तस्य नास्तीत्यव्याप्तिः । अतः परंपरासंबद्धदण्डत्वस्य व्यापकतावच्छेदकत्वानुसरणमिति । ततश्च पारिभाषिकावच्छेदकत्वमपि न निवेश्यते।



पारिभाषिकानवच्छेदकत्वमपि न निवेश्यते । स्वरूपसंबन्धरूपावच्छेदकत्वाभाव-घटितमेव लक्षणमिति सिद्धम् ।।

## गादाधरी

**एतच्च** एकोत्त्यभिप्रायेण यथाश्रुतमूललक्षणमुपपादयितुं **सार्वभौम**प्रभृति-मतमनुसृत्य । **एकोक्त्यनादरे तु अनुगतरूपेण** नानाव्यक्तिविधेयतावच्छेदक-कानुमित्यौपयिकव्याप्तिः, **यद्रूपावच्छिन्नम**नवच्छेदकं, यद्रूपं वा अवच्छेदकतान-वच्छेदकं तद्रूपविशिष्टावच्छिन्नसामानाधिकरण्यं तद्रूपविशिष्टावच्छिन्ननिरूपिता व्याप्तिः इत्येवंरीत्या निदर्शनीया । **तथा सति** दण्डिसंयोगादिहेतुकापि दण्डि-मान् अयम् इत्याकारकानुमितिः **विशेषदर्शिनामपि** निर्वहति ।।

## व्याख्या

ननु साध्यादिभेदेन व्याप्तेर्भेदात् दण्ड्यादिसाध्यकसद्धेतौ अन्यादृशव्याप्ति-विवक्षया तल्लक्षणसमन्वयसम्भवात् परंपरासंबद्धदण्डत्वादेः साध्यतावच्छेदकत्वानु-सरणं **दीधितिकृताम**नावश्यकमित्याशङ्क्य सद्धेतुषु सर्वत्र अनुगता एका व्याप्तिर्वक्त-व्येत्याशयेन **सार्वभौम**प्रभृतिमतमनुसृत्य **दीधितिकारेण** तथोक्तम् । अनुगतैक-व्याप्त्यनादरे तु यत्र यत्र साध्यतावच्छेदकव्यक्तिः नाना तत्र सर्वत्रानुगता अन्यादृशी व्याप्तिर्निर्वक्तुं शक्या इत्याशयेनाह– **एतच्चेत्यादिना** । **एतच्च** – दण्ड्यादौ साध्ये परंपरासंबन्धेन दण्डत्वादेः हेतुव्यापकतावच्छेदकत्वानुसरणम् सर्वत्र सद्धेतौ एकरूपव्याप्तिप्रदर्शनार्थम् । **एकोत्त्यनादरे** तु– एकरूपशब्देन व्याप्त्य-भिधानस्यानादरे तु । **अनुगतरूपेणेत्यादि** । दण्डत्वाद्यनुगतरूपेण नानादण्डा-दिव्यक्तीनां यत्र अनुमितौ साध्यतावच्छेदकत्वं तादृशानुमितिजनकज्ञानविषयीभूता व्याप्तिः प्रकारान्तरेण निर्वचनीया । तथा हि– यद्धर्मावच्छिन्नं हेतुसमानाधि-करणात्यन्ताभावप्रतियोगितानवच्छेदकम्, अथ वा यद्धर्मः हेतुसमानाधिकरणात्यन्ता-

भावप्रतियोगितावच्छेदकतानवच्छेदकः तद्रूपविशिंष्टावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति निर्वचनं कार्यम् । तथा च अयं दण्डिमान् दण्डिसंयोगादित्यत्र यद्धर्मपदेन दण्डत्वं ग्राह्यम् । यद्धर्मावच्छिन्नः दण्डत्वावच्छिन्नदण्डः, दण्डिसंयोगरूपहेत्वधिकरणवृत्तिर्योऽभावः तद्दण्डवान्नास्तीति प्रतीतिसिद्धोऽभावः तत्प्रतियोगितावच्छेदकः तत्त्वविशिष्टदण्डः तत्प्रतियोगितानवच्छेदकः दण्डत्वविशिष्टदण्डो भवति तदवच्छिन्नः – तद्विशिष्टो दण्डी तत्सामानाधिकरण्यं दण्डिमद्भूतलवृत्तित्वरूपं दण्डिसंयोगरूपहेतावस्तीति आद्ये लक्षणसमन्वयः । द्वितीये यद्रूपम् इत्यनेन दण्डत्वं ग्राह्यम् । तच्च दण्डिसंयोगरूपहेत्वधिकरण-वृत्तिर्योऽभावः तद्दण्डिमान् नास्तीति प्रतीतिसिद्धः तद्दण्डवदभावः तत्प्रतियोगिता-वच्छेदकतावच्छेदकं तत्त्वम्, तद्भिन्नं भवतीति, तदवच्छिन्नो यो दण्डः तद्विशिष्टदण्डि-सामानाधिकरण्यं हेतावस्तीति लक्षणसमन्वयः । **अनुगतरूपेणेति** । दण्डत्वाद्यनुगत-रूपावच्छिन्ननानाव्यक्तिविधेयतावच्छेदककानुमित्यौपयिकव्याप्तिरित्यर्थः । **यद्रूपावच्छिन्नमित्यादि** । यद्रूपावच्छिन्नं हेतुसमानाधिकरणाभावप्रतियोगितान-वच्छेदकम्, यद्रूपं वा हेतुसमानाधिकरणाभावप्रतियोगितवच्छेदकतानवच्छेदकं तद्रूपविशिष्टावच्छिन्नसामानाधिकरण्यं तद्रूपविशिष्टावच्छिन्ननिरूपिता व्याप्तिः इत्येवं व्याप्तिर्लक्षणीयेत्यर्थः । व्याप्तिद्वयस्यापि समन्वयः पूर्वोक्तरीत्या अवधेयः ।।

अत्र प्रथमपक्षे एकस्मिन्नेव दण्डे तत्त्वावच्छेदेन प्रतियोगितावच्छेदकत्वं दण्डत्वावच्छेदेन प्रतियोगितावच्छेदकत्वाभावः इति वक्तव्यं भवति । इदं तु अवच्छेदकत्वस्याव्याप्यवृत्तित्वे एव भवेत् । संयोगादिवत् अवच्छेदकत्वस्य अव्याप्यवृत्तित्वं सविवादमिति मत्वा द्वितीयपक्षानुसरणम् ।।

अनयोः कल्पयोः परंपरासंबद्धदण्डत्वस्य साध्यतावच्छेदकत्वत्यागेन दण्डस्यैव साध्यतावच्छेदकत्वस्वीकारेण प्रवृत्तत्वात् अन्यदपि स्वारस्यमस्तीत्याह–



**तथा सतीति** । **विशेषदर्शिनामपीति** । दण्डस्य व्यापकतावच्छेदकत्वं न संभवतीति ज्ञानवतामपीत्यर्थः । **निर्वहतीति** । दण्डत्वाद्यनुगतधर्मावच्छिन्न-दण्डादिनिष्ठविधेयतावच्छेदकताकानुमितिं प्रति – दण्डिमान् इत्याकारकानुमितिं प्रति दण्डत्वविशिष्टे व्यापकतावच्छेदकत्वावगाहिव्याप्तिज्ञानस्य, दण्डत्वे व्यापकतावच्छेदकतावच्छेदकत्वावगाहिव्याप्तिज्ञानस्य वा कारणतया अभ्रान्तानामपि उक्तविधव्याप्तिज्ञानात् दण्डिमान् इत्याकारकानुमितिर्निर्वहति । अनुमितौ तद्धर्म-विशिष्टस्य विधेयतावच्छेदकतया भानं प्रति तद्धर्मविशिष्टस्य व्यापकतावच्छेदकत्वेन व्याप्तिज्ञाने भानं प्रयोजकम् । अनुमितौ तद्धर्मस्य विधेयतावच्छेदकतावच्छेदकतया भानं प्रति तस्य व्यापकतावच्छेदकतावच्छेदकत्वेन व्याप्तिज्ञाने भानं प्रयोजकमित्यु-पगमादिति भावः । दण्डत्वस्य परंपरासंबन्धेन व्यापकतावच्छेदकत्वमिति **दीधिति-कारपक्षे** तु दण्डे व्यापकतावच्छेदकत्वभ्रमादेव दण्डिमानित्याकारकानुमितिर्निर्वाह्येति भावः ।।

यद्यपि पूर्वमपि स्वाश्रयघटितपरंपरासंबन्धेन **''यत्र धर्मे व्यापकता-वच्छेदकत्वग्रहः''** इत्यादिग्रन्थेन विशेषदर्शिनामपि दण्डिमानित्याकारकानु-मितिनिर्वाहप्रकारो दर्शितः, तथापि एकरूपव्याप्तावेव परंपरासंबन्धेन विलक्षणकार्य-कारणभावकल्पनेन तादृशानुमित्युपपादनं कृतम् । अत्र तु एतादृशस्थले अन्या-दृशव्याप्तेरेव स्वीकृततया न नानाविधकारणत्वमिति भावः इति **अस्मत्पितृचरणाः** प्राहुः ।।

### गादाधरी

**एवम्** एकोक्त्या प्रतियोगिताधर्मिकोभयाभावघटितायाः **ग्रन्थकारेण** स्वयमुपदर्श-नीयायाः व्याप्तेरपि दण्डत्वादिविशिष्टदण्डाद्यवच्छिन्ननिरूपितत्वनिर्वाहः । हेतुसमानाधिकरणविशेषाभावप्रतियोगितायां दण्डत्वपृथिवीत्वव्याप्य-

जातित्वादिविशिष्टावच्छेद्यत्वाभावस्याव्याहतत्वात् **दण्ड्यादिसामान्या**भावप्रतियोगितायामेव तद्धर्मविशिष्टनिरूपित**विलक्षणा**वच्छेद्यत्वसत्त्वादिति ध्येयम् ।।

### व्याख्या

**दीधितिकारेण** स्वयं वक्ष्यमाणप्रतियोगिताधर्मिकोभयाभावघटितव्याप्तेः उक्त-प्रयासं विनैव दण्ड्यादिसाध्यकस्थले समन्वयो भवतीत्याह– **एवमित्यादिना**। ''प्रतियोग्यनधिकरणहेतुभन्निष्ठाभावीयप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व-यद्धर्मा-वच्छिन्नत्वोभयाभावः तेन संबन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम्'' इति **दीधितिकारो** वक्ष्यति । तथा च प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभाव-प्रतियोगितायां यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तद्धर्मावच्छिन्न-साध्यसामानाधिकरण्यं व्याप्तिः । यत्संबन्धपदेन साध्यतावच्छेदकसंबन्धः, यद्धर्मपदेन साध्यतावच्छेदकधर्मश्च विवक्षितः । एवं यद्धर्मपदेन यत्र यादृशं साध्यतावच्छेदकं विशिष्टम् अविशिष्टं वा तदेव ग्राह्यम् । दण्डिमान् दण्डिसंयोगात् इत्यत्र दण्डत्वविशिष्टदण्डः साध्यतावच्छेदकः । संयोगसंबन्धः साध्यतावच्छेदकसंबन्धः। तथा च तत्र हेतुः दण्डिसंयोगः तदधिकरणं भूतलं तद्वृत्तिः अभावः तद्दण्ड्यभावः तत्त्वविशिष्टदण्डावच्छिन्नप्रतियोगिताकाभाव इति यावत् । तदीयप्रतियोगितायां तत्त्वविशिष्टदण्डावच्छिन्नत्वमस्ति । न तु दण्डत्वविशिष्टदण्डरूपसाध्यतावच्छेदका-वच्छिन्नत्वमिति तदभावप्रयुक्तोभयाभावस्य सत्त्वात्, दण्डत्वविशिष्टदण्डावच्छिन्न-दण्डिसामानाधिकरण्यस्य हेतौ सत्त्वात् नाव्याप्तिः इति भावः ।।

एवं पृथिवीत्वव्याप्यजातिमद्वान् समवायेन पृथिवीमत्त्वात् इत्यत्र हेतु-समानाधिकरणघटत्वाद्यवच्छिन्नाभावीयप्रतियोगितायां घटादिनिष्ठायां शुद्धघटत्वाद्य-वच्छिन्नत्वसत्त्वेऽपि पृथिवीत्वव्याप्यजातित्वविशिष्टघटत्वावच्छिन्नत्वं नास्तीति तदभावप्रयुक्तस्य उभयाभावस्य सत्त्वात् तादृशजातित्वविशिष्टघटत्वाद्यवच्छिन्न-



घटादिसामानाधिकरण्यस्य पृथिव्यां हेतौ सत्त्वात् नाव्याप्तिरिति भावः । **दण्ड्यादिसामान्येति** । दण्डत्वविशिष्टवान्नास्तीति प्रतीतिसिद्धायां दण्डत्व-विशिष्टदण्डावच्छिन्नायां दण्डिनिष्ठायां प्रतियोगितायामेव दण्डत्वविशिष्टदण्ड-निरूपितायाः अवच्छेद्यतायाः सत्त्वात् हेतुमन्निष्ठतत्तद्दण्ड्यभावप्रतियोगितायां दण्डत्वविशिष्टदण्डावच्छेद्यत्वाभावात् तत्प्रयुक्तोभयाभावस्य सत्त्वान्नाव्याप्तिरिति भावः । **विलक्षणेति** । तद्दण्ड्यभावीयप्रतियोगितानिष्ठावच्छेद्यतापेक्षया विलक्ष-णायाः अवच्छेद्यतायाः सत्त्वात् । तद्धर्मविशिष्टेत्यत्र तद्धर्मपदं दण्डत्वपरम् । अनेन हेतुसमानाधिकरणतद्दण्ड्यभावीयप्रतियोगितायां दण्डत्वविशिष्टदण्डरूप-साध्यतावच्छेदकावच्छिन्नत्वं नास्तीति उपपादितं भवति । सूक्ष्मतया अवधेय-मेतत् ।।

### दीधितिः

**इत्थं च** इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात् इत्यादौ सत्ताधिकरण–गुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेः **नाव्याप्तिः** । साधनस्य विशिष्टसत्त्वादेः गुणादाववृत्तेः ।।

### गादाधरी

**इत्थं चेति** । **हेतुतावच्छेदकोपलक्षित**हेतुसामानाधिकरण्य**साधारण्यम्** उपेक्ष्य **विशिष्टसामानाधिकरण्यत्वेन** सामानाधिकरण्यनिवेशने चेत्यर्थः । **नाव्याप्ति-रिति** । **न विशिष्टसत्तात्व**रूपहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहि-ज्ञानजन्यानुमित्यौपयिकव्याप्त्यनिर्वाह इत्यर्थः । तेन विशिष्टसत्तात्वोपलक्षितहेतुमत्ता-ज्ञानजन्यानुमित्यौपयिकव्याप्तौ उपलक्षितहेतुसामानाधिकरण्यमेव निविष्टमिति लभ्यते । अतो द्रव्यत्वाद्यभावे **तादृशहेतुसामानाधिकरण्यसत्त्वात्** तादृशहेतौ

न द्रव्यत्वादेः व्याप्तिः **इत्यभ्रान्तानां** गुणादौ **विशिष्टसत्तात्वाद्युपलक्षितहेतु**मत्ता-ज्ञान**संभवेऽपि** न तत्र द्रव्यत्वाद्यनुमित्यापत्तिः ।।

व्याख्या

**प्रतियोग्यसमानाधिकरणयत्समानाधिकरणेति मणिग्रन्थस्थस्य यद्रूपविशिष्ट-समानाधिकरणेति पूर्वं दीधितौ व्याख्यानं कृतम्** । तथा व्याख्यानस्य प्रयोजनमाह– **दीधितौ इत्थं चेत्**यादिना । यद्रूपविशिष्टेत्यस्य हेतुतावच्छेदकविशिष्टेत्यर्थः । एवं व्याख्यानाकरणे प्रतियोग्यसमानाधिकरण-हेतुसमानाधिकरणेत्यादियथाश्रुतार्थस्वीकारे इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यत्राव्याप्तिः । गुणकर्मान्यत्वविशिष्टसत्ता द्रव्ये वर्तते, तत्र द्रव्यत्वं साध्यमपि वर्तत इत्ययं सद्धेतुः । अत्र हेतुपदेन गुणकर्मान्यत्वविशिष्टसत्ता यथा गृह्यते, तथा शुद्धसत्तापि ग्रहीतुं शक्यते। विशिष्टं शुद्धान्नातिरिच्यत इति न्यायात् । तथा च हेतोः सत्तायाः अधिकरणे गुणे कर्मणि च वर्तते योऽभावः द्रव्यत्वाभावः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं द्रव्यत्वत्वं भवतीत्यव्याप्तिः । हेतुतावच्छेदकविशिष्टहेत्वधिकरणविवक्षायां च हेतुतावच्छेदकं गुणकर्मान्यत्व-विशिष्टसत्तात्वं तदवच्छिन्नाधिकरणं द्रव्यमेव तद्वृत्त्यभावः न द्रव्यत्वाभावः, अपि तु गुणत्वाद्यभावः तत्प्रतियोगितावच्छेदकं गुणत्वत्वादि तदनवच्छेदकं द्रव्यत्वत्वरूपं साध्यतावच्छेदकं भवतीति नाव्याप्तिः इति व्याख्यानमपि उपरितन**दीधितिग्रन्थस्य** कर्तुं शक्यम् । ''इत्थं च'' इत्यस्य ''यद्रूपविशिष्ट'' इति पूर्वमुक्तत्वेनेत्यर्थात् । अत एव **विश्वनाथकृतमुक्तावल्यामपि**–

''हेत्वधिकरणं च हेतुतावच्छेदकविशिष्टाधिकरणं
वाच्यम् । तेन द्रव्यं गुणकर्मान्यत्वविशिष्ट-



सत्त्वात् इत्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठा-
भावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः''

इत्युक्तम् ।

परं तु **गदाधरभट्टाचार्याः** शङ्कान्तरवारणमपि कर्तव्यम् इत्याशयेन प्रकारान्तरेण व्याख्यानं कुर्वन्ति । तत् विवृणुमः । हेतुतावच्छेदकविशिष्टहेतुकस्थले हेतुतावच्छेदकविशिष्टहेतुमत्ताज्ञानम् अनुमितिकारणम् । हेतुतावच्छेदकोपलक्षित-हेतुकस्थले हेतुतावच्छेदकोपलक्षितहेतुमत्ताज्ञानम् अनुमितिकारणम् । तत्र हेतुतावच्छेदकविशिष्टहेतुमत्ताज्ञानजन्यानुमितिं प्रति हेतुतावच्छेदकविशिष्ट-हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्य-सामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्ताज्ञानं कारणम् । हेतुतावच्छेदकोप-लक्षितहेतुमत्ताज्ञानजन्यानुमितिं प्रति हेतुतावच्छेदकोपलक्षितहेतुसमानाधि-करणेत्यादिव्याप्तिविशिष्टहेतुमत्ताज्ञानं कारणमिति व्यवस्थां मनसिकृत्य **दीधितिग्रन्थः** प्रवृत्तः । तदाह– **हेतुतावच्छेदकोपलक्षितेत्यादिना** । **साधारण्यम्** – हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न-साध्यसामानाधिकरण्यत्वम् । **विशिष्टसामानाधिकरण्यत्वेनेति** । हेतुतावच्छेदका-वच्छिन्नहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यसामानाधि-करण्यत्वेनेत्यर्थः । **दीधितिग्रन्थस्य** यथाश्रुतार्थे हेतुतावच्छेदकविशिष्टहेतुकस्थले विशिष्टवैशिष्ट्यज्ञानमनुमितिजनकम्, हेतुतावच्छेदकोपलक्षितहेतुकस्थले हेतुतावच्छेदकोपलक्षितवैशिष्ट्यज्ञानमनुमितिजनकमिति व्यवस्थाया अलाभात् तल्लाभानुगुणतया व्याचष्टे - **न विशिष्टसत्तात्वेत्यादिना** । विशिष्टसत्तायां नाव्याप्तिरिति **दीधिति**ग्रन्थस्य अयमर्थः - गुणकर्मान्यत्वविशिष्टसत्तायां यादृशी व्याप्तिरपेक्षिता तस्याः अनिर्वाहो नेति । गुणकर्मान्यत्वविशिष्टसत्तावत् इदं द्रव्यम्

इत्याकारकानुमितिं प्रति गुणकर्मान्यत्वविशिष्टहेतुव्यापकसाध्यसमानाधिकरणतादृशविशिष्टसत्तावदिदं द्रव्यम् इत्याकारकज्ञानं कारणम् । गुणकर्मान्यत्वोपलक्षितसत्तावदिदं कर्म गुणो वा इत्याकारकानुमितिं प्रति गुणकर्मान्यत्वोपलक्षितसत्ताव्यापकसाध्यसमानाधिकरणगुणकर्मान्यत्वोपलक्षितसत्तावान् गुणः कर्म वा इति ज्ञानं कारणमिति व्यवस्था लभ्यते । एतादृशव्यवस्थायाः अनङ्गीकारे उभयविधानुमितिं प्रत्यपि हेतुतावच्छेदकविशिष्टहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानस्य हेतुत्वे गुणकर्मान्यत्वविशिष्टसत्ताधिकरणे द्रव्ये द्रव्यत्वाभावस्य असत्त्वात् अभावान्तरं गुणत्वाद्यभावं स्वीकृत्य तत्प्रतियोगितानवच्छेदकत्वस्य द्रव्यत्वत्वे सत्त्वेन तदवच्छिन्नसमानाधिकरणगुणकर्मान्यत्वोपलक्षितसत्तावान् गुण इति प्रमात्मकज्ञानासंभवेन तद्बलात् गुणो द्रव्यमित्याकारकानुमित्यापत्तिः स्यात् । अतः हेतुतावच्छेदकोपलक्षितहेतुमत्ताज्ञानजन्यानुमित्यौपयिकव्याप्तौ हेतुतावच्छेदकोपलक्षितहेतुव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमेव प्रविष्टमित्यङ्गीकरणीयम् । तथा सति गुणान्यत्वोपलक्षितसत्ताधिकरणे गुणे द्रव्यत्वाभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकमेव द्रव्यत्वत्वं न तदनवच्छेदकमिति **तद्गर्भ**व्याप्तिज्ञानस्यासत्त्वात् न गुणो द्रव्यमित्याकारकानुमित्यपत्तिरिति भावः । **उपलक्षितहेत्विति** । गुणकर्मान्यत्वविशिष्टसत्तात्वोपलक्षितेत्यर्थः । गुणकर्मान्यत्वोपलक्षितेति यावत् । **तादृशहेत्विति** । उपलक्षितहेत्वित्यर्थः । **तादृशहेतुसामानाधिकरण्यसत्त्वात्** इत्येतत् **अग्रे वक्ष्यमाणे व्याप्त्यभावे हेतुः** । तथा च उपलक्षितहेतुकस्थले उपलक्षितहेतुसामानाधिकरण्यघटितसाध्यसामानाधिकरण्यस्यैव व्याप्तितया उपलक्षितहेतौ च द्रव्यत्वरूपसाध्यनिरूपितव्याप्तेरभावादिति भावः । **इत्यभ्रान्तानामिति** । इत्याकारकभ्रमभिन्न-



ज्ञानवतामित्यर्थः । **संभवेऽपीति** । गुणकर्मान्यत्वोपलक्षितसत्तायाः गुणवृत्तितया गुणरूपपक्षे गुणकर्मान्यत्वोपलक्षितसत्तारूपहेतुमत्ताज्ञानस्य प्रमात्वात् ततो गुणरूपपक्षे द्रव्यत्वानुमितिः स्यात् । न चेष्टापत्तिरिति वाच्यम् । सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्वादिति भावः ।।

यद्यपि पक्षे हेतुमत्ताज्ञानमात्रं नानुमितिजनकम्, किं तु हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुमत्ताज्ञानमेव; तथापि ''विशिष्टसत्तात्वाद्युपलक्षित'' इति इदं हेतुव्यापकसाध्यसामानाधिकरण्यस्याप्युपलक्षणम् ।।

तथा च गुणकर्मान्यत्वविशिष्टसत्ताव्यापकद्रव्यत्वसमानाधिकरणविशिष्टसत्तात्वोपलक्षितसत्तावान् गुणः इति ज्ञानस्य प्रमात्वात्, उपलक्षितहेतुमत्ताज्ञानजन्यानुमित्यौपयिकव्याप्तावपि हेतुतावच्छेदकविशिष्टहेतुसमानाधिकरणत्वगर्भत्वस्वीकारे गुणो द्रव्यमित्याकारकानुमित्यापत्तिः । तद्वारणाय उपलिक्षतहेतुकानुमितिं प्रति उपलक्षितहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपव्याप्तिज्ञानमेव कारणमिति स्वीकरणीयम् । तथा सति तादृशहेतुव्यापकतावच्छेदकत्वस्य द्रव्यत्वत्वेऽभावात् तादृशव्याप्तिज्ञानस्य भ्रमत्वनियमान् भ्रमं विना गुणो द्रव्यमित्यनुमितिर्न भवतीति सिद्धम् ।।

## गादाधरी

**यत्र घटपटवृत्तिसंयोगत्वादिना** हेतुता, घटपटान्यतरत्वं साध्यम्, तत्रोभय-वृत्तित्वविशिष्टाधिकरणाप्रसिद्ध्या हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यगर्भव्याप्त्यन्तरमवश्यं स्वीकरणीयम् । **अन्यथा तद्धेतु**कतत्साध्यकानुमित्युच्छेदप्रसङ्गात् ।।

**ईदृशव्याप्त्यन्तरानभ्युपगमे** सादृश्यहेतुकानुमितिरप्युच्छिद्येत । **तद्धेद-सामानाधिकरण्य**सहिततद्वृत्तिधर्मत्वरूपसादृश्यत्वविशिष्टाधिकरणाप्रसिद्ध्या विशिष्टाधि-करणतागर्भव्याप्त्यसंभवात् ।।

**व्याख्या**

ननु हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यगर्भव्याप्त्यन्तरमेव मास्तु । तथा च गुणादौ उपलक्षितहेतुमत्ताज्ञानात् गुणो द्रव्यमित्याकारकानुमितेरपि नावकाशः । हेतुतावच्छेदकविशिष्टहेतुसामानाधिकरण्यगर्भव्याप्तेश्च विशिष्टपक्षधर्म-ताज्ञानसहकारेणैव अनुमितिप्रयोजकत्वाङ्गीकारेण पूर्वोक्तोपलक्षितहेतुमत्ताज्ञानस्य अनुमितिजनकत्वाभावादित्याशङ्कायाम् स्थलान्तरानुसारेण तादृशव्याप्त्यन्तरस्वीकार आवश्यक इत्याह– **यत्र घटपटवृत्तिसंयोगत्वादिनेति** ।।

अयं (घटः) घटपटान्यतरः घटपटवृत्तिसंयोगात् पटवत् । अयं सद्धेतुः । घटपटवृत्तिसंयोगवति घटे पटे च घटपटान्यतरत्वसद्भावात् । अत्र हेतुतावच्छेदकं घटपटवृत्तित्वविशिष्टसंयोगत्वम् । तदवच्छिन्नाधिकरणमप्रसिद्धम् । संभाविते अधिकरणे घटे पटे वा घटपटोभयवृत्तित्वविशिष्टसंयोगाधिकरणत्वाभावात् । घटे घटवृत्तित्वविशिष्ट संयोगस्य, पटे पटवृत्तित्वविशिष्टसंयोगस्य च सत्त्वेऽपि घटे पटे वा घटपटोभयवृत्तित्वविशिष्टसंयोगस्याभावादिति यावत् । तथा च तत्र हेतुतावच्छेदकोभयवृत्तित्वविशिष्टसंयोगाधिकरणाप्रसिद्ध्या उक्तविशिष्टहेतु-सामानाधिकरण्यगर्भव्याप्तिर्न संभवतीति, तादृशानुमित्युपपत्तये हेतुतावच्छेदको-पलक्षितहेतुसामानाधिकरण्यघटितव्याप्त्यन्तरमवश्यं स्वीकरणीयम् ।।

तत्स्वीकारे च घटपटवृत्तित्वोपलक्षितसंयोगव्यापकघटपटान्यतरत्वसमाना-धिकरणघटपटवृत्तिसंयोगवान् घटः पटो वा इति परामर्शात् घटः घटपटान्यतरः इत्याकारकानुमितिर्निर्वहतीति भावः । **अन्यथेति** । उपलक्षितहेतुसामानाधिकरण्य-



गर्भव्याप्त्यनङ्गीकारे इत्यर्थः । **तद्धेतुकेति** । घटपटवृत्तिसंयोगहेतुकघटपटान्यतरत्व-साध्यकानुमित्युच्छेदप्रसङ्गादित्यर्थः ।।

उपलक्षितहेतुसामानाधिकरण्यगर्भव्याप्त्यनङ्गीकारे प्रसिद्धस्थलेऽप्यनुमित्यनु-पपत्तिमाह– **ईदृशव्याप्त्यन्तरानभ्युपगम** इति । गवयो गवयपदवाच्यः गोसादृश्यात् इत्यनुमानम् । अयं भावः– उपमानस्य प्रमाणान्तरत्वं निराकर्तुं तत्स्थलीयप्रमितेः अनुमानेनैव निर्वाहः परैः आशङ्क्यते । तथा हि– गवयपदार्थमजानतः पुंसः गोसदृशो गवय इति अतिदेशवाक्यार्थज्ञानरूपात् करणात् पुरोवर्तिपिण्डदर्श-नानन्तरं गवयो गवयपदवाच्यः इत्याकारिका विलक्षणा प्रमितिः उपमित्याख्या जायत इति नैयायिकैरिष्यते । तन्न युक्तम् । गवयो गवयपदवाच्यः गोसादृश्यात् इत्यनुमानेनैव निर्वाहात् । तथा हि– गोसदृशो गवयपदवाच्यः इति आरण्यकपुरुषवाक्यात् यो यो गोसदृशः स गवयपदवाच्य इति व्याप्तिं ज्ञात्वा पश्चात् गवयपिण्डदर्शने तस्मिन् पिण्डे गोसादृश्यरूपं हेतुं पश्यति । अनन्तरं गवये गोसादृश्यव्याप्तिं स्मरति । ततः गोसादृश्यव्यापकगवयपदवाच्यत्वसामा-नाधिकरण्यरूपां व्याप्तिं स्मरति । ततो विशिष्टपरामर्शः, ततो गवयपदवाच्यत्वा-नुमितिः तस्य पुरुषस्य जायते इति ।।

अत्र **नैयायिकाः**– गोसादृश्ये गवयपदवाच्यत्वनिरूपितव्याप्ति-ज्ञानविरहदशायामपि गोसदृशो गवयपदवाच्यः इत्यतिदेशवाक्यार्थज्ञानानन्तरं गवयत्वविशिष्टे गोसादृश्यज्ञानात् गोसादृश्यधर्मितावच्छेदककगवयपदवाच्यत्वज्ञान-सहकृतात् गवयत्वावच्छिन्ने गवयपदवाच्यत्वज्ञानं यत् जायते तत्रानुमितित्वा-संभवात् तत् उपमित्याख्यं प्रमित्यन्तरमेवेति सिद्धान्तः । अत्र मतद्वयेऽपि सादृश्यस्य व्याप्यत्वमनुमतमिति तदनुरोधेन उपलक्षितहेतुसामानाधिकरण्यघटित-व्याप्त्यन्तरमेष्टव्यमिति ।।

अन्यथा अनुपपत्तिमाह– **तद्भेदसामानाधिकरण्येति** । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं तत्सादृश्यम् । गोसादृश्यं नाम गोभेदसामानाधिकरण्य-विशिष्टगोवृत्तिधर्मवत्त्वम् । हेतुतावच्छेदकविशिष्टहेतुसामानाधिकरण्यघटितव्याप्तेरेव सर्वत्रानुमितिप्रयोजकत्वे तद्भेदसामानाधिकरण्यविशिष्टतद्वृत्तिधर्मत्वरूपसादृश्यत्व-विशिष्टाधिकरणाप्रसिद्ध्या तद्घटितव्याप्त्यप्रसिद्धिः । तद्वृत्तित्वतदन्यवृत्तित्वोभय-विशिष्टाप्रसिद्धेः तदधिकरणाप्रसिद्धिः । तदप्रसिद्ध्या च तद्घटितव्याप्त्यप्रसिद्धिः इति । तथा च गोसादृश्यहेतुकानुमितिनिर्वाहाय हेतुतावच्छेदकोपलक्षितहेतु-सामानाधिकरण्यघटितव्याप्त्यन्तरमवश्यं स्वीकरणीयमिति भावः ।।

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं तत्सादृश्यमित्यस्यैव परिष्कृतं रूपं तद्भेदसामानाधिकरण्यविशिष्टतद्वृत्तिभूयोधर्मवत्त्वम् इति । तद्वृत्तिभूयो-धर्मवत्त्वमात्रोक्तौ स्वस्य स्वसादृश्यापत्तिः । अतस्तद्वारणाय तद्भिन्नत्वे सतीति । घटभिन्नपटादेः घटसादृश्यवारणाय विशेष्यम् । न चैवमपि घटवृत्तिद्रव्यत्वप्रमेयत्व-वाच्यत्वादिभूयोधर्मवत्त्वमादाय पटादेः घटसादृश्यापत्तिरिति वाच्यम् । उपमानोपमेय-भिन्नवृत्तिधर्मान्यत्वेन भूयोधर्मस्य विशेषणीयत्वेनादोषात् इत्याहुः ।।

## गादाधरी

**अथैवं** विशिष्टवैशिष्ट्यावगाहिज्ञाने विशिष्टनिरूपितसमवायस्य **संबन्धतया** तेन संबन्धेन व्याप्तिः हेतुतावच्छेदकसंबन्धेन हेतुमत्त्वस्याग्रे **विवक्षणीयतयैव** निर्वहतीति कथमत्र **विशिष्टपदोपादानम्** ।।

**न च** विशिष्टवैशिष्ट्यबोधे विशिष्टनिरूपितसमवायत्वादिना न **विशेषण-संबन्धता** । अपि तु शुद्ध एव समवायादिः विशेषणसंबन्धः । **स्वविशिष्ट-**निरूपितसमवायादिस्तु **विशेषणतावच्छेदकसंबन्ध** इति मताभिप्रायेण इदम् ।



तथा च **उक्तस्थलेऽपि** हेतुतावच्छेदकसंबन्धः शुद्धसमवाय एवेति हेतुतावच्छेदक-संबन्धमात्रविवक्षया न **प्रतीकार** इति वाच्यम् ।।

**हेतुतावच्छेदक**विशिष्टवैशिष्ट्यावगाहिज्ञाने हेतुतावच्छेदकस्य पक्षे परंपरा-संबन्धेन भाननियमेन व्यापकताशरीरघटकाभावाधिकरणेऽपि तदीयतादृशसंबन्धस्य निवेशितत्वात् तत एव हेतुतः पक्षे साध्यानुमितिनिर्वाहे विशिष्टसत्तात्वेन सत्तादेः द्रव्यत्वादिव्याप्तिस्वीकारस्य निरर्थकतापातात् ।।

## व्याख्या

अग्रे व्याप्तिघटकं हेत्वधिकरणत्वं हेतुतावच्छेदकसंबन्धेनेति वक्ष्यति । येन संबन्धेन हेतुमत्ताज्ञानमनुमितिं जनयति स एव हेतुतावच्छेदकसंबन्धः । इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यत्र हेतुमत्ताज्ञानं, इदं गुणकर्मान्यत्वविशिष्ट-सत्तावत् इत्याकारकं विशिष्टवैशिष्ट्यावगाहि ज्ञानरूपम् । विशिष्टवैशिष्ट्यावगाहिज्ञाने च विशिष्टनिरूपितसमवाय एव विशेषणस्य संबन्धः इत्येकं मतम् । शुद्धसमवायेन विशेषणं, स्वविशिष्टनिरूपितसमवायसंबन्धेन विशेषणतावच्छेदकम् अवगाहते इत्यपरं मतम् । तत्र प्रथममते विशिष्टनिरूपितसमवायस्य हेतुतावच्छेदकसंबन्धत्वम् द्वितीयमते शुद्धसमवायस्य तथात्वमिति विशेषः ।।

उपलक्षितवैशिष्ट्यावगाहिबुद्धौ च विशेषणस्य शुद्धसमवायेन भानम् । उपलक्षणस्य तु परंपरया अधिकरणे भानम् इति विशेषः ।।

एवं च प्रथमपक्षे हेतुतावच्छेदकवैशिष्ट्यानिवेशेऽपि इदं द्रव्यं गुणकर्मान्य-त्वविशिष्टसत्त्वात् इत्यत्र हेतुतावच्छेदकेन गुणकर्मान्यत्वविशिष्टसत्तानिरूपित-समवायसंबन्धेन सत्तारूपहेत्वधिकरणं द्रव्यमेव भवतीति तद्वृत्त्यभावो द्रव्यत्वा-भावो न भवति, अपि तु गुणत्वाद्यभावः तदप्रतियोगित्वरूपस्य हेतुव्यापकत्वस्य

द्रव्यत्वे सत्त्वेन अव्याप्त्यभावात् हेतुतावच्छेदकविशिष्टहेत्वधिकरणत्वविवक्षणं नावश्यकम् इत्याशयेन शङ्कते– **अथैवमित्यादिना** । **संबन्धतयेति** । हेतु-रूपविशेषणप्रतियोगिकसंबन्धतयेत्यर्थः । **तेन संबन्धेनेति** । गुणकर्मान्यत्वविशिष्ट-सत्ताप्रतियोगिकसमवायसंबन्धेनेत्यर्थः । विशिष्टनिरूपितसमवायरूपहेतुतावच्छेदक-संबन्धेन हेतुमत्त्वघटितव्याप्तेः, द्रव्यत्वे हेतुतावच्छेदकसंबन्धेन सत्ताव्यापकत्वस्य अक्षततया सद्भावेन हेतुतावच्छेदकवैशिष्ट्यनिवेशनमनावश्यकमिति शङ्कितुराशयः । **विवक्षणीयतयैवेति** । एवकारेण हेतुतावच्छेदकवैशिष्ट्यस्य विवक्षणीयता व्यवच्छिद्यते । **विशिष्टपदोपादानम्** - हेतुतावच्छेदकविशिष्टेति पदोपादानम् ।।

तत्र द्वितीयमतानुसारेण विशिष्टपदोपादानं सार्थकम् इति पृच्छति - **न चेति** । **विशेषणसंबन्धता** विशेषणप्रतियोगिकसंबन्धता । विशेषणमत्र हेतुः । **स्वविशिष्टेति** । हेतुतावच्छेदकविशिष्टेत्यर्थः । **विशेषणतावच्छेदकसंबन्धः** । अधिकरणविशेषणीभूतहेतुविशेषणीभूतं यत् हेतुतावच्छेदकं तत्प्रतियोगिकसंबन्ध इत्यर्थः । **इदम्** - विशिष्टपदोपादानम्, हेतुतावच्छेदकविशिष्टपदोपादानमिति यावत् । **उक्तस्थलेऽपि** । इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्यादित्यत्रापि । **न प्रतीकारः** नाव्याप्तिरूपदोषवारणम् ।।

न चेत्यादिशङ्कायाः समाधानमाह– **हेतुतावच्छेदकेत्यादिना** । द्वितीय-पक्षावलम्बने विशिष्टहेतौ व्याप्त्यन्तरमेव न स्वीकरणीयम् । गुणकर्मान्यत्ववैशिष्ट्य-हेतुकानुमित्यनुरोधेनावश्यं गुणकर्मान्यत्ववैशिष्ट्ये द्रव्यत्वनिरूपितव्याप्तेः कल्पनीयतया तादृशवैशिष्ट्यनिष्ठव्याप्त्यैव विशिष्टहेतुकानुमितिनिर्वाहसंभवात् विशिष्टसत्तायाः तत्र तत्र ग्रन्थे द्रव्यत्वव्याप्यत्वं यदभ्युपगतं तत् व्याहन्येत इति द्वितीयपक्षावलम्बन-मनुचितमिति भावः । तथा च इदं द्रव्यं गुणकर्मान्यत्वविशिष्टत्वात् इत्यनुमानमस्तु इति तात्पर्यम् ।।



## गादाधरी

न च दर्शितरीत्या विशिष्टव्यापकताग्रहस्य विशेषणव्यापकतावगाहित्वेऽपि विशिष्टपक्षधर्मताग्रहस्य विशेषणे तदवगाहित्वेऽपि च विशिष्टहेतुकपरामर्शस्य विशेषणे साध्यसामानाधिकरण्यावगाहित्वा**नियमात्** न विशेषणहेतुकानुमितिसामग्र्या विशिष्टहेतुकानुमितिपूर्वमावश्यकतेति वाच्यम् ।।

**साध्ये विशिष्टहेतोः** व्यापकताग्रहेऽपि विशिष्टहेतौ साध्यविरोधग्रहसत्त्वे अनुमित्यनुत्पत्त्या विशिष्टहेतुकस्थले विशिष्टाधिकरणत्वघटितहेतुसाध्यसामानाधि-करण्यविषयकस्यैव परामर्शस्यानुमितिहेतुता वाच्या । अन्यथा विरोधस्य जनक-ज्ञानाविरोधितया हेत्वाभासत्वस्य दुर्घटताप्रसङ्गादिति ।।

तथा च साध्यवति विशिष्टहेत्वधिकरणत्वभाने च विशेषणस्य परंपरा-संबन्धस्यापि तत्र भाननियमेन विशिष्टहेतुकपरामर्शस्य नियमतो विशेषणे साध्यसामानाधिकरण्यावगाहित्वात् ।।

## व्याख्या

विशिष्टनिरूपितव्याप्तेः विशिष्टसामानाधिकरण्यरूपायाः विशिष्टे भाने विशेषणे तादृशव्याप्तिभानं न संभवति । तथा हि– इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यत्र हेतुतावच्छेदकसंबन्धेन – गुणकर्मान्यत्वविशिष्टसत्ताप्रतियोगिकसमवाय-संबन्धेन हेतोः सत्तायाः अधिकरणं द्रव्यमेव, न गुणः कर्म वा । तयोः सत्तायाः शुद्धसमवायेन सत्त्वेऽपि उक्तसंबन्धेन असत्त्वात् । ततश्च हेत्वधिकरणद्रव्यनिष्ठा-भावाप्रतियोगिद्रव्यत्वसमानाधिकरणा गुणकर्मान्यत्वविशिष्टसत्ता इत्याकारकव्याप्तिज्ञाने सामानाधिकरण्यं सत्तायां भासते, न तु सत्ताविशेषणे गुणकर्मान्यत्ववैशिष्ट्ये । तथा च वैशिष्ट्ये व्याप्तिग्रहासंभवात् द्रव्यत्वव्याप्यत्वं वैशिष्ट्यस्य दुरुपपादमिति विशिष्टस्यैव व्याप्यत्वं संभवति न वैशिष्ट्यस्येति शङ्कितुराशयः । एतदुक्तं भवति-

गुणाद्यन्यत्वविशिष्टसत्ताव्यापकद्रव्यत्वसमानाधिकरणं विशिष्टसत्त्वम् इत्याकारकं हि व्याप्तिज्ञानम् । तस्मिन् ज्ञाने विशिष्टसत्त्वस्य विशेष्यतया भानात्, विशेषणतया तस्य भाने एव विशेषणतावच्छेदकस्यापि परंपरासंबन्धेन भानाभ्युपगमात् साध्यसामानाधिकरण्यस्य सत्तायां भाने तद्विशेषणे गुणकर्मान्यत्ववैशिष्ट्ये अभानात् इति ।।

**अनियमादिति** । द्रव्यत्वसमानाधिकरंणत्वस्य गुणकर्मान्यत्वविशिष्टसत्तायां भाने वैशिष्ट्ये द्रव्यत्वसमानाधिकरणवृत्तित्वस्य तुल्यवित्तिवेद्यतया भाने परंपरया वैशिष्ट्ये द्रव्यत्वसामानाधिकरण्यभानं संभवतीत्याशयेन अनियमादित्युक्तम् । **न च** इत्यादिना उत्थापितां शङ्कां समाधत्ते– **साध्ये विशिष्टहेतोः** इत्यादिना । अयमाशयः - इदं द्रव्यं द्रव्यान्यत्वविशिष्टसत्त्वात् इत्ययं विरुद्धहेतुः । अत्र यदि साध्यासामानाधिकरण्यं विरोधः तदा विशेष्ये सत्त्वे द्रव्यत्वसामानाधिकरण्यस्य सत्त्वेन द्रव्यान्यत्वविशिष्टसत्त्वे द्रव्यत्वसामानाधिकरण्याभावः न संभवति, विशेष्यवृत्तिधर्मप्रतियोगिकविशिष्टानुयोगिकाभावानङ्गीकारात् । अतः स्वविशिष्ट-निरूपिताधिकरणत्वाभाववत्साध्याधिकरणकत्वं विरोध इति विरोधलक्षणं परिष्करणीयम् । तत्र स्वपदेन हेतुतावच्छेदकं ग्राह्यम् । इदं द्रव्यं द्रव्यान्यत्व-विशिष्टसत्त्वात् इत्यत्र द्रव्यान्यत्वविशिष्टसत्तानिरूपिताधिकरणत्वाभाववत् साध्यद्रव्यत्वाधिकरणं द्रव्यं भवति, तत्कत्वरूपः विरोधः द्रव्यान्यत्वविशिष्ट-सत्तायामस्तीति विरोधलक्षणसमन्वयः । एतादृशविरोधज्ञानस्य नानुमितिप्रतिबन्ध-कत्वम्, अपि तु अनुमितिजनकव्याप्तिज्ञानप्रतिबन्धकत्वम् । तत्रापि न यथाश्रुतहेतुनिष्ठसाध्यसामानाधिकरण्यज्ञानप्रतिबन्धकत्वम्, असमानप्रकार-कत्वात् । अतः विरोधज्ञानस्य प्रतिबन्धकत्वनिर्वाहाय विशिष्टहेत्वधिकरणं यत्



विशिष्टहेतुव्यापकसाध्याधिकरणं तत्कत्वं व्याप्तिः इति व्याप्तिलक्षणं परिष्करणीयम् । इदं द्रव्यं द्रव्यान्यत्वविशिष्टसत्त्वात् इत्यत्र ''साध्यद्रव्यत्वाधिकरणं द्रव्यं द्रव्यान्यत्वविशिष्टसत्ताधिकरणत्वाभाववत्'' इत्याकारकं विरोधज्ञानं साध्याधिकरणे विशिष्टहेत्वधिकरणत्वावगाहिव्याप्तिज्ञानप्रतिबन्धकं भवतीति विरोधे हेत्वाभासलक्षणसमन्वयः ।।

इत्थं च हेतुतावच्छेदकविशिष्टहेत्वधिकरणीभूत-हेतुतावच्छेदकविशिष्टहेतु-व्यापकसाध्याधिकरणकत्वं व्याप्तिरिति पर्यवसानात् उक्तव्याप्तौ साध्याधिकरणे हेतुतावच्छेदकविशिष्टहेत्वधिकरणत्वस्य भाने परंपरासंबन्धेन वैशिष्ट्याधिकरणत्व-स्यापि नियमेन भानात् विशिष्टहेतुकपरामर्शस्य नियमेन विशेषणांशेऽपि साध्य-सामानाधिकरण्यावगाहित्वात् विशिष्टविषयकपरामर्शस्य विशेषणविषयकपरामर्श-रूपत्वात् क्लृप्तकारणताकतादृशपरामर्शविषयीभूतया विशेषणनिष्ठया व्याप्त्यैव निर्वाहे विशिष्टनिष्ठव्याप्तेः अनावश्यकताप्रसङ्गात् द्वितीयमताश्रयणमयुक्तमिति प्रथममतस्यैवाश्रयणीयतया, तत्र च विशिष्टनिरूपितसमवायस्यैव हेतुतावच्छेदक-संबन्धतया हेतुतावच्छेदकसंबन्धेन हेतुमत्त्वनिवेशेनैवोपपत्तौ हेतुतावच्छेदकवैशिष्ट्य-निवेशनं निष्फलमिति पूर्वपक्षः स्थितः ।।

## गादाधरी

मैवम् । विशिष्टनिरूपितव्यापकताशरीरे विशेषणस्य धर्मिपारतन्त्र्येणैव विशिष्टाधिकरणविशेषणतया प्रवेशः, न तु स्वातन्त्र्येण । तथा च तद्ग्रहे न विशेषणव्यापकतावगाहित्वनियमो निर्वहति । विशेषणनिरूपितव्यापकतयाः तद्वन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावघटित-त्वात् । विशिष्टवन्निष्ठाभावप्रतियोगितावच्छेदकत्वरूपप्रतियोग्युपरागेणाभावभाने

च विशिष्टवत्त्वान्तर्गतविशेष्यवत्त्वपरित्यागेन विशेषणवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वे प्रतियोगितावच्छेदकत्वपर्याप्तिभानासंभवात् **अभावप्रतियोगिप्रकारघटकस्य उपलक्षणतया भानानुपगमात्** ।।

## व्याख्या

अयमाशयः– विशिष्टवैशिष्ट्यावगाहिज्ञाने – गुणकर्मान्यत्वविशिष्टसत्तावैशिष्ट्यं व्यापकताघटकाधिकरणे यदा भासते तदा अधिकरणे विशेषणीभूतायाः विशिष्टसत्तायाः विशिष्टनिरूपितसमवायसंबन्धेन भानं भवति । तच्च भानं विशेषणतावच्छेदकतया गुणकर्मान्यत्ववैशिष्ट्यभानं विना न संभवति । अन्यथा विशिष्टवैशिष्ट्यावगाहितायाः अनुपपत्तेः । एतदुक्तं भवति - विशिष्टसत्तात्वेन विशिष्टसत्ता यत्र ज्ञाने प्रकारतया भासते, तत्रैव विशिष्टनिरूपितसमवायः विशेषणभूतविशिष्टसत्तायाः संसर्गः । शुद्धसत्तात्वेन सत्ताप्रकारकज्ञाने च शुद्ध एव समवायः संसर्गः । तथा च व्यापकताघटके हेत्वधिकरणे विशिष्टनिरूपित-समवायेन विशिष्टहेतोः भाने विशेषणतावच्छेदकतया वैशिष्ट्यभानमावश्यकम् । तत्रापि विशेषणतावच्छेदकस्य धर्मिभूतविशेषणपारतन्त्र्येणैव अन्यत्र अन्वयः ´न स्वातन्त्र्येण । तथा च विशिष्टव्यापकताग्रहे विशेषणव्यापकत्वग्रहो न संभवति । द्वयोः व्यापकतयोः व्यापकतावच्छेदकतयोश्च भेदात् । तथा हि– गुणकर्मान्यत्वविशिष्टसत्ताव्यापकतावच्छेदकत्वं – गुणकर्मान्यत्वविशिष्टसत्ताधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावः । गुणकर्मान्यत्ववैशिष्ट्यव्यापकतावच्छेदकत्वं – गुणकर्मान्यत्ववैशिष्ट्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावः इति ।।

ननु विशेष्यभूतसत्तायाः विशिष्टव्यापकत्वशरीरप्रविष्टप्रतियोगिकोटौ प्रवेशेऽपि तस्याः विशेषणीभूतवैशिष्ट्यवत् अधिकरणांशे उपलक्षणतया प्रवेशोऽस्तु, न तु तदन्तर्भावेण प्रतियोगितावच्छेदकत्वपर्याप्तिः । सा तु वैशिष्ट्यवदित्यादिव्यापकत्वघटकवैशिष्ट्यादिपदार्थस्यैव । एवं चैतादृशविशिष्टव्यापकत्वग्रहे विशेषणव्यापकत्वभानं सुघटमेव । अभावरूपव्यापकतावच्छेदकत्वयोर्भेदाभावात् इति शङ्कां निरस्यति– **अभावप्रतियोगीति । अनुपगमादिति ।** अन्यथा घटत्वावच्छिन्नाभावप्रतियोगितावच्छेदककोटौ उपलक्षणतया जातित्वमवगाह्य घटादिमति भूतले जातिमान्नास्तीति प्रतीत्यापत्तेरिति भावः ।।



## गादाधरी

**न च** परंपरासंबन्धेन विशेषणनिष्ठव्याप्त्यवगाहिपरामर्शनिष्ठकारणतायाः उभयवादिसिद्धत्वात् विशिष्टहेतुकपरामर्शान्तरकारणत्वाकल्पनप्रयुक्त**लाघवानुरोधेन** विशिष्टस्य व्याप्तिग्रहस्थले **अधिकरणे स्वातन्त्र्येण** विशेषणवत्त्वभानमुपगम्य विशेषणेऽपि व्याप्तिभानं कल्पनीयमिति वाच्यम् । **शब्दाधीन**विशिष्टवत्त्वगर्भव्याप्तिग्रहे स्वातन्त्र्येण विशेषणवत्त्वगर्भव्याप्तिभानानियमात् । **तादृशव्याप्तिबोधकशब्दस्य** स्वातन्त्र्येण **विशेषणत्वाभासकत्वात्** ।।

## व्याख्या

ननु स्वविशिष्टनिरूपितसमवायरूपपरंपरासंबन्धेन यत्र वैशिष्ट्यं हेतुः– यथा इदं द्रव्यं गुणकर्मान्यत्ववैशिष्ट्यात् इति तत्र वैशिष्ट्यनिष्ठव्याप्त्यवगाहिपरामर्शस्य स्वाश्रयनिरूपितसमवायसंबन्धेन गुणकर्मान्यत्ववैशिष्ट्याश्रयवृत्त्यभावाप्रतियोगिद्रव्यत्वसमानाधिकरणवैशिष्ट्यवदिदम् इत्याकारकस्य इदं द्रव्यमित्याकारकद्रव्यत्वसाध्यकानुमितिहेतुत्वमुभयवादिसिद्धम् । विशिष्टहेतुकस्थले विशिष्टहेतुकपरामर्शस्य पृथक् कारणत्वे गौरवं भवति । तद्घटकविशेषणनिष्ठव्याप्तिज्ञानादेवानुमितिनिर्वाहादिति युक्त्या विशिष्टपरामर्शस्थलेऽपि स्वातन्त्र्येण विशेषणवत्त्वस्य अधिकरणे भानं स्वीकृत्य विशेषणेऽपि व्याप्तिभानं कल्पनीयमिति शङ्कते– **नचेति** ।

**लाघवानुरोधेनेति** । अवश्यक्लृप्तकारणताकविशेषणविषयकपरामर्शादेव अनुमिति-निर्वाहिणान्यथासिद्धत्वादिति भावः । **अधिकरणे** – व्यापकताघटकेऽभावाधिकरणे । **स्वातन्त्र्येणेति** । विशेष्यमद्वारीकृत्येत्यर्थः ।।

न च परामर्शान्तरस्य कारणत्वं कल्प्यताम्, आहोस्वित् विशिष्टव्याप्तिग्रहे स्वातन्त्र्येण विशेषणवत्त्वस्य भानं कल्प्यताम् इत्यत्र विनिगमकाभाव इति वाच्यम् । अतिरिक्तकार्यकारणभावकल्पनापेक्षया क्लृप्तज्ञाने विशेषणभानमात्रकल्पने लाघवादिति ।।

उक्तशङ्कायाः समाधानमाह– **शब्दाधीनेत्या**दिना । यो यो गुणकर्मान्यत्वे सति सत्तावान् तत् द्रव्यं इत्याकारकात्, अथवा द्रव्यत्वव्याप्यगुणकर्मान्यत्व-विशिष्टसत्तावदिदमित्याकारकात् परामर्शाभिलापकवाक्यात् शब्दवृत्त्या जायमाने विशिष्टाधिकरणत्वगर्भव्यापकत्वज्ञाने एकदेशभूतविशेषणाधिकरणत्वघटित-व्यापकत्वस्य वृत्त्यन्तरं विना भानानियमादित्यर्थः । **तादृशव्याप्तिबोधक-शब्दस्येति** । विशिष्टाधिकरणत्वगर्भव्याप्तिबोधकशब्दस्येत्यर्थः । **विशेषणवत्त्वा-भासकत्वादि**ति । विशिष्टाधिकरणत्वघटितव्यापकत्वशक्तस्य पदस्य तादृशार्थ-बोधं प्रत्येव कारणतया विशेष्यांशपरित्यागेन विशेषणवत्त्वस्य स्वातन्त्र्येण भानप्रयोजकत्वाभावादित्यर्थः । अत एव विशिष्टवाचकपदानां लक्षणयैव एकदेशपरत्वं तत्र तत्रोच्यत इति भावः ।।

## गादाधरी

**अथ तत्र तदुत्तरं** विशेषणे मानसव्याप्तिग्रह एव अनुमित्यर्थं कल्प्यते, तत्कारणतायाः क्लृप्तत्वादिति चेत्– न । **एवं सति** दण्डाद्युपलक्षितधर्मिहेतुकानुमितेः विलयप्रसङ्गात् । तद्धेतुकव्याप्तिग्रहस्थले परंपरासंबन्धेनोपस्थितदण्डादौ व्याप्ति-ग्रहस्य कल्पनसंभवात् **स्वातन्त्र्येण सकल**परम्परासंबन्धघटित**सकल**विशेषण-वत्त्वग्रहस्य अप्रामाणिकतया विशेषणहेतुकपरामर्शस्य कारणतायाः **क्लृप्तत्वा-नियमाच्च** ।।



## व्याख्या

पूर्वं हेतुतावच्छेदकविशिष्टहेत्वधिकरणत्वगर्भव्यापकत्वशक्तपदस्य विशेष्यहेत्वंशपरित्यागेन विशेषणस्य स्वातन्त्र्येण स्वविशिष्टनिरूपितत्वसंबन्धेन व्यापकत्वघटकाधिकरणतायामन्वयबोधकत्वं न संभवतीत्युक्तम् । तत्र शङ्कते– **अथ तत्र तदुत्तरमिति** । पूर्वोक्तहेतुतावच्छेदकविशिष्टहेत्वधिकरणत्वव्यापकत्वस्य शब्दतः बोधानन्तरं स्वातन्त्र्येण विशेषणवत्त्वघटितव्यापकत्वविषयकं मानसं व्याप्तिज्ञानं जायते । तदेवानुमितिहेतुतया कल्प्यत इति शङ्कितुराशयः ।।

समाधत्ते– **एवं सती**त्यादिना । यत्र दण्डोपलक्षितः धर्मी पुरुषः हेतुः– अयं प्रदेशो दण्डिमान् दण्डोपलक्षितपुरुषात् इत्यत्र तत्र दण्डोपलक्षितपुरुष-व्यापकसाध्यदण्डिसमानाधिकरणदण्डिमानयं देशः इत्याकारकव्याप्तिज्ञानस्य अयं दण्डिमान् इत्याकारकानुमितिहेतुत्वमिष्यते । तत् नोपपद्यते । तत्रापि उपलक्षणस्य दण्डस्य स्वाश्रयपुरुषसंयोगरूपपरंपरासंबन्धेन साक्षात् धर्मिणि भूतलादिप्रदेशे भानमुपगम्य उपलक्षणे दण्डे व्याप्तेः तज्ज्ञानेऽनुमितिहेतुत्वस्य च संभवात् उपलक्षितहेतुकानुमितेरुच्छेदः स्यादिति समाधातुराशयः ।।

ननूपलक्षितधर्मिहेतुकानुमितेरुच्छेद इष्ट एवेति इष्टापत्तिमाशङ्क्य परंपरा-संबन्धेन हेतुतावच्छेदकस्य धर्मिणि भाने दूषणान्तरमाह– **स्वातन्त्र्येणेत्यादिना** । हेतुतावच्छेदकप्रतियोगिकपरंपरासंबन्धानां नानाविधत्वात् यत्र विशेषणस्य केनचित् परंपरासंबन्धेन स्वातन्त्र्येण अधिकरणघटितव्याप्तिविषयकः परमर्शो न जातः तत्र अनुमित्युपपादनाय साक्षात् विशिष्टाधिकरणत्वघटितव्याप्ति विषयकपरामर्शस्यैव

अनुमितिहेतुत्वोपपत्तये हेतुतावच्छेदकविशिष्टेत्युपादानमिति एतत्सूचनाय प्रथमं **सकल**पदम् । यत्र यादृशाङ्कुरादिविशेषात्मकस्य हेतुविशेषणस्य केनापि परंपरासंबन्धेन विशेषणाधिकरणत्वघटितव्याप्तिविषयकः परामर्शो न जातः तत्र विशिष्टपरामर्शस्यैव हेतुत्वमावश्यकमिति विशिष्टपदोपादानमिति सूचनाय द्वितीयं *सकल*पदमिति ध्येयम्। सर्वथा विशिष्टहेतुकपरामर्शस्य कारणत्वमावश्यकमिति सूचनायैव विशिष्टपदोपादानमित्युक्तं भवति ।।

**अप्रामाणिकतयेति** । उक्तरीत्या स्थलविशेषे विशेषणघटितव्यापकत्वावगाहिपरमर्शासंभवस्य दर्शितत्वात् सर्वत्र तादृशपरामर्शस्य प्रमाणविरुद्धत्वादिति भावः । **क्लृप्तत्वानियमा**दिति । सर्वत्रैव विशेषणपरमार्शः संभवतीति कल्पयितुमशक्यतया विशेषणहेतुकपरमर्शस्यानुमितिहेतुतायाः स्थलविशेषे उभयवादिसंप्रतिपन्नत्वाभावेन तस्याः क्लृप्तत्वासंभवेन विशिष्टपरमर्शस्यैव स्वीकरणीयतया तन्निर्वाहाय विशिष्टपदोपादानमिति स्थितम् ।।

## दीधितिः

**सामानाधिकरण्यव्यक्तीनां** भेदेऽपि निरूपकतावच्छेदकस्य अधिकरणतावच्छेदकस्य चैक्यात् व्याप्त्यैक्यम् ।।

## गादाधरी

**ननु वह्निसंयोगि**संयोगाद्यात्मकसाध्यसामानाधिकरण्यस्य व्याप्तित्वे **''एकैव हि सा व्याप्तिः''** इति मूलग्रन्थविरोधः । महानसपर्वतादिनिष्ठधूमादिगतवह्निसंयोगिसंयोगादेः ऐक्यासंभवादित्यत आह-**सामानाधिकरण्यव्यक्तीनामिति** । **अधिकरणभेदेन धूमादिभेदेन** चेत्यादिः । **निरूपकतावच्छेदकम्** – वह्नित्वादिरूपसाध्यतावच्छेदकम् । **अधिकरणतावच्छेदकम्** – धूमत्वादिरूपहेतुतावच्छेदकम्। **ऐक्यात्** – साध्यहेतुभेदेऽप्यभेदात् । तदभेदतात्पर्येणैक्यम्, भाक्त एकत्वव्यवहारः ।।



## व्याख्या

ननु हेतुव्यापकसाध्यसामानाधिकरण्यरूपा या व्याप्तिः सा पर्वतो वह्निमान् धूमात् इत्यत्र धूमव्यापकवह्निसंयोगिसंयोगरूपा । सा च साध्यवह्निव्यक्तिभेदेन हेतुधूमव्यक्तिभेदेन च भिन्ना । तथा च **''एकैव हि सा व्याप्तिः''** इति **वक्ष्यमाणमणिग्रन्थ**विरोध इति शङ्कासमाधानार्थं **सामानाधिकरण्यव्यक्तीनाम्** इति **दीधितिग्रन्थः** प्रवृत्त इत्याशयेनाह– **ननु वह्निसंयोगीत्यादिना** । **अधिकरणभेदेनेति** । साध्याधिकरणवृत्तित्वरूपसाध्यसामानाधिकरण्यघटकाधिकरणभेदेनेत्यर्थः । **धूमादिभेदेनेति** । आदिपदेन वह्निर्ग्राह्यः । तथा च साध्यव्यक्तिभेदेन हेतुव्यक्तिभेदेन तदुभयाधिकरणभेदेन च सामानाधिकरण्यव्यक्तीनां भेदात् व्याप्तिभेद इति नाशङ्कनीयम् । सामानाधिकरण्यनिरूपकतावच्छेदकस्य वह्नित्वादिरूपसाध्यतावच्छेदकस्य सामानाधिकरण्यरूपव्याप्त्यधिकरणतावच्छेदकधूमत्वादिरूपहेतुतावच्छेदकस्य चैक्यात् तत्तात्पर्येण लाक्षणिकः व्याप्त्येकत्वव्यवहारः **मणिकारस्य** इति भावः । साध्यसामानाधिकरण्यस्य साध्याधिकरणवृत्तित्वरूपत्वे तादात्म्यसंबन्धेन हेतुसाध्यकस्थलेऽव्याप्तिः स्यात्, तादात्म्यस्य वृत्त्यनियामकत्वात् इत्याशयेन वह्निसंयोगिसंयोगरूपेत्युक्तम् । **दीधितौ** सामानाधिकरण्यव्यक्तिभेदे हेत्वकथनेन न्यूनता स्यादिति तत्परिहाराय हेतुं पूरयति– **अधिकरणभेदेनेति** । **वह्नित्वादिरूपसाध्यतावच्छेदकमिति** । प्रकृते सामानाधिकरण्यनिरूपकतावच्छेदकं साध्यतावच्छेदकमित्याशयेनैवमुक्तम् । न तु निरूपकतावच्छेदकमित्यस्यैव साध्यतावच्छेदकमित्यर्थ इत्याशयेन । एवमधिकरणतावच्छेदकं हेतुतावच्छेदकमित्यर्थ इत्यत्रापि बोध्यम् ।।

ननु साध्यतावच्छेदकहेतुतावच्छेदकयोरैक्येऽपि सामानाधिकरण्यस्यैक्यं कथमित्यतः तात्पर्यमाह– **तदभेदेति** । तथा च **''एकै व हि सा व्याप्तिः''**

इति **मणिग्रन्थस्थ**स्य एकपदस्य एकसाध्यतावच्छेदकैकहेतुतावच्छेदकघटिता इत्यर्थे लक्षणेति भावः ।।

### दीधितिः

**वस्तुतस्तु** धूमत्वविशिष्टव्यापकवह्निसामानाधिकरण्यस्य **रासभादिसाधारण्यात्** धूमत्वादिमति **तादृशसामानाधिकरण्यं तद्वति धूमत्वादिकं** वा व्याप्तिः । **आद्या भिन्ना, द्वितीया तु अभिन्ना** इति ध्येयम् ।।

### गादाधरी

**ननु** लक्षणया **तद्व्यवहारसमर्थनम**संगतम् । सामान्यप्रत्यासत्त्यभावपक्षे विशिष्टपरामर्शनिर्वाहार्थं व्याप्त्यैक्यकथनात् **तन्निर्वाहस्य** च सामानाधिकरण्यस्य व्याप्तित्वे **धूमत्वादेरैक्येऽपि** पक्षीयधूमादिनिष्ठसामानाधिकरण्यस्य सामान्यप्रत्यासत्तिं विना पूर्वं ग्रहासंभवेन तत्स्मरणासंभवात्, पक्षीयधूमे तदुपनयासंभवेनायोगात् **अतः अतिप्रसङ्गेन च** धूमादिव्यापकवह्न्यादिसामानाधिकरण्यमात्रस्य व्याप्तित्वासंभवात् धूमत्वादिरूपहेतुतावच्छेदकस्य द्विधा व्याप्तिशरीरे प्रवेशस्य आवश्यकत्वं दर्शयन् व्याप्तेर्भेदमभेदं च दर्शयति– **वस्तुतस्तु** इत्यादिना । प्रथमपक्षप्रदर्शनं तत्पक्षे धूमत्वत्वाद्यप्रवेशात् लाघवेन सामान्यप्रत्यासत्तिपक्षे तज्ज्ञानस्यैवानुमितिहेतुत्वमिति सूचनाय । **रासभादिसाधारण्यादिति** । तत्साधारण्ये च भ्रमं विनापि रासभादिलिङ्गकवह्न्याद्यनुमानापत्तिरिति भावः ।।

### व्याख्या

**वस्तुतस्तु** इति **दीधितिग्रन्थ**मवतारयति– **नन्वित्यादिना** । **तद्व्यवहारसमर्थनमिति** । **मणिकृ**त्कृतस्य ''एकैव हि सा व्याप्तिरिति'' व्याप्त्येकत्वव्यवहारस्य लक्षणया समर्थनं न युक्तम् । सामान्यलक्षणाप्रत्यासत्त्यभावपक्षे प्रकृतपक्षे पर्वते प्रकृतसाध्यवह्निव्याप्तिविशिष्टप्रकृतहेतुधूमवत्ताज्ञानरूपपरामर्श-



संपत्त्यर्थं व्याप्त्येकत्वं कथितम् । तथा हि– महानसादौ वह्निधूमयोः भूयः सहचारदर्शनेन धूमे वह्निव्याप्तिं जानाति पुरुषः । अनन्तरं कदाचित् पर्वतसमीपं गत्वा तत्र धूमदर्शनानन्तरं वह्निव्याप्यो धूम इति व्याप्तिं स्मरति । अथ तादृशस्मरणाख्यालौकिकसंनिकर्षविषयीभूतव्याप्तिविशिष्टधूमवान् पर्वत इति परामर्शवान् भवति । ततः पर्वतो वह्निमान् इत्यनुमितिः तस्य पुरुषस्य भवति इति स्थितिः । तत्र पर्वते धूमदर्शनानन्तरं पर्वतीयधूमनिष्ठव्याप्तेरेव स्मरणमिति वक्तव्यम् । अन्यधूमगतव्याप्तिस्मरणेन अन्यत्र व्याप्तेः उपनयमर्यादया ग्रहणासंभवात् । एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेनैव धूमदर्शनस्य व्याप्तिस्मरणजनकतायाः वाच्यतया महानसीयधूमगतव्याप्तेः तदनाश्रयपर्वतीयधूमदर्शनेन स्मरणासंभवात् । पर्वतीयधूमगतव्याप्तेश्च पूर्वानुभवं विना स्मरणासंभवात्। अनुभवश्च पूर्वं महानसादौ महानसीयधूमादिनिष्ठव्याप्तेरेव । न च तदानीमेव सामान्यप्रत्यासत्त्या पक्षीयधूमनिष्ठव्याप्तेरपि ग्रहणं संभवतीति वाच्यम् । तथा सति धूमादिभेदेन व्याप्तेर्भेदेऽपि सामान्यलक्षणया निखिलव्याप्तिग्रहणसंभवेन प्रकारान्तरेण व्याप्त्यैक्यकथनस्यानुपयुक्तत्वात् । अतः सामान्यप्रत्यासत्त्यभावपक्ष एव व्याप्त्यैक्यकथनमिति भावः । एकसंबन्धिज्ञानमिति यदुक्तं तत्र संबन्धः हेतोः व्याप्तेश्च आधाराधेयभावरूप इति मनसिकृत्य पूर्वोक्तविवरणं द्रष्टव्यम् । **तन्निर्वाहस्येति** । विशिष्टपरामर्शनिर्वाहस्येत्यर्थः । **धूमत्वादेः ऐक्येऽपीति** । व्याप्तिघटकधूमत्ववह्नित्वयोरैक्येऽपि सामानाधिकरण्यरूपव्याप्तेः प्रतिधूमं भिन्नत्वेन सामान्यप्रत्यासत्त्यभावे पक्षीयधूमनिष्ठस्य वह्निसामानाधिकरण्यस्य पूर्वं ग्रहासंभवेन तत्स्मरणासंभवात् विशिष्टपरामर्शासंभव एवेति तन्निर्वाहाय सामान्यप्रत्यासत्तेरावश्यकत्वे प्रकारान्तरेण वह्नित्वधूमत्वादेरैक्यरूपेण न युक्तम् एकत्वनिर्वहणमित्याशयेन **वस्ततु** इत्यादि**दीधितिग्रन्थः** प्रवृत्त इति भावः ।

तदेतत् **अतः** इति पदेन अभिप्रेतम् । वस्तुत इत्यादिदीधितेः प्रवृत्तौ कारणान्तरमप्याह– **अतिप्रसङ्गेन चेति** । धूमव्यापकवह्निसामानाधिकरण्यस्य रासभादावपि सत्त्वेन तत्र वह्निव्याप्यापत्तिः अतिप्रसङ्गः । तद्वारणाय सामानाधिकरण्यविशेषणकोटौ सामानाधिकरण्यविशेष्यकोटौ च हेतुतावच्छेदकस्य धूमत्वस्य निवेश इत्यर्थः । तथा च धूमत्ववन्निष्ठं धूमव्यापकवह्निसामानाधिकरण्यं, धूमव्यापकवह्निसामानाधिकरण्यवन्निष्ठं धूमत्वं वा धूमस्य वह्निनिरूपिता व्याप्तिः । उभयविधापि व्याप्तिः रासभे नास्ति इति नातिव्याप्तिरिति भावः ।।

हेतुव्यापकसाध्यसामानाधिकरण्यरूपा व्याप्तिः पर्वतो वह्निमान् धूमात् इत्यत्र धूमव्यापकवह्निसामानाधिकरण्यरूपा भवति । तथा च धूमव्यापकवह्न्यधिकरणे पर्वते कदाचित् रासभस्य सत्त्वे तादृशसाध्यसामानाधिकरण्यस्य रासभेऽपि सत्त्वात् रासभस्य वह्निव्याप्यत्वापत्तिः इति शङ्कायामाह **दीधितौ वस्तुतस्त्विति** । धूमत्ववन्निष्ठं धूमव्यापकवह्निसामानाधिकरण्यं धूमनिष्ठा वह्निनिरूपिता व्याप्तिः । अथ वा धूमत्वविशिष्टव्यापकवह्निसामानाधिकरण्यवन्निष्ठं धूमत्वं व्याप्तिः । रासभनिष्ठे धूमव्यापकवह्निसामानाधिकरण्ये धूमत्ववद्धूमनिष्ठत्वं नास्ति । सामानाधिकरण्ययोः धूमनिष्ठरासभनिष्ठयोः भेदात् । एवं रासभे वह्निसामानाधिकरण्यवद्धूमनिष्ठं धूमत्वं नास्तीति रासभे नातिव्याप्तिः इति भावः । **तादृशसामानाधिकरण्यमिति** । धूमत्वविशिष्टव्यापकवह्निसामानाधिकरण्यमित्यर्थः । **तद्वति धूमत्वादिकम्** इति । धूमत्वविशिष्टवह्निसामानाधिकरण्यवद्धूमनिष्ठं धूमत्वमित्यर्थः । **आद्या भिन्नेति** । सामानाधिकरण्यरूपा व्याप्तिः साध्यवह्निहेतुधूमव्यक्तिभेदेन भिन्नेत्यर्थः । **द्वितीया त्वभिन्नेति** । धूमत्वादिजातेः एकत्वादिति भावः ।।



## गादाधरी

**अथ** व्यापकताप्रविष्टहेतुतावच्छेदकधर्मितावच्छेदककसामानाधिकरण्यप्रकारकज्ञानस्यैवानुमितिहेतुत्वोपगमात् नायमतिप्रसङ्गः । **धूमत्वादिप्रकारेण** भासमाने रासभादौ साध्यसामानाधिकरण्यस्य धूमत्वाद्यंशे भ्रमत्वनियमात् ।।

## व्याख्या

धूमव्यापकवह्निसामानाधिकरण्यरूपायाः यथाश्रुतव्याप्तेः रासभादिसाधारण्येऽपि तादृशव्याप्तिप्रकारकपक्षधर्मताज्ञानस्य अन्यादृशस्यैव अनुमितिकारणत्वमङ्गीकृत्य रासभादावतिव्याप्तिवारणसंभवात् **वस्तुतस्तु** इत्यादिना कल्पान्तरानुसरणं **दीधितिकृताम्** अनावश्यकमित्याशयेन शङ्कते **गादाधर्याम् – अथेत्यादिना चेदित्यन्तेन** । धूमव्यापकवह्निसामानाधिकरण्यं हि व्याप्तिः । तत्र व्यापकताशरीरे प्रविष्टं यत् हेतुतावच्छेदकं धूमत्वं तद्धर्मितावच्छेदककं सामानाधिकरण्यप्रकारकं ज्ञानमनुमितिहेतुरिति स्वीकुर्मः । धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति तादृशज्ञानस्य आकारः । अस्मिन् ज्ञाने व्यापकताप्रविष्टं धूमत्वं सामानाधिकरण्यस्य धर्मितावच्छेदकतया भासते । धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञाने तु सामानाधिकरण्यस्य धर्मितावच्छेदकतया रासभत्वं भासते, न तु व्यापकताघटकं धूमत्वमिति तादृशज्ञानस्य नानुमितिहेतुत्वम्, अतो न दोषः । अनुमित्युत्पादनं हि व्याप्तेः कार्यम् । ननु धूमव्यापकवह्निसमानाधिकरणधूमत्वेन रूपेण रासभावगाहि यत् धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्याकारकं धूमत्वांशे भ्रमात्मकं ज्ञानं तस्यापि व्यापकताप्रविष्टहेतुतावच्छेदकधर्मितावच्छेदककतया तादृशपरामर्शात् पर्वतो वह्निमान् इत्यनुमितिप्रसङ्ग इत्याशङ्क्याह– **धूमत्वादिप्रकारेणेति** । भ्रमात्मकपरामर्शस्य प्रमात्मकानुमितिजनकत्वान्न दोष इति भावः । तथा च सामाना[illegible]

रासभादिसाधारण्ये च न दोषः इति शङ्कितुराशयः । तथा च **वस्तुतस्तु** इति कल्पान्तरानुसरणं मास्तु इति भावः ।।

### गादाधरी

**वक्ष्यमाण**धूमत्वादिमन्निष्ठवह्न्यादिसामानाधिकरण्यस्य व्याप्तित्वेऽपि तद्धर्मितावच्छेदकतापन्नहेतुतावच्छेदकविशिष्टवत्ताज्ञानस्य हेतुताया अवश्योपेयत्वात् । अन्यथा विशिष्टसत्ताव्यापकद्रव्यत्वनिरूपितविशिष्टसत्तानिष्ठसामानाधिकरण्योपलक्षितवत्ताज्ञानात् गुणरूपपक्षे अभ्रान्तस्य द्रव्यत्वानुमानापत्तेः ।।

### व्याख्या

अपि च कल्पान्तरानुसरणेऽपि दोषोऽस्तीत्याह– **वक्ष्यमाणेत्यादि**ना । रासभे वह्निव्याप्यत्वप्रसङ्गवारणाय धूमत्ववन्निष्ठं धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिः इति स्वीकारेऽपि उक्तसामानाधिकरण्यधर्मितावच्छेदकतया धूमत्वावगाहिन धूमत्ववन्निष्ठं यत् धूमव्यापकवह्निसामानाधिकरण्यं तद्वद्धूमवान् पर्वतः इत्याकारकपरामर्शस्य पर्वतो वह्निमान् इत्याकारकानुमितिहेतुत्वमवश्यमङ्गीकरणीयम्, न तु धूमत्ववन्निष्ठधूमव्यापकवह्निसामानाधिकरण्यवद्वान् पर्वत इत्याकारकस्य निर्धर्मितावच्छेदककसामानाधिकरण्यप्रकारकज्ञानस्य । तथा सति इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यत्रापि गुणकर्मान्यत्वविशिष्टसत्तात्ववन्निष्ठंयत् विशिष्टसत्ताव्यापकद्रव्यत्वसामानाधिकरण्यं, तदुपलक्षितसत्तात्वं तदाश्रयवान् गुणः इति ज्ञानस्य गुणस्य तदाश्रयसत्ताश्रयतया प्रमात्मकत्वात् तादृशपरामर्शात् गुणो द्रव्यम् इत्याकारकभ्रमात्मकानुमित्यापत्तिः इति भावः ।।

### गादाधरी

साध्यसामानाधिकरण्यविशिष्टवत्त्वस्य पक्षे साध्यनिश्चयं विना दुर्निश्चेयतया तदुपलक्षितवत्ताविश्चयस्यापि अनुमितिहेतुतायाः उपगन्तव्यत्वात् ।।



### व्याख्या

ननु व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शात्मकज्ञानमेव सर्वत्रानुमितिहेतुः, न तु तदुपलक्षितवैशिष्ट्यावगाहिपरामर्श इति नोक्तापत्तिरित्यत आह– **साध्यसामानाधिकरण्यविशिष्टवत्त्वस्येति** । साध्यसामानाधिकरण्यवैशिष्ट्यं पक्षवृत्तिहेतोः पक्षे साध्यनिश्चयं विना ज्ञातुं न शक्यमिति साध्यसामानाधिकरण्योपलक्षितवत्ताज्ञानमेवानुमितिहेतुरिति पूर्वोक्तरीत्या गुणः विशिष्टसत्ताव्यापकद्रव्यत्वसामानाधिकरण्योपलक्षितसत्तावान् इत्याकारकप्रमात्मकपरामर्शात् गुणो द्रव्यम् इत्याकारकानुमित्यापत्तिरिति भावः ।।

### गादाधरी

**केवलसामानाधिकरण्यप्रकारेण** पक्षधर्मताज्ञानस्य अनुमितिहेतुत्वे धूमाभाववान् पक्षः इत्यसिद्धिग्रहदशायामपि साध्ये धूमादिव्यापकताज्ञानादपि अनुमित्यापत्तेश्च । असमानप्रकारतया धूमाभाववान् पक्ष इत्यादिबुद्धेः धूमादिवृत्तिसामानाधिकरण्यवद्वान् पक्षः इत्यादिज्ञानाविरोधित्वादिति **चेत्**–

### व्याख्या

गुणो न द्रव्यमित्याकारकबाधनिश्चयाभावे पूर्वोक्तपरामर्शात् गुणो द्रव्यमित्यनुमितिरिष्टैवेति यदि ब्रूयात् तदा दोषन्तरमाह– **केवलसामानाधिकरण्यप्रकारेणेति** । केवलशब्देन हेतुतावच्छेदकव्यवच्छेदः । तथा च हेतुतावच्छेदकविशिष्टहेतुव्यापकसाध्यसामानाधिकरण्यवद्वान् इत्याकारकपरामर्शस्यानुमितिहेतुत्वे ह्रदो वह्निमान् धूमात् इत्यत्र धूमाभाववद्ध्रदरूपस्वरूपासिद्धेः हेत्वाभासत्वं न स्यात् । स्वरूपासिद्धिज्ञानस्य हि परामर्शघटक - हेतुमान् पक्षः इत्यंशे प्रतिबन्धकतया तद्विषयभूतायाः स्वरूपासिद्धेः हेत्वाभासत्वं संघटनीयम् । यदि तु धूमव्यापकवह्निसामानाधिकरण्यवद्वान् ह्रदः इत्याकारकस्य परामर्शस्यानुमितिहेतुत्वं स्यात्

तदा धूमत्वाप्रकरकसामानाधिकरण्यप्रकारकधूमविषयकहृदविशेष्यकपरामर्शं प्रति धूमाभाववान् ह्रद इति स्वरूपासिद्धिज्ञानस्याप्रतिबन्धकतया स्वरूपासिद्धेः हेत्वाभासत्वं न स्यात् अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्वाभावादिति भावः ।।

## गादाधरी

सत्यम् । **धूमत्वादिमति** सामानाधिकरण्यमित्यस्य धूमत्वादिविशिष्ट-विशेषणतापन्नं सामानाधिकरण्यमित्यर्थः, न तु धूमादिवृत्तित्वविशेषितं सामानाधि-करण्यमिति । तथा च एकधर्मिविशेषणतापन्नधूमत्वादिरूपहेतुतावच्छेदकसामाना-धिकरण्योभयं व्याप्तिरिति पर्यवसितम् ।।

**कारणं च धूम**व्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिरेव परामर्शः । तावतैव उभयस्य हेतुविशेषणतया अनुमितिजनकज्ञानविषयत्वरूप-व्याप्तित्वनिर्वाहः ।।

**द्वितीयपक्षे** च धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् पर्वत इति ज्ञानं हेतुः, न तु स्वरूपतो धूमत्वाप्रकारकं तादृशधूमत्ववद्वान् पक्ष इत्या-कारकम् । तादृशज्ञानस्य धूमाभाववान् पक्षः इत्याकारकासिद्धिज्ञानाप्रतिबध्यत्वात् ।।

## व्याख्या

**धूमत्वादिमति** तादृशसामानाधिकरण्यमिति **दीधितिग्रन्थस्य** धूमत्ववद्धूम-वृत्तित्वविशिष्टं धूमव्यापकवह्निसामानाधिकरण्यमिति नार्थः, येन पूर्वोक्तदोषाः स्युः । अपि तु धूमत्ववद्धूमविशेषणतापन्नं धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः । तथा च धूमरूपैकवस्तुविशेषणतापन्नं धूमत्वरूपहेतुतावच्छेदक-साध्यसामानाधिकरण्योभयं व्याप्तिः इत्यर्थः पर्यवसन्नः । रासभे कदाचित् वह्निरूपसाध्याधिकरणपर्वतादिवृत्तित्वसत्त्वेऽपि धूमत्वरूपं हेतुतावच्छेदकं नास्तीति



न तस्य वह्निव्याप्यत्वप्रसङ्गः । व्याप्तिविषयकपरामर्शस्य आकारस्तु धूमव्यापकवह्निसमानाधिकरणधूमवानित्येव । अस्मिन् परामर्शे धूमे धूमत्वस्य वह्निसामानाधिकरण्यस्य चोभयस्य प्रकारतया भानात् । न तु स्वरूपतो धूमत्वाप्रकारकं धूमत्वत्वेन धूमत्वप्रकारकं यत् धूमव्यापकवह्निसमानाधिकरण-धूमत्ववद्वान् पर्वत इत्याकारकज्ञानं पर्वतो वह्निमान् इत्यनुमितिहेतुः । तथा सति स्वरूपेण धूमत्वप्रकारकस्य धूमाभाववान् पक्षः (ह्रदः) इत्याकारकस्य स्वरूपासिद्धिज्ञानस्य धूमत्ववद्वान् पक्ष इत्याकारकज्ञानं प्रत्यप्रतिबन्धकत्वेन स्वरूपासिद्धेः हेत्वाभासत्वानुपपत्तेः । अनुमितिस्वरूपासिद्धिज्ञानयोः समान-प्रकारकत्वाभावात् इति भावः । अथ पङ्क्त्यर्थः–

**धूमत्वादिमतीति । धूमत्वादिमति तादृशसामानाधिकरण्यमिति दीधितौ** "धूमत्वादिमति" इत्यतोऽनन्तरं विशेषणतापन्नमिति पदमध्याहर्तव्यम् । धूमत्वादिमति इत्यत्रत्यसप्तम्याः नाधेयत्वमर्थः, किं तु अध्याहृतं यत् विशेषणतापन्नमिति पदं तदर्थैकदेशविशेषणतान्वयिनिरूपितत्वमर्थः । तथा च धूमत्ववन्निरूपितविशेषणतापन्नं सामानाधिकरण्यमिति अर्थः । तेन धूमत्वरूप-हेतुतावच्छेदकसाध्यसामानाधिकरण्ययोः परस्परं धर्मितावच्छेदकप्रकारभावविवक्षया एकधर्मिविशेषणतापन्नधूमत्वादिरूपहेतुसाध्यसामानाधिकरण्योभयं व्याप्तिरिति लभ्यते इत्याशयः । **कारणं चेति । धूमेत्यादि** । न तु एकत्र द्वयमिति रीत्या धूमत्ववह्निसामानाधि करण्योभयावगाहिपरामर्शो हेतुः । तथात्वे विरोधस्य हेत्वाभासत्वानुपपत्तिः । यतः हेतुतावच्छेदकावच्छिन्ने साध्यासामानाधिकरण्य-रूपविरोधज्ञानस्य हेतुतावच्छेदकावच्छिन्ने साध्यसामानाधिकरण्यावगाहिज्ञानं प्रत्येव प्रतिबन्धकत्वात् । एकत्र द्वयमिति रीत्या अवगाहिपरामर्शस्य अतादृशत्वादिति भावः ।।

ननु **तद्वति धूमत्वादिकं व्याप्तिः** इति दीधित्युक्तद्वितीयपक्षे धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्वान् पर्वत इत्याकारकपरामर्शस्यानुमितिहेतुत्वमिति प्रतीयते । तथा सति तादृशज्ञानस्य धूमत्वत्वेन धूमत्वप्रकारकतया स्वरूपतो धूमत्वप्रकारकधूमाभाववान् पक्ष इत्याकारकस्वरूपासिद्धिज्ञानप्रतिबध्यत्वं न स्यात्, प्रतियोग्यंशे समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्वात् इत्याशङ्कायामाह– **द्वितीयपक्षे चेति** । तथा च द्वितीयपक्षे धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् पर्वतः इति ज्ञानमनुमितिहेतुः । अस्मिन् ज्ञाने धूमवान् पर्वतः (पक्षः) इत्यंशे स्वरूपतो धूमत्वप्रकारकत्वसद्भावात् तदंशं प्रति स्वरूपतो धूमत्वप्रकारकधूमाभाववान् पर्वतः इत्याकारकस्वरूपासिद्धिज्ञानस्य प्रतिबन्धकतया आश्रयासिद्धेः हेत्वाभासत्वमुपपद्यत इति भावः ।।

## गादाधरी

**एतन्मते च** हेतुतावच्छेदकवृत्त्यसाधारणधर्मावच्छिन्ने साध्यसमानाधिकरणावृत्तित्वमेव विरोधः, न तु हेतुतावच्छेदकावच्छिन्ने साध्यासामानाधिकरण्यम् । **उपदर्शितज्ञानस्य** हेतुतावच्छेदकं धर्मितावच्छेदकीकृत्य साध्यसामानाधिकरण्यानवगाहितया तथाविधविरोधज्ञानाप्रतिबध्यत्वात् ।।

## व्याख्या

ननु हेतुतावच्छेदकविशिष्टे हेतौ साध्यासामानाधिकरण्यं विरोधः । तद्विषयकज्ञानं च हेतुतावच्छेदकविशिष्टे हेतौ साध्यसामानाधिकरण्यावगाहिज्ञानं प्रत्येव प्रतिबन्धकम् । पूर्वोक्तव्याप्तिज्ञानं च धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् इत्याकारकम् । तत्र सामानाधिकरण्यधर्मितया हेतुतावच्छेदकधूमत्वविशिष्टस्याभानात् तादृशज्ञानप्रतिबन्धकत्वमुक्तविरोधज्ञानस्य नास्तीति विरोधस्य हेत्वाभासत्वानुपपत्तिः इत्यत आह– **एतत्न्मते चेति** ।



धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् पर्वत इत्याकारकं हेतुतावच्छेदके साध्यसमानाधिकरणवृत्तित्वावगाहिज्ञानमनुमितिहेतुरिति मते हेतोः साध्यासामानाधिकरण्यं न विरोधः, अपि तु हेतुतावच्छेदकवृत्त्यसाधारणधर्मावच्छिन्ने धूमत्वत्वावच्छिन्ने साध्यसमानाधिकरणावृत्तित्वं विरोधः । तथा च धूमत्वं वह्निसमानाधिकरणावृत्ति इति विरोधज्ञानस्य आकारः । पूर्वोक्तव्याप्तिज्ञाने धूमत्वत्वावच्छिन्ने वह्निसमानाधिकरणवृत्तित्वं भासते । तदंशज्ञानं प्रति उक्तविरोधज्ञानं तद्धर्मावच्छिन्ने तदवगाहिज्ञानं प्रति तद्धर्मावच्छिन्ने तदभावावगाहिज्ञानं प्रतिबन्धकमिति रीत्या प्रतिबन्धकत्वमुपपद्यत इति भावः । **उपदर्शितज्ञानस्येति** । धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् पर्वत इत्याकारकज्ञानस्येत्यर्थः । अस्य ज्ञानस्य धूमत्वांशे साध्यसामानाधिकरण्यधर्मितावच्छेदकत्वानवगाहितया न विरोधज्ञानप्रतिबध्यत्वम् । समानधर्मितावच्छेदककज्ञानयोरेव प्रतिबध्यप्रतिबन्धकभावात् इति भावः ।।

## गादाधरी

यदि विरोधस्यानुमितिं प्रति **साक्षाद्विरोधितया** हेत्वाभासत्वमुपपादयितुं शक्यते तदा समानाधिकरणवृत्तित्वांशे **निर्धर्मितावच्छेदककं** समानाधिकरणवृत्तिमद्धूमवान् पर्वत इत्येतादृशमपि ज्ञानं हेतुरुपेयते । **अन्यथा धूमत्वत्वादि**विषयतायाः कारणतावच्छेदककुक्षौ प्रवेशे गौरवात् । **सामानाधिकरण्य**प्रकारकत्वापेक्षया समानाधिकरणवृत्तिप्रकारकत्वस्य गुरुत्वेऽपि **सामान्य**प्रत्यासत्त्यसत्त्वे विशिष्टपरामर्शनिर्वाहानुरोधेन तेन रूपेण हेतुताया अवश्योपगमात् ।।

## व्याख्या

एतावता विरोधस्य अनुमितिकारणपरामर्शविरोधित्वमिति पक्षमनुसृत्य विरोधस्वरूपं प्रदर्शितम् । अथ विरोधस्य साक्षादनुमितिविरोधित्वमिति पक्षे

व्याप्तिविषयकपरामर्शः धूमव्यापकवह्निसमानाधिकरणवृत्तिमद्धूमवान् पर्वत इत्याकारकः। वह्निसमानाधिकरणः धूमः तद्वृत्तिमान् तन्निरूपिताधेयतावान् धूमत्वरूपो धर्मः तद्वान् धूमः तद्वान् पर्वत इत्यर्थः । अत्र परामर्शे आधेयत्वाख्यवृत्तेः धर्मितावच्छेदकतया धूमत्वं न भासत इति विशेषः । अत एव धूमत्वत्वमपि न भासते इति लाघवात् । पूर्वं तु धर्मितावच्छेदकतया धूमत्वस्य भानात् तस्य च धूमांशे प्रकारतया भानात् जातेः यत्र प्रकारतया भानं तत्र तस्याः किंचिद्रूपेणैव भानमिति नियमात् धूमत्वत्वेन भानस्यावश्यकतया तस्य धूमेतरावृत्तित्वे सति सकलधूमवृत्तित्वरूपतया अधिकविषयकत्वं परामर्शस्येति गौरवमिति भावः । **साक्षाद्विरोधितयेति** । हेतौ साध्याभावव्याप्यत्वमेव विरोधः । तच्च साध्यवदवृत्तित्वरूपम् । साध्यासामानाधिकरण्यं साध्यवदवृत्तित्वरूपम्। साध्याभावव्याप्यत्वमपि साध्याभावाभाववदवृत्तित्वं साध्यवदवृत्तित्वे पर्यवस्यति। हेतुः साध्यवदवृत्तिः इति ज्ञानस्य हेतुमान् पक्ष इति ज्ञानविशिष्टस्य अनुमिति प्रतिबन्धकत्वं कल्प्यते । साध्यवदवृत्तिहेतुमान् पक्ष इति सत्प्रतिपक्षज्ञानस्येव विरोधज्ञानस्यापि ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वम् । सत्प्रतिपक्षज्ञानस्य विरोधज्ञानस्य च पृथक् पृथक् प्रतिबन्धकत्वापेक्षया उभयोरपि ज्ञानविशिष्टज्ञानत्वेन एकप्रतिबन्धकत्वकल्पने लाघवात् इति ''विरोधोऽपि फलतः प्रतिरोध एव'' इति **हेत्वाभासप्रकरणे दीधितौ** वक्ष्यतीति भावः ।।

**निर्धर्मितावच्छेदककमिति** । आधेयताख्यवृत्तेः धर्मितावच्छेदकतया धूमत्वमनवगाहमानमित्यर्थः । अस्य परमर्शस्य हेतुत्वानुपगमे बाधकमाह– **अन्यथेति** । **धूमत्वत्वेति** । धूमेतरावृत्तित्वविशिष्टसकलधूमवृत्तितायाः विषयत्वे गौरवमिति भावः । पूर्वकल्पे तु विरोधज्ञानस्य प्रतिबन्धकत्वानुरोधेन तादृशगौरवं सह्यम् । अत्र कल्पे तु निष्प्रयोजनतादृशगौरवसहिष्णुतायाः अन्याय्यत्वादित्याशयः ।।



ननु समानाधिकरणवृत्तिप्रकारेण धूमावगाहिज्ञानापेक्षया सामानाधिकरण्यप्रकारेण धूमावगाहिज्ञानस्य कारणत्वे लाघवमिति शङ्कां समाधत्ते-**सामानाधिकरण्येति** । **सामान्येति** । सामान्यलक्षणाप्रत्यासत्त्यनङ्गीकारपक्षे विशिष्टपरामर्शनिर्वाहार्थमेव समानाधिकरणवृत्तिहेतुतावच्छेदकपर्यन्तस्य व्याप्तित्वोपगमात् । तत्र च तादृशसमानाधिकरणवृत्ति प्रकारकत्वेन गुरुरूपेण हेतुतायाः आवश्यकत्वादिति भावः ।।

## गादाधरी

**केचित्तु** धूमव्यापकवह्निसमानाधिकरणधूमीयवद्धूमवान् पर्वत इत्याकारकज्ञानमेवानुमितिहेतुः । यथाश्रुतस्य हेतुतावच्छेदकावच्छिन्ने साध्यसामानाधिकरण्याभावरूपस्य विरोधस्य हेत्वाभासत्वेन धूमीयत्वेनैव धूमत्वप्रवेशेन च लाघवसंभवात् । **तथा च** विशिष्य आधेयतासंबन्धेन धूमप्रकारतानिरूपितधूमत्वप्रकारतानिरूपितधूमप्रकारतानिरूपकविषयत्वेनैव हेतुत्वम्, तेन द्रव्यत्वादिव्युदास इत्याहुः ।।

## व्याख्या

हेतुतावच्छेदकावच्छिन्ने साध्यसामानाधिकरण्याभावरूपस्य विरोधस्यैव व्याप्तिविषयकपरामर्शरूपं यदनुमितिकारणं तत्प्रतिबन्धकज्ञानविषयतयैव हेत्वाभासत्वं वदतां मतमनुवदति - **केचित्तु** इत्यादिना । धूमव्यापकवह्निसमानाधिकरणधूमीयवद्धूमवान् पर्वत इति परामर्शः । अत्र धूमत्वस्य धूमीयत्वेन भानं, न तु धूमत्वत्वेन । अतः सकलधूमप्रवेशप्रयुक्तगौरवशङ्कायाः नावकाशः । धूमीयत्वं धूमसंबन्धित्वम् । तदेकदेशधूमे वह्निसमानाधिकरणत्वं भासते । एवं च धूमसंबन्धिधूमत्ववद्धूमवानित्यर्थः । अयं परामर्शः धूमत्वावच्छिन्ने वह्निसामानाधिकरण्यमवगाहत इति एतादृशपरामर्शं प्रति धूमत्वावच्छिन्ने वह्नि-

सामानाधिकरण्याभावरूपविरोधविषयकनिश्चयस्य तद्वत्ताबुद्धिं प्रति तदभावप्रकारकनिश्चयस्य प्रतिबन्धकतया विरोधस्य हेत्वाभासत्वं निर्वहति । तदाह– **तथाचेति**। उक्तपरामर्शे धूमः छप्रत्ययार्थसंबन्धिनि धूमत्वे प्रकारः । धूमत्वं मतुबर्थे धूमे प्रकारः । धूमः पर्वते प्रकार इति विवेकः । तथा च पर्वतो धूमव्यापकवह्निसमानाधिकरणधूमीयवद्धूमवान् इत्याकारकः परामर्शः धूमनिष्ठाधेयतासंबन्धावच्छिन्नप्रकारतानिरूपितधूमत्वप्रकारतानिरूपितधूमप्रकारतानिरूपितपर्वतनिष्ठविशेष्यताशालीति ध्येयम् । अत्र मते अनेकवारं धूमधूमत्वयोः भानमिति अस्वरसबीजम् ।।

## गादाधरी

**आद्या– हेतुतावच्छेदकधर्मसहित**साध्यसामानाधिकरण्यरूपा । **भिन्नेति** । प्रतिधूमादिकमित्यादिः । **द्वितीया** - साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपा । **अभिन्ना** - **सर्वधूमसाधारणी** । **अनुगतरूपावच्छिन्न**नानाव्यक्तिदण्डादिविशिष्टहेतुकस्थलेऽपि परम्परासंबद्धदण्डत्वाद्यखण्डधर्म एव हेतुतावच्छेदकतयोपगन्तव्य इति भावः ।।

**यद्यपि** साध्यसामानाधिकरण्यावच्छेदकरूपवक्ष्यमाणव्याप्त्यभिप्रायेणापि ''**एकैव हि**'' इत्यादिग्रन्थः संगच्छते, **तथापि** स्वयं तत्र स्वरूपसंबन्धरूपावच्छेदकत्वप्रवेशनस्य खण्डनीयतया स्वविशिष्टाधिकरणावृत्तियावत्साध्यासामानाधिकरण्यकत्वरूपपारिभाषिकावच्छेदकत्वस्यैव विविक्षणीयतया एतदपेक्षया तादृशी व्याप्तिः गुरुशरीरेति कथंचिदीदृशव्याप्तेः ऐक्योपपत्तिसंभवेन तज्ज्ञानमनुमितिहेतुः इत्येतादृशव्याप्तेः ऐक्यमुपपादितम् ।।

## व्याख्या

**हेतुतावच्छेदकधर्मसहितेति** । धूमत्वादिसमानाधिकरणेत्यर्थः । अस्य साध्यसामानाधिकरण्येऽन्वयः । तथा च रासभादौ कदाचित् वह्न्यधिकरणपर्वत-



वृत्तित्वरूपस्य साध्यसामानाधिकरण्यस्य सत्त्वेऽपि धूमत्वाभावात् रासभनिष्ठे वह्निसामानाधिकरण्ये धूमत्वसमानाधिकरणत्वं नास्तीति, रासभे धूमत्वसमानाधिकरणं वह्निसामानाधिकरण्यं नास्तीति नातिव्याप्तिरिति भावः । ''**धूमत्वादिमति तादृशसामानाधिकरण्यम्**'' इति हि **दीधितिः** । तस्याश्च धूमत्ववन्निष्ठं साध्यसामानाधिकरण्यमित्यर्थः । तच्च धूमत्वसमानाधिकरणं साध्यसामानाधिकरण्यमित्यर्थे पर्यवस्यतीति **गदाधरस्य** आशय इति ध्येयम् ।।

**द्वितीयेति** । ''तद्वति धूमत्वादिकम्'' इति दीधितेः साध्यसामानाधिकरण्यवन्निष्ठं धूमत्वमित्यर्थः । साध्यसामानाधिकरण्यवन्निष्ठमित्यस्य साध्यसमानाधिकरणनिष्ठमित्यर्थः । वह्निसमानाधिकरणे रासभे धूमत्वाभावात् धूमत्वपर्यवसिता वह्निव्याप्तिः तस्य नास्तीति नातिव्याप्तिरित्याशयः । **सर्वधूमसाधारणीति** । सर्वधूमवृत्तिरित्यर्थः । धूमत्वजातेः एकत्वात् इति भावः ।।

द्वितीयकल्पे व्याप्तेः हेतुतावच्छेदकपर्यवसायितया यत्र हेतुतावच्छेदकव्यक्तिरनेका, यथा अयं दण्डिसंयोगवान् दण्डिनः इत्यत्र दण्डस्यैव हेतुतावच्छेदकतया तस्य नानात्वात् सर्वहेतु (दण्डि) साधारण्यं न संभवतीत्याशङ्क्य तत्रापि स्वाश्रयाश्रयत्वरूपपरंपरासंबन्धेन दण्डत्वमेव हेतुतावच्छेदकम्, तस्य तेन संबन्धेन सर्वहेतुवृत्तित्वान्न दोष इत्याह– **अनुगतरूपावच्छिन्नेति** । दण्डत्वाद्यवच्छिन्नेत्यर्थः ।।

ननु ''**एकैव हि सा व्याप्तिः**'' इति पश्चाद्वक्ष्यमाण**मणिग्रन्थ**संगमनाय **दीधितिकारः** किमर्थं प्रयासेन द्वेधा प्रकृतव्याप्तिलक्षणं संगमयति । प्रकृतलक्षणानुसारेण साध्यहेतुभेदेन व्याप्तिभेद इति पूर्वोक्तमेवास्तु । **मणिग्रन्थस्तु** उपरि **मणिकारैः** वक्ष्यमाणव्याप्त्यन्तरानुसारेणैव संगंस्यते । तथाहि– साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वं व्याप्तिः । साध्याधिकरणवृत्तितावच्छेदकधर्मवत्त्वं व्याप्तिः

इति तदर्थः । पर्वतो वह्निमान् धूमात् इत्यत्र साध्यो वह्निः तदधिकरणं महानसादिः तद्वृत्तिधूमः तद्वृत्तितावच्छेदकं धूमत्वं, तद्वत्त्वं धूमेऽस्तीति लक्षणसमन्वयः । धूमत्वस्यैकत्वात् व्याप्त्यैक्यमित्याशङ्कते– **यद्यपीति** । समाधत्ते-**तथापीति** ।।

अयं भावः । दर्शितलक्षणप्रविष्टमवच्छेदकत्वं यदि स्वरूपसंबन्धरूपं स्यात् तदा पर्वतो धूमवान् वह्नेः इत्यत्र व्यभिचारिण्यतिव्याप्तिः स्यात् । तथा हि– तत्र साध्यो धूमः तदधिकरणं महानसः तद्वृत्तिः वह्निः तद्वृत्तितावच्छेदकं वह्नित्वं, तद्वत्त्वस्य वह्नौ सत्त्वादिति । तद्वारणाय साध्यसामानाधिकरण्यनिरूपित-मवच्छेदकत्वं न स्वरूपसंबन्धरूपम्, अपि तु पारिभाषिकमिति वक्तव्यम्। तच्च स्वविशिष्टाधिकरणावृत्ति-यावत्साध्यासमानाधिकरणकत्वम् । स्वं हेतुतावच्छेदकम् । पर्वतो वह्निमान् धूमात् इत्यत्र धूमत्वविशिष्टधूमाधिकरणेषु पर्वतमहानसादिषु वह्न्यसमानाधिकरणघटादिकं न वर्तते इति लक्षण-समन्वयः । पर्वतो धूमवान् वह्नेः इत्यत्र तु स्वपदार्थवह्नित्वविशिष्टवह्न्यधिकरणा-वृत्तित्वं यावत्साध्यासमानाधिकरणे न संभवति, साध्यधूमासमानाधिकरणे अयोगोलकीयवह्नौ वह्निसामानाधिकरण्यस्य – वह्न्यधिकरणायोगोलकवृत्तित्वस्यैव सत्त्वात् इति नातिव्याप्तिः । तथा तत्र लक्षणे प्रविष्टस्य यावत्पदार्थस्य परिशीलने साध्यासामानाधिकरण्यव्यापक – स्वविशिष्टाधिकरणावृत्तित्वकत्वं व्याप्तिरिति पर्यवस्यति । धूमवान् वह्नेः इत्यत्र साध्यधूमासामानाधिकरण्यम् अयोगोलकीय-वह्नावस्ति, तत्र वह्नित्वविशिष्टाधिकरणावृत्तित्वं नास्तीति नातिव्यप्तिः । वह्निमान् धूमात् इत्यत्र वह्न्यसमानाधिकरणेषु सर्वत्र धूमसामानाधिकरण्यमस्तीति समन्वयः। व्यापकत्वघटिततादृशव्याप्तेरपि प्रकृतव्याप्त्यपेक्षया गुरुशरीरतया तज्ज्ञानं नानुमिति-हेतुः । किं तु लघुभूत प्रकृतव्याप्तिज्ञानमेवानुमितिहेतुरिति कल्पनीयम् । व्याप्तेरैक्यं भेदश्च **वस्तुतस्तु** इत्यादिना **दीधितिकारोक्तरी**त्यैव निर्वाह्यमिति भावः ।।



## दीधितिः

**अयं कपिसंयोगी** एतद्वृक्षत्वादित्यादिसंग्रहाय असमानाधिकरणान्तम् ।।

## गदाधरीयम्

**मिश्रादिमत**मवलम्ब्य प्रतियोग्यसमानाधिकरणपदप्रयोजनमाह– **अयं कपिसंयोगीति** ।।

**अथ** एतद्वृक्षत्वादेः अव्याप्यवृत्तिकपिसंयोगादिव्याप्यत्वोपगमेऽपि प्रतियोग्यनवच्छेदकमूलादेः पक्षतावच्छेदकत्वे तदवच्छेदेनापि एतद्वृक्षादौ कपिसंयोगादेः सिद्धिप्रसङ्गः । न चेष्टापत्तिः । सल्लिङ्गकपरामर्शस्य भ्रमानुमित्य-जनकत्वनियमात् ।।

**न च तदवच्छेदेन** हेतुमत्ताज्ञानस्य तदवच्छेदेन साध्यानुमितिहेतुत्वात् एतद्वृक्षत्वादिरूपव्याप्यवृत्तिहेतोश्च किंचिदवच्छेदेनावृत्तेः नातिप्रसङ्ग इति वाच्यम् ।।

यदि **स्वरूपसंबन्धरूपा**वच्छेदकत्वावगाहिन्यामनुमितावपि तादृशहेतुमत्ता-ज्ञानत्वेन हेतुत्वमुपेयते, **तदापि** तुल्ययुक्त्या एतद्वृक्षत्वादेरिव मूलाद्यवच्छिन्न-संयोगविशेषस्यापि कपिसंयोगादिव्याप्यतया तेन हेतुना मूलाद्यवच्छेदेन कपिसंयोगाद्यनुमितेर्निष्प्रत्यूहत्वादिति चेत्–

## व्याख्या

**दीधितौ अयं कपिसंयोगी**त्यादिना प्रतियोग्यसमानाधिकरणेति विशेषणस्य प्रयोजनमुच्यते । तथा हि– अयं वृक्षः कपिसंयोगी एतद्वृक्षत्वात् । अयं सद्धेतुः। एतद्वृक्षे एतद्वृक्षत्वस्य कपिसंयोगस्य च सत्त्वात् । परं तु साध्यः कपिसंयोगः अव्याप्यवृत्तिः । वृक्षे अग्रावच्छेदेन कपिसंयोगस्य सत्त्वेऽपि मूलावच्छेदेन

कपिसंयोगस्याभावात् । अत्र हेत्वधिकरणवृक्षवृत्तिः अभावः कपिसंयोगाभावोऽपि तत्प्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदके कपिसंयोगत्वेऽस्ति, न तु तदनवच्छेदकत्वमिति अव्याप्तिः भवति । तद्वारणाय अभावे प्रतियोग्यसमानाधिकरणेति विशेषणं दत्तं **मणिकारेण** । तस्मिन् दत्ते च एतद्वृक्षे अग्रावच्छेदेन कपिसंयोग इव मूलावच्छेदेन कपिसंयोगाभावोऽप्यस्तीति अयमभावः वृक्षे प्रतियोगिसमानाधिकरणः । प्रतियोग्यसमानाधिकरणः हेत्वधिकरणवृत्तिरभावस्तु घटाद्यभाव एव । तत्प्रतियोगितावच्छेदकं घटत्वादि तदनवच्छेदकं साध्यतावच्छेदकं कपिसंयोगत्वं तदवच्छिन्नकपिसंयोगसामानाधिकरण्यं कपिसंयोगाधिकरणैतद्वृक्षवृत्तित्वरूपं हेतौ एतद्वृक्षत्वेऽस्तीति नाव्याप्तिरिति **दीधितिग्रन्थाशयः** ।।

तत्र शङ्कते– **गादाधर्याम् अथेत्यादि**ना । अयं भावः - अत्र साध्यम् अव्याप्यवृत्ति । हेतुस्तु व्याप्यवृत्तिः । एतद्वृक्षत्वस्य वृक्षे सर्वत्र सत्त्वात् । अस्य सद्धेतुत्वस्वीकारे वृक्षे मूलावच्छेदेनापि कपिसंयोगस्य सिद्धिः स्यात् । न चेष्टापत्तिरिति वाच्यम्– एतद्वृक्षत्वे कपिसंयोगव्याप्यत्वस्वीकारे कपिसंयोगव्याप्यैतद्वृक्षत्ववान् अयं वृक्षः इत्याकारकपरामर्शस्य सल्लिङ्गकतया – व्याप्तिविशिष्टहेतुविषयकतया प्रमात्वेन मूलावच्छेदेन वृक्षः कपिसंयोगी इत्यनुमितेः मूलावच्छेदेन कपिसंयोगाभाववति वृक्षे मूलावच्छेदेन कपिसंयोगावगाहित्वेन भ्रमतया प्रमात्मकपरामर्शस्य भ्रमानुमित्यजनकत्वमिति नियमस्य भङ्गः स्यात् । अतश्च अस्य सद्धेतुत्वं नास्तीति तत्र व्याप्तिलक्षणासत्त्वं न दोषावहमिति प्रतियोग्यसमानाधिकरणेति विशेषणं व्यर्थमिति शङ्कितुराशयः । ननु उक्तस्थले व्याप्तिसद्भावेऽपि प्रकारान्तरेणातिप्रसङ्गवारणं संभवतीति शङ्कते– **न च तदवच्छेदेनेति** । मूलावच्छेदेन वृक्षे कपिसाध्यकानुमितेरापादनं कर्तुं न शक्यते । तदवच्छेदेन साध्यप्रकारकानुमितिं प्रति तदवच्छेदेन हेत्ववगाहिपरामर्शः



कारणम् इति स्वीक्रियते । अत्र हेतोः एतद्वृक्षत्वस्य व्याप्यवृत्तितया किंचिदवच्छेदेन सत्ता नास्ति । तथा चोक्तकार्यकारणभावानुसारेण आपाद्यमानां मूलावच्छेदेन वृक्षे कपिसंयोगप्रकारकभ्रमानुमितिं प्रति मूलावच्छेदेन एतद्वृक्षत्वावगाहिनः ''वृक्षः कपिसंयोगव्याप्यमूलावच्छिन्नवृक्षत्ववान्'' इति परामर्शस्य हेतुत्वं वाच्यम् । स च भ्रमरूप इति भ्रमात्मकपरामर्शादेव भ्रमात्मकानुमितिः, न तु प्रमात्मकपरामर्शात् इति सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्वमिति नियमस्य भङ्गो नास्तीति शङ्कितुराशयः ।।

तत्र समाधत्ते– **स्वरूपसंबन्धरूपे**त्यादिना । अयं भावः– अवच्छेदकत्वं द्विविधम् स्वरूपसंबन्धरूपम् अनतिरिक्तवृत्तित्वरूपं चेति । तत्र पक्षतावच्छेदके साध्यनिरूपितानतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाह्यनुमितिः, तत्र साध्यनिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वावगाहिनी अनुमितिः इति द्विविधा अनुमितिः । तत्र भागासिद्धेः दोषत्वनिर्वाहार्थं पक्षतावच्छेदके साध्यनिरूपित–अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाह्यनुमितावेव पक्षतावच्छेदके हेतुनिरूपितानतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहिपरामर्शः कारणमिति नियमः । पक्षतावच्छेदके साध्यनिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वावगाह्यनुमितौ, हेतुनिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वावगाहिपरामर्शः कारणमिति नियमे कापि युक्तिर्नास्ति । तथा च मूलावच्छेदेन हेतुमत्ताज्ञानाभावेऽपि कपिसंयोगव्याप्यवृक्षत्ववान् इति परामर्शात् मूलावच्छेदेन वृक्षः कपिसंयोगी इत्यनुमित्यापत्तिः । न चेष्टापत्तिः । सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्वादिति शङ्का अवतिष्ठते । तत्र समाधानमाह– **तदापीति** । एतद्वृक्षत्वहेतुना वृक्षे मूलावच्छेदेन कपिसंयोगानुमितेः आपादनासंभवेऽपि एतद्वृक्षे मूलावच्छेदेन पिपीलिकादिसंयोगस्य विद्यमानतया तेन हेतुना वृक्षे मूलावच्छेदेन कपिसंयोगानु-मित्यापत्तिः । अतः कपिसंयोग-

निरूपितव्याप्तिः कुत्रापि न स्वीकरणीया । तथा च अव्याप्यवृत्तिसाध्यक-सद्धेतोरेवाभावात् तत्राव्याप्तिवारकतया उपात्तं प्रतियोग्यसमानाधिकरणेति विशेषणं व्यर्थमिति प्रधानपूर्वपक्षः ।।

## गादाधरी

**अत्रोपाध्यायाः**– साध्यस्य पक्षतावच्छेदकसामानाधिकरण्यं विना व्याप्यस्य पक्षधर्मत्वमनुपपन्नमिति पक्षधर्मताबलात् पक्षतावच्छेदकसामानाधिकरण्यमेव साध्ये सिध्यति, न तु तदवच्छेद्यत्वमपि प्रमाणाभावादिति तादृशानुमितेरप्रामाणिकतया तत्र परामर्शहेतुताकल्पनमेव नास्तीति न तदापत्तिरिति समादधिरे ।।

## व्याख्या

तत्र **उपाध्यायानां** समाधानमाह– **अत्रेति** ।

अयमाशयः– सर्वत्रानुमितौ साध्ये पक्षतावच्छेदकसामानाधिकरण्यमेव भासते, न तु पक्षतावच्छेदकनिरूपितस्वरूपसंबन्धरूपावच्छिन्नत्वमपि । कुत इति चेत् हेतोः पक्षवृत्तित्वबलात् साध्यस्य पक्षवृत्तित्वमवश्यंभावि । व्यापकस्य (साध्यस्य) पक्षवृत्तित्वं विना व्याप्यस्य (हेतोः) पक्षवृत्तित्वासंभवात् । यदि व्यापकं न स्यात् तर्हि व्याप्यमपि न स्यादिति विपर्यये बाधकतर्कसत्त्वात् । एवं साध्यस्य स्वरूपसंबन्धरूपपक्षतावच्छेदकावच्छेद्यत्वं विना हेतोः तादृशावच्छेद्यत्वमनुपपन्नमिति अनुपपत्तिज्ञानं न संभवति । इदं द्रव्यं संयोगात् इत्यत्र हेतोः शाखाद्यवच्छिन्नत्वेऽपि साध्यस्य द्रव्यत्वस्य तदनवच्छिन्नत्वात् । एवं चैतादृशस्थले अवच्छेद्यावच्छेदकभावावगाह्यनुमितेरप्रामाणिकतया तां प्रति पृथक् परामर्शस्य हेतुत्वकल्पनमेव नास्ति । न हि मूलावच्छेदेन कपिसंयोगाभावे वृक्षस्य एतद्वृक्षत्वमपैति ।।



ततश्च कपिसंयोगी एतद्वृक्षत्वादित्यत्र व्याप्तिस्वीकारेऽपि मूलावच्छेदेन कपिसंयोगादेः सिद्धिप्रसङ्गरूपानिष्टाभावेन वृक्षे कपिसंयोगसिद्धेश्च इष्टत्वेन अभावे प्रतियोग्यसामानाधिकरण्यरूपविशेषणं विना च एतद्वृक्षत्वे कपिसंयोगव्याप्त्यनिर्वाहात् तद्विशेषणं सार्थकमिति भावः ।।

## गादाधरी

मिश्रादयस्तु बाधानवतारे मूलाद्यवच्छेदेन कपिसंयोगादिसिद्धिरिष्टैवेति वदन्ति। **एतत्तत्त्वं ग्रन्थकृता हेत्वाभासे** वक्ष्यते ।।

## व्याख्या

तत्र **मिश्राणां** समाधानमाह– **मिश्रादयस्तु** इति । "मूले वृक्षे न कपिसंयोगः" इति बाधनिश्चयानुदयकाले कपिसंयोगव्याप्यवृक्षत्ववानयम् इति परामर्शात् वृक्षः मूलावच्छेदेन कपिसंयोगवान् इति भ्रमात्मकानुमितिरिष्टैव ।।

न च सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्वमिति नियमविरोध इति वाच्यम् । दोषासमवहितस्यैव परामर्शस्य भ्रमानुमित्यजनकत्वनियमात् । प्रकृते च बाधानवताररूपदोषसत्त्वात् इति **मिश्राणा**माशयः ।।

अत्र उपाध्यायमिश्रमतयोः कतरत् साधीयः इति जिज्ञासायामाह– **एतत्तत्त्वं ग्रन्थकृता हेत्वाभासे वक्ष्यते** इति । एतदनुबन्धिविचारः **बाधग्रन्थे दीधितिकारेणैव** सम्यक् प्रदर्शयिष्यते इत्यर्थः ।।

## दीधितिः

**यत्तु** "इदं संयोगि द्रव्यत्वात्" इत्यादावव्याप्तिवारणाय तत् । **संयोगस्य शाखाद्यवच्छेदेन** वृत्तेः **वृक्षत्वावच्छेदेन** सामान्याभाववृत्तौ बाधकाभावात् ।।

## गदाधरीयम्

प्राचीनसिद्धव्याप्तिस्थलं दूषयितुमुपन्यस्यति-**यत्तु** इति । **तत्** – प्रतियोग्यसमानाधिकरणान्तम् । **ननु द्रव्ये** संयोगत्वावच्छिन्नाभावसत्त्व एव आवच्छेदकगर्भोक्तलक्षणाव्याप्तिः प्रसज्यते । तदेव न । वृक्षादौ **संयोगानवच्छेदक-भागाप्रसिद्ध्या** तत्सामान्याभावावच्छेदकस्य दुर्लभत्वादित्यत आह– **संयोग-स्येति** । **वृक्षत्वावच्छेदेनेति** । वृक्षत्वादेः प्रत्येकं सकलसंयोगातिप्रसक्तत्वात् तस्य संयोगावच्छेदकत्वासंभवात्, **आकाशादिसंयोगस्यापि** यावद्वृक्षवृत्तेरेकस्या-भावात् वृक्षत्वे तत्संयोगानतिप्रसक्तत्वासंभवात् इति भावः ।।

## व्याख्या

इदं संयोगि द्रव्यत्वात् इति सद्धेतावव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणेति अभावे विशेषणम् । संयोगस्याव्याप्यवृत्तितया संयोगवत्यपि वृक्षादौ तदभावः भवितुमर्हतीति तत्प्रतियोगितावच्छेदकमेव संयोगत्वरूपं साध्यतावच्छेदकमिति अव्याप्तिः प्राप्नोति । तद्वारणाय प्रतियोग्यसमानाधिकरणेति विशेषणमिति **केचित्** आहुः । तन्मतमनूदितं **दीधितौ यत्तु** इत्यादिना ।।

ननु द्रव्ये संयोगत्वावच्छिन्नप्रतियोगिताकाभावसत्त्वे एव साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वघटितलक्षणस्याव्याप्तिः प्रसजेत् । वृक्षादौ द्रव्ये तत्तदवयवावच्छेदेन यस्य कस्यापि पिपीलिकादिसंयोगस्य सत्त्वेन वृक्षादौ संयोगानवच्छेदकभागाप्रसिद्ध्या संयोगत्वावच्छिन्नाभावासत्त्वात् अभावान्तरमादाय लक्षणसमन्वयसंभवात् कथमियमव्याप्तिशङ्का इत्याशयेन अवतारयति – **ननु द्रव्ये** इत्यादिना । **संयोगानवच्छेदकभागाप्र-सिद्ध्येति** । प्रतियोग्यनवच्छेदकस्यैवाभावावच्छेदकत्वमिति नियमादिति



भावः । तत्र **दीधितिकारेण** समाधानमुच्यते **संयोगस्य शाखावच्छेदेनेति** । वृक्षे यो यः पिपिलिकादिसंयोगः स सर्वोऽपि मूलादिकिंचिदवयवावच्छेदेनैव वर्तते । वृक्षत्वावच्छेदेन तु कोऽपि संयोगो नास्ति । अतः वृक्षत्वावच्छेदेन वर्तमानोऽभावः संयोगसामान्याभावः तत्प्रतियोगितावच्छेदकमेव संयोगत्वमित्यव्याप्तिः प्रसजत्येवेति भावः । अपि च वृक्षत्वं सकलसंयोगातिप्रसक्तम् । पिपीलिकासंयोगः मूलेऽस्ति । तच्छून्ये अग्रेऽपि वृक्षत्वमस्ति । एवं तत्तत्संयोगशून्यभागवृत्तितया वृक्षत्वस्य तत् न संयोगावच्छेदकम् । तथा च प्रतियोग्यनवच्छेदकस्य वृक्षत्वस्य संयोगाभावा-वच्छेदकत्वं संभवतीति वृक्षत्वावच्छेदेन वर्तमानः अभावः संयोगसामान्याभावः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं संयोगत्वम् इति अव्याप्तेः प्रसक्तिः इति भावः ।।

ननु आकाशसंयोगस्य वृक्षे व्याप्यवृत्तित्वात् वृक्षत्वावच्छेदेन सत्त्वात् कथं संयोगसामान्याभावः वृक्षत्वावच्छेदेन स्यादित्यत आह– **आकाशादि-संयोगस्यापीति** । वृक्षे विद्यमानः आकाशसंयोगोऽपि तत्तदवच्छेदकभेदेन भिन्न एव । ततश्च पूर्वोक्तरीत्या तत्तदाकाशीयसंयोगशून्ये मूलादौ वृक्षत्वस्य सत्त्वात् वृक्षत्वं आकाशसंयोगानवच्छेदकमेव । ततश्च प्रतियोग्यनवच्छेदकवृक्षत्वं तदवच्छेदेन आकाशसंयोगाभावोऽपि इतरसंयोगाभावोऽपि इत्येवं संयोगसामान्याभावस्य हेत्वधिकरणवृत्तितया तत्प्रतियोगितावच्छेदकमेव संयोगत्वमिति संयोगि द्रव्यत्वादित्यत्र अव्याप्तिः प्रसजतीति भावः ।।

## दीधिति :

**तत्र च अतीन्द्रियस्यापि** संयोगस्य सत्त्वात् **परितः प्रतियोग्यु-पलब्धेर्दोषाद्वा** वृक्षे न संयोग इत्यादि नाध्यक्षमिति ।

## गादाधरी

ननु वृक्षत्वावच्छेदेन वृक्षादौ संयोगसामान्याभावसत्त्वे वृक्षे संयोगो नास्तीति प्रत्यक्षापत्तिः इत्यत आह– **तत्र चेति** । **अतीन्द्रियस्यापीति** । अतीन्द्रिय-प्रतियोगिकतया संयोगसामान्याभावस्य अतीन्द्रियत्वमिति भावः ।।

**ननु** संयोगसामान्याभावस्य वृक्षे सत्त्वे महत्त्वोद्भूतरूपवन्मात्रसमवेतसंयोग-सामान्याभावोऽप्यावश्यकः । तद्व्याप्यधर्मावच्छिन्नाभावस्य तद्धर्मावच्छिन्नाभाव-नियतत्वादिति योग्यमात्रप्रतियोगिकोऽयमभावः कथं न वृक्षे साक्षात्क्रियते इत्यत आह– **परित** इति ।।

**यद्वा प्रतियोगितावच्छेदकयोग्यत्वस्य** तन्त्रत्वे त्वाह– **परित** इति । **प्रतियोग्युपलब्धेर्विभिन्नावच्छेदेन** अभावग्रहं प्रति **विरोधिज्ञानमुद्रया** प्रति-बन्धकत्वं न संभवतीति तस्य दोषत्वकल्पनं दोषविधया प्रतिबन्धकत्वलाभाय ।।

## व्याख्या

यदि वृक्षत्वावच्छेदेन संयोगसामान्याभावः अङ्गीक्रियते तर्हि वृक्षे न संयोग इति प्रत्यक्षं कुतो न जायते इति शङ्कायाः समाधानमुक्तं **दीधितौ– तत्र चेति** । वृक्षे ऐन्द्रियकस्य पिपीलिकादिसंयोगस्येव अतीन्द्रियस्य आकाशादिसंयोगस्यापि सत्त्वेन वृक्षे न संयोग इति प्रत्यक्षं न भवतीति समाधानम् । तस्य तात्पर्यम् अतीन्द्रियप्रतियोगिकोऽभावः अतीन्द्रिय इति । परं तु संयोगसामान्याभावस्य ऐन्द्रियकपिपीलिकादिसंयोगप्रतियोगिकत्वमप्यस्तीति कुतो न प्रत्यक्षमिति पुनः शङ्का जायते । तत्रेत्थं समाधानं वक्तव्यम्– अभावप्रत्यक्षे सकलप्रतियोगियोग्यत्वं तन्त्रम् । संयोगसामान्याभावस्य प्रत्यक्षायोग्याः आकाशादिसंयोगा अपि प्रतियोगिन इति यावत्प्रतियोगियोग्यत्वं नास्तीति वृक्षे संयोगसामान्याभावस्य प्रत्यक्षं न भवतीत्याशयः इति ।।



**परित** इत्यादिकल्पान्तरानुसरणे बीजमाह– **ननु** इत्यादिना । संयोग-सामान्याभावः संयोगत्वावच्छिन्नप्रतियोगिताकाभावः यदि वृक्षे अस्ति, तदा महत्त्वोद्भूतरूपवन्मात्रसमवेतसंयोगत्वावच्छिन्नाभावोऽपि वृक्षे अस्तीति अङ्गीकरणीयम् । तद्व्याप्यधर्मावच्छिन्नप्रतियोगिताकाभावस्य तद्धर्मावच्छिन्न–प्रतियोगिताकाभावव्यापकत्वात् । यथा यत्र घटत्वावच्छिन्नप्रतियोगिताकाभावः तत्र घटत्वव्याप्यनीलघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावोऽप्यस्त्येव । तस्य च अभावस्य प्रतियोगि महत्त्वोद्भूतरूपवन्मात्रसमवेतसंयोगमात्रमिति तस्य नियमेन प्रत्यक्षयोग्यत्वात् योग्यमात्रप्रतियोगिकोऽयं महदुद्भूतरूपवन्मात्रसमवेतसंयोगा-भावः कुतो न वृक्षे प्रत्यक्षीक्रियते । न हि तत्प्रत्यक्षं कस्यापि जायते इति शङ्कायां **दीधितौ परितः प्रतियोग्युपलब्धे**रित्युक्तम् । इयमुपलब्धिः दोषविधया संयोगसामान्याभाववप्रत्यक्षप्रतिबन्धिकेति भावः ।।

**दीधितिग्रन्थे** ''वृक्षे न संयोगः'' इति प्रत्यक्षाकारस्वारस्येन संयोग-सामान्याभावप्रत्यक्षापादनमेव प्रतीयते, न तु महत्त्वोद्भूतरूपवन्मात्र-समवेतसंयोगाभावप्रत्यक्षापादनम् इत्यरुचेः प्रकारान्तरेणावतारयति– **यद्वा प्रतियोगितावच्छेदकयोग्यत्वस्येति** । **प्रतियोग्युपलब्धेः विभिन्नावच्छेदेन** प्रतियोग्यवच्छेदकमूलादिभिन्नवृक्षत्वावच्छेदेन अभावप्रत्यक्षं प्रति **विरोधिज्ञान-मुद्रया** – तद्वत्ताबुद्धिं प्रति तदभावज्ञानविधया प्रतिबन्धकत्वं न संभवतीति तस्य दोषत्वकथनं दोषविधया प्रतिबन्धकत्वलाभाय ।।

अयमाशयः– शाखाद्यवच्छेदेन संयोगोपलब्धिरस्ति तस्याश्च वृक्षत्वावच्छेदेन संयोगाभावप्रत्यक्षं प्रति विरोधिज्ञानमुद्रया प्रतिबन्धकत्वं न संभवति । अव्याप्यवृत्तिस्थले अवच्छेदकमन्तर्भाव्य तदवच्छेदेन संयोगादिमत्ताज्ञानं प्रति तदवच्छेदेन संयोगाद्यभाववत्ताज्ञानस्यैव प्रतिबन्धकत्वात् प्रकृते संयोगस्य

अग्रादिकमवच्छेदकम्, संयोगाभावस्य वृक्षत्वमवच्छेदकमिति उभयोरेकावच्छेदकासंभवात् दोषविधया प्रतिबन्धकत्वलाभाय **दोषात्** इत्युक्तमिति ।।

### गादाधरी

**अथ यत्र** संयोगाद्यविषयकमेव उपनीतभानात्मकं वृक्षादिरूपाधिकरणज्ञानं तदग्रिमक्षणे वृक्षादौ तादृशसंयोगसामान्याभावग्रहप्रसङ्गः । तादृशदोषस्य प्राक् असत्त्वात् । **एवं** वृक्षे न संयोगः इत्यादिलौकिकप्रत्यक्षस्य अलीकतया **तत्र** तादृशप्रतिबन्धकत्वकल्पनमेवाशक्यमिति चेन्– तन्न । वृक्षादौ संयोगसामान्याभावलौकिकप्रत्यक्षस्याप्रसिद्धत्वेऽपि गुणादौ तत्प्रसिद्ध्या अधिकरणीयविषयतासंबन्धेनाभावलौकिकत्वावच्छिन्नं प्रति स्वविषयसंयोगवत्त्वसंबन्धेन प्रत्यक्षत्वेन प्रतिबन्धकत्वकल्पनात् । **सर्वत्र द्रव्येऽन्तत** ईश्वरप्रत्यक्षस्यैव सर्वदा **तादृशसंबन्धेन** सत्त्वेनातिप्रसङ्गविरहात् ।।

### व्याख्या

**दीधितौ** वृक्षे अतीन्द्रियस्यापि संयोगस्य सत्त्वात् परितः प्रतियोग्युपलब्धिरूपदोषाद्वा वृक्षे न संयोग इति न प्रत्यक्षम् इत्युक्तम् । तत्र शङ्कते **गादाधर्याम्- अथ यत्रे**त्यादिना । यत्र संयोगाविषयकम् उपनीतभानात्मकम् स्मरणात्मकज्ञानलक्षणाप्रत्यासत्तिजन्यं वृक्षात्मकाधिकरणविषयकज्ञानम् तदग्रिमक्षणे वृक्षे संयोगसामान्याभावग्रहप्रसङ्गः । तत्र प्रतिबन्धकभूतायाः परितः प्रतियोग्युपलब्धेरभावात् । अभावप्रत्यक्षे अधिकरणज्ञानस्य कारणतया उपनीतभानात्मकमधिकरणज्ञानमित्युक्तम् । लौकिकसंनिकर्ष (चक्षुस्संनिकर्ष) जन्यं वृक्षात्मकाधिकरणप्रत्यक्षात्मकज्ञानं यदि प्रथमतः स्यात्, तदा वृक्षेण सह चक्षुः संनिकर्षकाले तद्वृत्तिसंयोगस्यापि चक्षुस्संयुक्तसमवायरूपसंनिकर्षबलेन उपलब्धिसंभवात् प्रतियोग्युपलब्धिरूपदोषोऽस्तीति वृक्षे न संयोग इति प्रत्यक्षापत्त्यसंभव इत्यालोच्य उपनीतभानात्मकं वृक्षरूपाधिकरणज्ञानमिति **गादाधर्याम्** उक्तम् ।।



एवं क्वचित् प्रसिद्धस्यैव अन्यत्र तत्कारणवशात् आपत्तिः संभवति । वृक्षे न संयोग इति प्रत्यक्षमेवाप्रसिद्धमिति तदापत्तिरेव न संभवतीत्याह– **एवम्** इति । एवं च दोषविधया प्रतिबन्धकत्वकल्पनमपि नावश्यकम् इत्याक्षेपः ।।

तत्र समाधत्ते– **तत्रेत्यादिना** । वृक्षे न संयोगः इत्याकारक वृक्षाधिकरणकसंयोगाभावविषयकलौकिकप्रत्यक्षस्याप्रसिद्धत्वेऽपि ''गुणे संयोगाभावः'' इति प्रत्यक्षं प्रसिद्धम् । तथा च अधिकरणनिष्ठविषयतासंबन्धेन प्रत्यक्षं प्रति स्वविषयसंयोगवत्त्वसंबन्धेन प्रत्यक्षं प्रतिबन्धकमिति कल्प्यते । एतादृशप्रतिबन्धकविरहात् गुणे न संयोगः इति प्रत्यक्षं न जायते । वृक्षे तु तत्तदवच्छेदेन संयोगप्रत्यक्षं जायते । तत् स्वविषयसंयोगवत्त्वसंबन्धेन वृक्षे विद्यमानं, अधिकरणीयविषयतासंबन्धेन ''वृक्षे न संयोगः'' इत्याकारकं प्रत्यक्षं प्रति प्रतिबन्धकम्, तस्य प्रतिबन्धकत्वं न विरोधिज्ञानमुद्रया, अपि तु दोषविधयेति **दीधितिकृताम्** आशयः इति भावः ।।

ननु सर्वदा वृक्षादौ संयोगप्रत्यक्षस्य अस्मदादीनामसंभवात् यदा तन्नास्ति, तदा वृक्षे न संयोग इति प्रत्यक्षमापाद्यत इत्यत्राह– **सर्वत्र द्रव्य** इति । **अन्तत** इति । अस्मदादिप्रत्यक्षासत्त्वदशायाम् इत्यर्थः । **तादृशसंबन्धेनेति** । स्वविषयसंयोगवत्त्वसंबन्धेनेत्यर्थः । ईश्वरीयप्रत्यक्षस्य सत्त्वात् इत्यन्वयः ।।

### गादाधरी

**इदमापाततः**– द्रव्यरूपाधिकरणविषयकसंयोगाभावविषयकप्रत्यक्षस्य कदाचिदप्यनुदयेन तादृशप्रत्यक्षसामग्र्या एव अकल्पनेन आपादकाभावादेव अतिप्रसङ्गवारणसंभवेन तादृशप्रतिबन्धकताकल्पनस्यायुक्तत्वात् । **कथंचिदापत्ति-**

**संभवेऽपि** तादात्म्यसंबन्धेन द्रव्यत्वेनैव **तादृशसंबन्धेन** संयोगाभावलौकिकप्रत्यक्षं प्रति **प्रतिबन्धकत्वौचित्यात्** ।।

## व्याख्या

**दीधितौ यत्तु** इत्यादिना इदं संयोगि द्रव्यत्वादित्यत्र प्रतियोग्यसामानाधिकरण्यदलस्य प्रयोजनकथनवेलायां वृक्षे न संयोग इति प्रत्यक्षापत्तिरित्याशङ्क्य द्वेधा समाधानमुक्तम् । **भट्टाचार्यैः** तदुपरि शङ्कातत्समाधानादिकमुक्तम् । इदानीं वृक्षादिद्रव्ये संयोगसामान्याभावविषयकस्य प्रत्यक्षस्यापत्तिरेव न संभवतीति तत्समाधानार्थप्रयासो **दीधितिकारस्य** व्यर्थ इति निरूपयन्ति **इदमापातत** इति । कुत्रचित् कदाचित् प्रसिद्धस्यैव, अन्यत्र प्रसिद्धस्थलीयसामग्रीसत्त्वे आपत्तिः कर्तुं शक्यते । द्रव्यरूपाधिकरणविषयकसंयोगाभावविषयकप्रत्यक्षस्यैव कदाचिदप्यनुदयेन तादृशप्रत्यक्षसामग्र्या एवं अकल्पनेन संयुक्तविशेषणत्वरूपसंनिकर्षसत्त्वेऽपि तस्योक्तप्रत्यक्षं प्रति कारणत्वाकल्पनात् आपादकाभावादेव वृक्षे न संयोग इति प्रत्यक्षवारणसंभवेन परितः प्रतियोग्युपलब्धेः दोषविधया प्रतिबन्धकत्वकल्पनप्रयासो व्यर्थः ।।

न च गुणादौ संयोगाभावप्रत्यक्षस्य प्रसिद्धतया तत्सामग्र्या द्रव्ये तादृशप्रत्यक्षापत्तिरिति वाच्यम् । गुणादौ संयोगाभावविषयकप्रत्यक्षसामग्र्याः चक्षुस्संयुक्तद्रव्यसमवेतगुणविशेषणतारूपायाः द्रव्यनिष्ठसंयोगाभावेऽसंभवात् । द्रव्यनिष्ठसंयोगाभावे हि चक्षुस्संयुक्तविशेषणत्वं संनिकर्षो भवेत् ।।

ननु वृक्षवृत्तिरूपादौ संयोगसामान्याभावप्रत्यक्षस्य प्रसिद्धतया तत्र संयुक्तसमवेतविशेषणतायाः संनिकर्षत्वमावश्यकम् । तद्बलात् वृक्षेऽपि संयोगाभावप्रत्यक्षापत्तिः । चक्षुस्संयुक्तवृक्षावयवसमवेतवृक्षविशेषणतारूपसंन्निकर्षस्य संयोगाभावे सत्त्वात् इत्याशयेनाह– **कथंचिदापत्तिसंभवेऽपीति** । तादृशप्रत्यक्षं प्रति



तादात्म्यसंबन्धेन द्रव्यं प्रतिबन्धकमित्येव कल्पनमुचितम् । **तादृशसंबन्धेन** – अधिकरणीयविषयतासंबन्धेन । **प्रतिबन्धकत्वौचित्यादिति** । स्वविषयसंयोगवत्त्वसंबन्धेन प्रत्यक्षस्य प्रतिबन्धकत्वापेक्षया तादात्म्येन द्रव्यस्य प्रतिबन्धकत्वकल्पने लाघवादिति भावः । तथा च परितः प्रतियोग्युपलब्धेः दोषविधया प्रतिबन्धकत्वकल्पनमनावश्यकमिति भावः ।।

## दीधितिः

तन्न । द्रव्ये संयोगसामान्याभावे **मानाभावात्** ।।

## गादाधरी

**मानाभावादिति** । लौकिकप्रत्यक्षस्य **योग्यानुपलब्धिविरहेण** असंभवात् **उपनीतभानस्य** संयोगाभावो वृक्षावृत्तिः इत्याकारकविपरीतविषयकस्याप्युपनयवशेन कल्पनसंभवात् विनिगमनाविरहेण एकतरस्य प्रामाण्यासिद्धेः । **शब्दस्य आप्तोक्तत्वासिद्ध्या तदव्यवस्थापकत्वात्, अनुमानस्य च लिङ्गाभावेन** असंभवादिति भावः ।।

## व्याख्या

**योग्यानुपलब्धिविरहेणेति** । द्रव्ये संयोगाभावप्रत्यक्षं प्रति योग्यानुपलब्धिः कारणम् । सा च यद्यत्र संयोगः स्यात् तर्हि उपलभ्येत, अनुपलम्भान्नास्तीत्येवंरूपा । तत्र आपाद्यस्य अनिष्टत्वमावश्यकम् । द्रव्ये संयोगरूपप्रतियोग्युपलब्धेः इष्टत्वेन अनिष्टापत्तिगर्भयोग्यानुपलब्धेरभावेन द्रव्ये संयोगसामान्याभावविषयकं लौकिकप्रत्यक्षं न संभवतीति भावः ।।

तर्हि द्रव्ये संयोगसामान्याभावविषयकमलौकिकप्रत्यक्षं – ज्ञानलक्षणाप्रत्यासत्तिजन्यं प्रत्यक्षं भवतु इत्याशङ्कायामाह – **उपनीतभानस्येति** । ज्ञानलक्षणाप्रत्यासत्तिजन्यप्रत्यक्षस्येत्यर्थः । तादृशप्रत्यक्षस्य विषयस्मरणमात्राधीनतया

(यथा सुरभिः चन्दनखण्डः इति प्रत्यक्षं सुरभित्वस्मरणजन्यं तद्वत्) कदाचित् वृक्षावृत्तित्वस्मरणेन ''संयोगाभावो वृक्षावृत्तिः'' इत्याकारकस्यापि संभवेन एकतरस्य ''वृक्षवृत्तिः संयोगाभावः'' इति प्रत्यक्षस्य **विनिगमनाविरहेण**- प्रामाण्यव्यवस्थापकयुक्त्यभावेन प्रामाण्यासिद्ध्या विषयसाधकत्वाभावादिति भावः।।

शब्दस्य च ''वृक्षे न संयोग'' इति **शब्दस्य आप्तोक्तत्वासिद्ध्या**- प्रकृतवाक्यार्थविषयकयथार्थज्ञानजन्यत्वस्यासिद्ध्या **तदव्यवस्थापकत्वात्**- द्रव्ये संयोगसामान्याभावासाधकत्वादित्यर्थः । **अनुमानस्य च लिङ्गाभावेन** संयोगसामान्याभावव्याप्यहेत्वभावेन असंभवात् । तथा च द्रव्ये संयोगसामान्याभावे प्रमाणं नास्तीति भावः ।।

## दीधितिः

**न च यो यदीय**यावद्विशेषाभाववान् स तत्सामान्याभाववान् इति व्याप्तेः **यावत्संयोगाभावा एव मानम्** ।।

## गादाधरी

**ननु वृक्षादौ** यावत्संयोगविशेषाभावानामुभयवादिसिद्धतया **तत एव** हेतोस्**तत्राप्रत्यक्षस्यापि** तत्सामान्याभावस्य सिद्धिः निष्प्रत्यूहैवेति शङ्कां निरस्यति – **न चेत्यादिना** । **यः संयोगीय**यावद्विशेषाभाववान् स संयोगसामान्याभाववान् इति व्याप्तेरेवाग्रे **व्यर्थविशेषणत्वा**प्रयोजकत्वादिदोषेण निराकरणीयतया प्रथमतः सामान्यमुखीं व्याप्तिमनुमानोपष्टम्भकतया दर्शयति- **यो यदीयेति** ।।

## व्याख्या

**यो यदीयेति दीधितिम**वतारयति- **ननु वृक्षादाविति** । पूर्वं द्रव्ये संयोगसामान्याभावे मानाभावात् इति **दीधितावुक्तम्** । तत्रानुमानं प्रमाणं भवतीति



शङ्कायां संयोगसामान्याभावव्याप्यलिङ्गाभावादिति व्याख्यातं **भट्टाचार्यैः** । इदानीं **दीधितिकारः** सामान्यमुखव्याप्तिमुपजीव्य संयोगीययावद्विशेषाभावरूपहेतुना वृक्षादौ संयोगसामान्याभावः अनुमातुं शक्यते इति शङ्कते- **न चेत्यादिना** । संयोगस्याव्याप्यवृत्तितया वृक्षे वर्तमानाः सर्वेऽपि पिपीलिकाकप्यादिसंयोगाः किंचिन्मूलाद्यवच्छेदेन सन्ति, अग्राद्यवच्छेदेन न सन्ति च । ततश्च संयोगीययावद्विशेषाभावानां वृक्षे सत्त्वात् तेन हेतुना संयोगसामान्याभावः अनुमातुं शक्यते । ततश्च वृक्षः संयोगसामान्याभाववान्, संयोगीययावद्विशेषाभाववत्त्वात्, घटविशेषाभाववति भूतले घटसामान्याभाववत् इत्यनुमानप्रयोगः । तदाह **गादाधर्याम्**- **ननु वृक्षादाविति** । **तत एवेति** । यावत्संयोगविशेषाभावरूपहेतोरेवेत्यर्थः । **तत्र अप्रत्यक्षस्यापीति** । वृक्षादौ अप्रत्यक्षस्यापि । अनेन अन्यत्र संयोगसामान्याभावस्य प्रत्यक्षत्वं सूचितम् । तेनान्यत्र संयोगसामान्यतद्विशेषाभावकूटयोः प्रत्यक्षतो व्याप्तिग्रहलाभः । विशेषव्याप्तिमुपेक्ष्य – यः संयोगीययावद्वि-शेषाभाववान् स संयोगसामान्याभाववान् इति विशेषव्याप्तिमुपेक्ष्य **दीधितौ** यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् इति सामान्यमुखीव्याप्त्युपजीवने हेतुमाह **गादाधर्यां यः संयोगीयेत्यादिना** । **व्यर्थविशेषणत्वेति** । योऽभाववान् स संयोगसामान्याभाववान् इत्येव व्याप्तिः संभवति अभावस्येव संयोगाभावस्यापि केवलान्वयित्वात् इति हेतुघटकविशेषणानां वैयर्थ्यमिति भावः ।।

## गादाधरी

यद्धर्माश्रयस्य यावद्विशेषाभाववान् यः स तद्धर्मावच्छिन्नाभाववानित्यर्थः। संयोगत्वाश्रयस्य विशेषधर्मावच्छिन्नाभावकूटं वृक्षादौ वर्तत इति तत्रोक्तव्याप्तेः संयोगत्वावच्छिन्नाभावसिद्धिः । **प्रतियोगिनोः** यत्त्वतत्त्वेन निवेशे संयोगवृत्तिकपिसंयोगत्वादिरूपसामान्यधर्मावच्छिन्नाभावमादाय सिद्धसाधनं स्यादिति धर्मस्य यत्त्वतत्त्वेनोपादानम् ।।

### व्याख्या

यद्धर्माश्रयनिष्ठविशेषधर्मावच्छिन्नप्रतियोगिताकाभावकूटवान् यः स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववानिति सामान्यमुखी व्याप्तिः । घटत्वाश्रयनिष्ठनीलघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावकूटवति भूतले घटत्वावच्छिन्नप्रतियोगिताकाभावसत्त्वात् समन्वयः । प्रकृते संयोगत्वाश्रयनिष्ठतत्तत्संयोगत्वावच्छिन्नाभावकूटस्य वृक्षादौ तत्तदवच्छेदेन सत्त्वात् तेन संयोगत्वावच्छिन्नप्रतियोगिताकाभावः सिध्यति ।।

अत्र व्याप्तिघटकयत्तत्पदयोः यद्धर्मावच्छिन्नतद्धर्मावच्छिन्नपरतया व्याख्यानस्य प्रयोजनमाह– **प्रतियोगिनोरिति** । यन्निष्ठविशेषधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् यः सः तन्निष्ठसामान्यधर्मावच्छिन्नप्रतियोगिताकाभाववान् इति निवेशे इत्यर्थः ।।

सामान्यमुखव्याप्तिघटकसाध्यस्य प्रकृतसाध्यतुल्यत्वावश्यंभावेन संयोगवृत्तिसामान्यधर्मावच्छिन्नाभावस्यैव वृक्षे साध्यत्वप्रसक्त्या संयोगवृत्तिकपिसंयोगत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्य वृक्षे मूलावच्छेदेन निर्विवादतया सिद्धसाधनं स्यादिति यत्तत्पदेन धर्मयोः उपादानम् । तथा सति प्रकृते इदं संयोगि द्रव्यत्वात् इत्यत्र संयोगत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव साध्यतया सामान्यव्याप्तावपि यत्तत्पदाभ्यां संयोगत्वस्यैवोपादेयतया संयोगत्वावच्छिन्नाभावस्य वृक्षेऽसिद्धतया न सिद्धसाधनमिति भावः ।।

### गादाधरी

**संयोगादि**संबन्धावच्छिन्नसंयोगत्वावच्छिन्नाभावमादाय सिद्धसाधनवारणाय समवायसंबन्धावच्छिन्नाभाव एव साधनीयः । **अन्यसंबन्धावच्छिन्नविशेषाभावकूटस्य तत्संबन्धावच्छिन्नसामान्याभावव्यभिचारित्वे** समवायसंबन्धावच्छिन्नविशेषाभावकूटस्यापि तत्संबन्धावच्छिन्नसामान्याभावव्यभिचारित्वं **तुल्यन्यायेन** संभाव्येतेति प्रतियोगितावच्छेदकसंबन्धानामपि यत्त्वतत्त्वेन व्याप्तावन्तर्भावः । **अत एव** समवायसंबन्धावच्छिन्नयावद्विशेषाभावहेतुना तत्संबन्धावच्छिन्नसंयोगसामान्याभावसिद्धिः ।।



### व्याख्या

हेतौ संबन्धविशेषोऽपि निवेशनीय इति वक्तुमाह – **संयोगादीति** । संबन्धविशेषमनिवेश्य वृक्षः संयोगसामान्याभाववान् इति साधने संयोगसंबन्धेन संयोगस्य वृक्षे अभावेन संयोगसंबन्धावच्छिन्नसंयोगत्वावच्छिन्नप्रतियोगिताकाभावस्य वृक्षे सिद्धतया सिद्धसाधनं स्यात् इति समवायसंबन्धावच्छिन्नसंयोगत्वावच्छिन्नसंयोगनिष्ठप्रतियोगिताकाभाव एव साधनीयः । तथा सति सामान्यमुखव्याप्तावपि तादृशसंबन्धः यत्त्वतत्त्वेन निवेशनीयः । तथा च एवं वक्तव्यम्– वृक्षः समवायसंबन्धा– वच्छिन्नसंयोगत्वावच्छिन्नसंयोगनिष्ठप्रतियोगिताकाभाववान् समवायसंबन्धावच्छिन्नसंयोगविशेषाभावकूटवत्त्वात्, यो यत्संबन्धावच्छिन्नयद्धर्माश्रयनिष्ठविशेषधर्मावच्छिन्नप्रतियोगिताकाभावकूटवान् सः तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववान् इति व्याप्तिः पर्यवस्यति ।।

साध्य इव हेतावपि संबन्धनिवेशावश्यकतां दर्शयति– **अन्यसंबन्धेति** । हेतौ संबन्धविशेषानिवेशे वृक्षः समवायेन संयोगसामान्याभाववान् संयोगविशेषाभावकूटवत्त्वात् इत्युक्ते सामान्यमुखव्याप्तिः यः यदीययावद्विशेषाभाववान् स समवायेन तत्सामान्याभाववान् इति स्यात् । तथा सति संयोगसंबन्धावच्छिन्नघटविशेषाभावकूटे समवायसंबन्धावच्छिन्नघटसामान्याभावव्यभिचारित्वमस्ति, संयोगसंबन्धेन घटविशेषाभावकूटवति घटावयवे समवायसंबन्धावच्छिन्नघटाभावरूपसाध्यविरहात् समवायेन घटस्यैव तत्र सत्त्वात् इति समवायसंबन्धावच्छिन्न-

घटविशेषाभावकूटेऽपि समवायसंबन्धावच्छिन्नघटाभावव्यभिचारित्वशङ्का स्यात् । घटविशेषाभावकूटत्वस्य घटसामान्याभावव्यभिचारित्वतदभावरूप-कोटिद्वयसमानाधिकरणत्वेन संशयप्रयोजकसमानधर्मवत्ताज्ञानसंभवादिति व्याप्तिघटक-हेतुसाध्यशरीरे संबन्धैक्यं विवक्षणीयम् । तथा सति समवायसंबन्धावच्छिन्न-विशेषाभावकूटे समवायसंबन्धावच्छिन्नसामान्याभावव्यभिचारित्वं न संभवतीति व्यभिचारशङ्कापरिहाराय संबन्धनिवेश आवश्यक इति भावः । **अन्यसंबन्धा-वच्छिन्नविशेषाभावकूटस्य** – संयोगसंबन्धावच्छिन्नविशेषाभावकूटस्य, **तत्संबन्धावच्छिन्नसामान्याभावव्यभिचारित्वे** = समवायसंबन्धावच्छिन्न-घटादिसामान्याभावाभाववद्वृत्तित्वे, समवायसंबन्धावच्छिन्नघटादिविशेषाभावकूटस्यापि समवायसंबन्धावच्छिन्नघटसामान्याभावाभाववद्वृत्तित्वमाशङ्क्येतेत्यर्थः ।।

**तुल्यन्यायेनेति** । यथा वा समवायसंबन्धावच्छिन्नविशेषाभावकूटस्य संयोगसंबन्धावच्छिन्नघटादिसामान्याभावव्यभिचारित्वे विशेषाभावकूटत्वं प्रयोजकं, तथा तादृशकूटत्वस्य संयोगसंबन्धावच्छिन्नविशेषाभावकूटेऽपि अक्ष-तत्वादित्यर्थः ।।

**अत एवेति** । प्रतियोगितावच्छेदकसंबन्धानां यत्त्वतत्त्वेन निवेशादे-वेत्यर्थः । अन्यथा समवायसंबन्धावच्छिन्नसंयोगसामान्याभावस्य विवक्षितस्य सिद्धिर्न स्यात् ।।

## गादाधरी

यद्धर्माश्रयविशेषाभावश्च उभयावृत्तियद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावः। अतः संयोगत्वाद्यपेक्षया वृक्षवृत्तिसंयोगत्वादेः विशेषधर्मत्वेऽपि संयोगसामान्याभावं वृक्षादावनभ्युपगच्छतामवयवविशेषरूपावच्छेदकदुर्भिक्षेण वृक्षवृत्तिसंयोगत्वा-



वच्छिन्नाभावस्य वृक्षादावनभ्युपगमेऽपि न संदिग्धासिद्धिः । वृक्षवृत्तिसंयोगत्वादीनामु-भयवृत्तित्वेन तदवच्छिन्नाभावव्यावृत्तेः ।।

## व्याख्या

ननु यद्धर्माश्रयनिष्ठविशेषधर्मावच्छिन्नप्रतियोगिताकाभावकूटवान् यः स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववान् इति व्याप्तिः प्रदर्शिता । तत्र संबन्धविशेषा-वच्छिन्नत्वमपि निवेशितम् । एवं सत्यपि यद्धर्मः संयोगत्वं तदाश्रयसंयोगवृत्तिः धर्मः वृक्षवृत्तिसंयोगत्वं तदवच्छिन्नप्रतियोगिताकाभावः हेत्वधिकरणे वृक्षे संदिग्धः । तादृशाभावावच्छेदकस्य अवयवविशेषस्य दुर्लभत्वात् । प्रतियोग्यन-वच्छेदकस्यैवाभावावच्छेदकत्वात् । वृक्षावयवेषु विद्यमानानां संयोगानामनवच्छेदकः अवयवः दुर्लभ इति तदभावावच्छेदकत्वासंभवात् । तथा च हेतोः पक्षे संदिग्धत्वात् संदिग्धासिद्धिः दोष इत्याशंक्य तद्वारणाय धर्मे उभयावृत्ति इति विशेषणं देयमित्याह– **यद्धर्माश्रयविशेषाभावश्च उभयावृत्तियद्धर्मेति** । तन्निवेशे च वृक्षवृत्तिसंयोगत्वस्य वृक्षवृत्तिसंयोगद्वयवृत्तित्वात् उभयावृत्तित्वं नास्तीति न तमादाय संदिग्धासिद्धिरिति भावः ।।

तथा च यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावद-भाववान् यः स तद्धर्मावच्छिन्नाभाववानिति व्याप्तिः ।।

उभयावृत्तित्वं च स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यत्वम् ।।

## गादाधरी

न च हेतौ उभयावृत्तित्वविशेषणस्य असिद्धिवारकत्वेऽपि व्यभिचारावारकतया वैयर्थ्यम् । यावत्त्वस्य धीविशेषविषयत्वरूपस्य परिचायकमेव तादृशधर्मावच्छिन्न-

प्रतियोगिताकत्वम्, न तु हेतुप्रविष्टम् इति तु न सत् । तथा सति यत्तत्पदार्थस्य हेतुसाध्यशरीरे अप्रवेशेन सामान्यव्याप्तित्वानुपपत्तेरिति वाच्यम् ।।

यावत्पदार्थस्य व्यापकत्वार्थकतया तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावत्वनिरूपितायाः आधेयत्वसंबन्धावच्छिन्नव्यापकताया एव हेतुतया विशेषधर्मव्यापकत्वाघटकाभावान्तरस्यैव च सामान्यधर्मावच्छिन्नव्यापकताघटकतया वैयर्थ्यानवकाशात् ।।

### व्याख्या

सामान्यमुखव्याप्तिघटकहेतौ यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववान् इत्यत्र धर्मे उभयावृत्ति इति विशेषणस्य संदिग्धासिद्धिवारणं प्रयोजनमिति पूर्वमुक्तम् । तत्रैवं शङ्का भवति-हेतुघटकविशेषणानां व्यभिचारवारणमेव प्रयोजनमिति सिद्धान्तात् असिद्धिवारणप्रयोजनकत्वं न संगच्छते । अतस्तद्विशेषणं व्यर्थमिति । तत्र मध्ये कश्चिदाह– हेतौ यावदभाववान् इत्यत्र यावत्पदमस्ति । तस्य समुदाय इत्यर्थः । समुदायत्वं अयमेकः अयमेक इत्याकारकधीविशेषविषयत्वम् । तस्य यावदभाव इत्यस्य धीविशेषविषयाभाव इत्यर्थः । स एव हेतुः । धीविशेषविषयोऽभावः कः इति जिज्ञासायां तज्ज्ञापकतया उभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वं विशेषणमुक्तम् । न तु तत् हेतुशरीरप्रविष्टम् । अतो न वैयर्थ्यमिति । तत्तु न युक्तम् । यत्तत्पदार्थयोः हेतुशरीरेऽप्रवेशे सामान्यव्याप्तित्वभङ्गापत्तेः । यो यावदभाववान् स सामान्याभाववान् इत्येव सामान्यव्याप्तेः पर्यवसानात्, यत्तत्पदार्थतया हेतुसाध्यघटितस्यैव सामान्यव्याप्तित्वात् अस्य तदघटितस्य सामान्यव्याप्तित्वं न स्यादिति । ततश्च व्यभिचारावारकतया उभयावृत्तीति विशेषणस्य वैयर्थ्यमिति शङ्का अवतिष्ठते ।।



तस्याः समाधानमाह– **यावत्पदस्येत्यादिना** । यावत्पदस्य स्वसमभिव्याहृतपदार्थतावच्छेदकव्यापकत्वार्थकतयेत्यर्थः । व्यापकत्वं च प्रकृते आधेयतासंबन्धावच्छिन्नं विवक्षितम् । तथा च यो यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापकः स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववान् इति व्याप्तिः फलति । संयोगत्वसमानाधिकरण–उभयावृत्तितत्तत्संयोगत्वावच्छिन्नप्रतियोगिताकाभावाः आधेयतासंबन्धेन वृक्षे वर्तन्त इति तादृशाभावत्वनिरूपिताधेयतासंबन्धावच्छिन्नव्यापकत्वं वृक्षेऽस्ति, तेन हेतुना वृक्षे संयोगत्वावच्छिन्नप्रतियोगिताकाभावः सिध्यति । ततश्च न संदिग्धासिद्धिः ।।

पूर्वोक्त उभयावृत्तित्वघटितव्यापकत्वमन्यत्, उभयावृत्तित्वाघटितव्यापकत्वं चान्यत् । न तु तत् पूर्वोक्तव्यापकत्वे प्रविष्टम् । अतो न वैयर्थ्यावकाशः । तथा हि–

(१) उभयावृत्तित्वरूपविशेषणाघटितव्यापकत्वं तावत् संयोगत्वसमानाधिकरणतत्तत्संयोगत्वावच्छिन्नप्रतियोगिताकाभावत्ववन्निष्ठभेदप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावरूपम्,

(२) तदपेक्षया उभयावृत्तित्वविशेषणघटितं व्यापकत्वं तावत् संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्ववन्निष्ठभेदप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावरूपम् ।

एवंरूपाभावरूपयोः व्यापकत्वयोः भिन्नतया घटकघटितभावो नास्तीति न वैयर्थ्यावकाशः इत्यवधेयम् । ईदृशी रीतिः **चतुर्दशलक्षण्यां भट्टाचार्यैः** प्रगल्भलक्षणादौ प्रदर्शितैवात्रापि स्मारिता ।।

## गादाधरी

न च तादृशाभावत्वव्यापकत्वं तादृशाभावत्ववन्निष्ठभेदप्रतियोगितायामाधेयतासंबन्धेनानवच्छेदकत्वम् । एवं च संयोगविशेषाभावानां सर्वेषामेव सर्वाधिकरणवृत्तितया तन्निष्ठभेदप्रतियोगितायाम् आधेयतासंबन्धेनावच्छेदकमधिकरणमप्रसिद्धम् इति तदनवच्छेदकत्वरूपहेत्वप्रसिद्धिरिति वाच्यम् ।।

आधेयतासंबन्धावच्छिन्नावच्छेदकतासंबन्धेन प्रतियोगिताया अभावस्यैव प्रतियोगितानवच्छेदकत्वस्थाने निवेशनीयत्वात् । उक्तस्थले व्यधिकरणतादृशसंबन्धावच्छिन्नाभावप्रसिद्धिसौलभ्यात् ।।

## व्याख्या

पूर्वं तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वनिरूपिताधेयतासंबन्धावच्छिन्नव्यापकत्वं हेतुतया विवक्षितम् । संयोगविशेषाभावानां च सर्वेषां वृक्षवृत्तितया वृक्षः आधेयतासंबन्धेन तादृशाभावत्वव्यापको भवति । अतस्तेन हेतुना वृक्षे संयोगसामान्याभावः सिध्यतीत्युपपादितम् । तत्र पृच्छ्यते– तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावनिरूपितं आधेयतासंबन्धावच्छिन्नव्यापकत्वमित्यस्य हि तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्ववन्निष्ठभेदप्रतियोगितानिरूपिताधेयतासंबन्धावच्छिन्नावच्छेदकतावद्भिन्नत्वम् । इदमेव हेतुतया विवक्षितम् । सर्वेषामेव संयोगविशेषाभावानां सर्वाधिकरणवृत्तितया तादृशाभावे आधेयतासंबन्धेन किंचिदधिकरणवद्भेदस्य अप्रसिद्धतया तादृशाभावनिष्ठभेदप्रतियोगितानिरूपिताधेयतासंबन्धावच्छिन्नावच्छेदकतावदधिकरणाप्रसिद्ध्या तद्भिन्नत्वरूपहेत्वप्रसिद्धिरिति शङ्का ।।

समाधानं तु– तादृशाभावनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्थाने आधेयतासंबन्धावच्छिन्नावच्छेदकतासंबन्धेन तादृशाभावनिष्ठभेदप्रतियोगित्वाभावः



निवेश्यते । तथा चोक्तस्थले तत्तत्संयोगाभावनिष्ठभेदप्रतियोगित्वस्य व्यधिकरणसंबन्धभूत–आधेयतासंबन्धावच्छिन्नावच्छेदकतासंबन्धेनाभावः सर्वत्र प्रसिद्ध इति भावः ।।

## गादाधरी

**यद्धर्मसमानाधिकरणेत्यत्र** प्रतियोगितावच्छेदकत्वेन धर्मो विशेषणीयः । तेन कम्बुग्रीवादिमत्त्वादिव्याप्यधर्मावच्छिन्नप्रतियोगिताकयावदभाववतः तद्धर्मावच्छिन्नाभावाप्रसिद्ध्या तादृशाभाववत्वासंभवेऽपि न क्षतिः ।।

## व्याख्या

ननु यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् यः स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववान् इति सामान्यमुखव्याप्तौ व्यभिचारो भवति । तथा हि – यद्धर्मः कम्बुग्रीवादिमत्त्वं तदधिकरणघटवृत्तिः उभयावृत्तिधर्मः तत्तद्घटत्वादिः नीलघटत्वरक्तघटत्वादिः तदवच्छिन्नप्रतियोगिताकयावदभावः घटशून्ये भूतले वर्तते । परं तु तत्र तद्धर्मपदेनोपादेयं यत् कम्बुग्रीवादिमत्त्वं तदवच्छिन्नाभावः नास्ति । कम्बुग्रीवादिमत्त्वस्य घटत्वापेक्षया गुरुत्वेन प्रतियोगितानवच्छेदकतया तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः व्याप्त्यप्रसिद्धेः इत्याशङ्क्याह– **यद्धर्मसमानाधिकरणेत्यत्रेति** । एवं च यद्धर्मे प्रतियोगितावच्छेदकेति विशेषणं पूर्वोक्ताप्रसिद्धिवारणाय देयम् । तथा सति प्रतियोगितावच्छेदकयद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् यः स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववान् इति व्याप्तिः । इदानीं यद्धर्मपदेन कम्बुग्रीवादिमत्त्वं न ग्रहीतुं शक्यम्, तस्य गुरुत्वेन प्रतियोगितावच्छेदकत्वाभावात् । अतो यद्धर्मपदेन घटत्वं ग्राह्यम् । तत्समानाधिकरणः उभयावृत्तिधर्मः

तत्तद्धटत्वं तदवच्छिन्नप्रतियोगिताकयावदभाववति भूतले तद्धर्मघटत्वावच्छिन्न-प्रतियोगिताकाभावसत्त्वात् न व्याप्त्यप्रसिद्धिरिति भावः ।।

## गादाधरी

न च भेदप्रतियोगितावच्छेदकवाच्यत्वघटान्यतरत्वादिव्याप्यधर्मावच्छिन्न-संयोगादिसंबन्धावच्छिन्नप्रतियोगिताकयावदभाववतः तद्रूपावच्छिन्न-प्रतियोगिताकाभाववत्त्वासंभवात् व्यभिचारः । **वाच्यत्वादेः संयोगादिना अवृत्तित्वेन** तेन संबन्धेन घटादेरेव **तादृशाभाव**विरोधितया घटत्वादेरेव तत्प्रतियोगितावच्छेदकत्वसंभवेन गुरोः अन्यतरत्वस्य तत्प्रतियोगितान-वच्छेदकत्वादिति वाच्यम् । **वाच्यत्वादिसाधारणस्या**न्यतरनिष्ठप्रतियोगित्वस्य न्यूनवृत्तिघटत्वादिनानवच्छेदात्, अगत्या गुरुणा अन्यतरत्वादिनैव तदवच्छेदात् ।।

## व्याख्या

पूर्वोक्तसामान्यव्याप्तौ यद्धर्मे प्रतियोगितावच्छेदकेति विशेषणे दत्तेऽपि व्यभिचारो भवतीति शङ्कते– **न चेति** । वाच्यत्वघटान्यतरत् न इति प्रतीतिसिद्धो यो भेदः तत्प्रतियोगितावच्छेदकं वाच्यत्वघटान्यतरत्वं तद्व्याप्यधर्मः घटत्वं तदवच्छिन्नसंयोगसंबन्धावच्छिन्नघटनिष्ठप्रतियोगिताकाभावः संयोगसंबन्धेन घटो नास्तीति प्रतीतिसिद्धोऽभावः यत्र वर्तते घटशून्यभूतलादौ तत्र वाच्यत्व-घटान्यतरत्वावच्छिन्नसंयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावो नास्ति । तादृशा-भावाप्रसिद्धेः । **तथा च हेतुसत्त्वेऽपि साध्याभावात् व्यभिचार इति भावः** । संयोगसंबन्धावच्छिन्नवाच्यत्वघटान्यतरत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धिमुप-पादयति– **वाच्यत्वादेः संयोगादिनावृत्तित्वेन इत्यादिना** । अयं भावः– अभावं प्रति येन संबन्धेन यः विरोधी स एव प्रतियोगी, स संबन्ध एव प्रतियोगितावच्छेदकसंबन्धः इत्युच्यते । संयोगसंबन्धावच्छिन्नघटाभावं प्रति



संयोगसंबन्धेन घटः विरोधी, संयोगसंबन्धः प्रतियोगितावच्छेदकसंबन्धः । प्रकृते संयोगसंबन्धावच्छिन्नवाच्यत्व-घटान्यतरत्वावच्छिन्नप्रतियोगिताकाभावः तदैव प्रसिध्येत्, यदि संयोगसंबन्धेन घटः वाच्यत्वं च उभयं कुत्रापि स्यात् । तदैव अन्यतरत्वावच्छिन्ना प्रतियोगिता संयोगसंबन्धावच्छिन्ना स्यात् । वाच्यत्वं तु संयोगेन कुत्रापि नास्ति । अतः संयोगसंबन्धेन वाच्यत्वघटान्यतराभावं प्रति संयोगसंबन्धेन घटस्यैव विरोधितया विरोधितावच्छेदकं घटत्वमेव संयोगसंबन्धेन वाच्यत्वघटान्यतराभावं प्रति प्रतियोगितावच्छेदकं न वाच्यत्वघटान्यतरत्वमिति संयोगसंबन्धावच्छिन्नवाच्यत्वघटान्यतरत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावा-प्रसिद्ध्या सामान्यमुखव्याप्तिभङ्ग इति प्रष्टुराशयः । अतः व्यभिचार इत्यनेन हेतुरस्ति, साध्यं तु अप्रसिद्ध्या नास्तीत्येवाभिप्रेतम् ।।

भेदप्रतियोगितावच्छेदकं तु अन्यतरत्वं भवितुमर्हति । वाच्यत्वे घटे च वाच्यत्वघटान्यतरन्न इति प्रतीत्यभावात् । तथा च भेदप्रतियोगितावच्छेदकं यत् वाच्यत्वघटान्यतरत्वं **तद्व्याप्यं** तत्समानाधिकरणं यत् घटत्वं तदवच्छिन्न-संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावरूपव्याप्यवति भूतले संयोगसंबन्धावच्छिन्न-वाच्यत्वघटान्यतरत्वावच्छिन्नप्रतियोगिताकाभावासत्त्वात् सामान्यमुखव्याप्तेः व्यभिचारः इति **न च** इत्यादिग्रन्थस्य तात्पर्यम् । **तादृशाभावेति** । वाच्यत्व-घटान्यतराभावेत्यर्थः ।।

तत्र समाधानमाह– **वाच्यत्वादिसाधारणस्येत्यादिना** । संयोगेन वाच्यत्वघटान्यतराभावस्य घटत्वमेव प्रतियोगितावच्छेदकं, न तु वाच्यत्वघटान्यत-रत्वमिति यदुक्तं, तन्न संगतम् । प्रतियोगित्वान्यूनानतिप्रसक्तधर्मस्यैव प्रतियोगिता-वच्छेदकत्वमिति नियमात् प्रतियोगितायाः वाच्यत्वे घटे च सत्त्वात् घटत्वस्य घटमात्रे सत्त्वेन वाच्यत्वेऽभावात् घटत्वं प्रतियोगितान्यूनवृत्तीति कृत्वा न तत्

वाच्यत्वघटान्यतराभावप्रतियोगितावच्छेदकम्, अपि तु वाच्यत्वघटान्यतरत्वमेव प्रतियोगितावच्छेदकम् । तथा च वाच्यत्वघटान्यतरत्वावच्छिन्नसंयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावः प्रसिद्ध्यत्येवेति नोक्तदोष इति भावः ।।

अपि च– सर्वत्र प्रतीत्यनुसारेणैव प्रतियोगितावच्छेदकत्वस्य व्यवस्थापनीयत्वात् वाच्यत्वघटान्यतरन्नास्तीति प्रतीतौ तादृशान्यतरत्वस्य प्रतियोगिविशेषणतया भानात् तत्र प्रतियोगितावच्छेदकत्वमावश्यकम् । प्रतियोगितासमनियतलघुधर्मस्यैव प्रतियोगितावच्छेदकत्वाच्च घटत्वं नोक्तान्यतराभावप्रतियोगितावच्छेदकमिति ध्येयम् ।।

## गादाधरी

**वस्तुतः यत्संबन्धा**वच्छिन्नप्रतियोगिताकाभावस्य साध्यहेतुघटकता तत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वेनैव सामान्यधर्मस्य विशेषणीयतया उक्तसामान्यधर्मस्य भेदप्रतियोगितावच्छेदकत्वेऽपि संयोगादिसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकतया तत्संबन्धावच्छिन्नतदवच्छिन्नाभावाप्रसिद्धावपि न व्यभिचारः ।।

**अत एव** भेद प्रतियोगितावच्छेदकजा**तित्वादिघटकनित्यत्वादेः** समवायसंबन्धावच्छिन्नप्रतियोगितावच्छेदकगर्भे निवेशस्य गौरवेण असंभवेऽपि न जातित्वादि- सामान्यधर्मघटितहेतोः व्यभिचारितया सामान्यव्याप्तिभङ्गः ।।

## व्याख्या

अथ न च इत्यादिना कृतायाः शङ्कायाः वास्तवं समाधानमाह– **वस्तुत** इत्यादिना । सामान्यव्याप्तिघटकयद्धर्मे कम्बुग्रीवादिमत्त्वमादाय दोषवारणाय प्रतियोगितावच्छेदकेति विशेषणे दत्ते भेदप्रतियोगितावच्छेदकं वाच्यत्वघटान्यतरत्वमादाय दोषः प्रसक्तः । तत्समाधानं कयाचित् रीत्या उक्तम् । इदानीं



तत्समाधाने क्लेशमभिसन्धाय वास्तवसमाधानमाह– **वस्तुत** इत्यादिना । **यत्संबन्धेनेति** । यत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकयद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् यः तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववान् इति व्याप्तिस्वरूपं परिष्करणीयम् । अन्यथा **अत एव** इत्यादिना वक्ष्यमाणदोषप्रसङ्गात् । तथा च वाच्यत्वघटान्यतरत्वस्य भेदप्रतियोगितावच्छेदकत्वेऽपि पूर्वोक्तयुक्त्या साध्यहेतुघटकसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वं नास्तीति न तमादाय सामान्यव्याप्तिभङ्ग इति भावः ।।

संयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकघटत्वसमानाधिकरणोभयावृत्तितत्तद्घटत्वावच्छिन्नसंयोगसंबन्धावच्छिन्नप्रतियोगिताकयावदभाववति भूतले संयोगसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिकाभावसत्त्वात् समन्वयः ।।

**अत एवेति** । साध्यहेतुघटकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वेन यद्धर्मविशेषणादेवेत्यर्थः । अन्यथा प्रतियोगितावच्छेदकयद्धर्मेत्यनेन जातिभेदप्रतियोगितावच्छेदकं यत् जातित्वं तद्ग्रहणे तत्समानाधिकरणः यः उभयावृत्तिधर्मः घटत्वादिनिष्ठं तद्व्यक्तित्वं तदवच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाः यावन्तोऽभावाः घटत्वादिजातिविशेषाभावाः तद्वान् सामान्यादिरेव । तस्य जातित्वरूपतद्धर्मावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वं न संभवति । जातित्वं न जातिः, जातौ जात्यनङ्गीकारात् । अपि तु नित्यत्वे सति अनेकसमवेतत्वम् । तदपेक्षया तद्घटकसमवेतत्वं लघु इति कृत्वा जातिसामान्याभावप्रतियोगितावच्छेदकं समवेतत्वम् । यत्र जातिरस्ति तत्र समवेतमस्ति । यत्र समवेतमस्ति तत्र जातिरस्ति । यत्र जातिर्नास्ति तत्र समवेतमपि नास्ति इति समवेतत्वस्य जातित्वघटकस्य लघोः जातिसामान्याभावप्रतियोगिता-

वच्छेदकत्वसंभवेन जातित्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या सामान्यव्याप्तिभङ्गः स्यात् ।।

यत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्य साध्यहेतुघटकता तत्संबन्धावच्छेदकयद्धर्मसमानाधिकरणेत्यादिरीत्या निवेशे तु जातित्वे भेदप्रतियोगितावच्छेदकत्वसंभवेऽपि समवायसंबन्धावच्छिन्नप्रतियोगिताकजात्यभावप्रतियोगितावच्छेदकत्वं न संभवति । उक्तरीत्या लघोः समवेतत्वस्यैव प्रतियोगितावच्छेदकत्वात् । अतो जातित्वमादाय प्रसक्तो दोषो न भवति । यद्धर्मपदेन समवेतत्वस्य ग्रहणे तु तत्समानाधिकरणद्रव्यत्वाद्यवच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकयावदभाववत्सु सामान्यादिषु समवेतत्वरूपसामान्यधर्मावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वात् न अप्रसिद्धिनिबन्धनव्यभिचार इति भावः।।

ननु जात्यन्ताभावप्रतियोगितायां लघोः समवेतत्वस्य अवच्छेदकत्ववत् जातिभेदप्रतियोगितायामपि समवेतत्वमेवावच्छेदकमस्तु इति चेत्-मैवम् । जातित्वं न जातिः, जातौ जात्यनङ्गीकारात् । अतः जातित्वं नाम नित्यत्वे सति अनेकसमवेतत्वम् । तत्र समवेतत्वमात्रस्य जातिभेदप्रतियोगितावच्छेदकत्वे रूपे समवेतत्वात्मकप्रतियोगितावच्छेदकवति जातिभेदासत्त्वप्रसङ्गात् । अनेकसमवेतत्वस्य प्रतियोगितावच्छेदकत्वेऽपि संयोगेऽनेकसमवेते जातिभेदानुपपत्तिः स्यात् । अतो नित्यत्वस्यापि भेदप्रतियोगितावच्छेदकगर्भे निवेशः कार्यः । नित्यत्वे सति अनेकवृत्तित्वं जातिभेदप्रतियोगितावच्छेदकम् इत्युक्तावपि घटात्यन्ताभावादौ जातिभेदप्रत्ययानुपपत्तिः । अतो नित्यत्वविशिष्टानेकसमवेतत्वस्यैव प्रतियोगितावच्छेदकत्वम् ।।

जात्यन्ताभावप्रतियोगितावच्छेदकत्वं तु समवेतत्वमात्रस्य भवितुमर्हति । जात्यभावसमवेताभावयोस्तु समनियतत्वेन ऐक्यात् जात्यभावप्रतियोगितावच्छेदकत्वं समवेतत्वस्य संभवतीति सूक्ष्मतया अवधेयम् ।।



## गादाधरी

**वस्तुतस्तु**– यद्धर्मे प्रतियोगितावच्छेदकत्वविशेषणमनुपादेयमेव । कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य घटत्वादिघटिततादृशधर्मापेक्षया गुरुतया तदवच्छिन्नाभावरूपव्यापकत्वाप्रसिद्धेः यद्धर्म इत्यनेन कम्बुग्रीवादिमत्त्वरूपगुरुधर्मोपादानस्य गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वपक्षेऽसंभवेन व्यभिचारानवकाशात् ।।

**अभावे यावत्त्वादिविशेषण**प्रवेशात् यत्किंचिज्जात्यादिव्यक्त्यभाववति जात्यादिसामान्याभावासत्त्वेऽपि न सामान्यव्याप्तिभङ्गः । **यद्यपि** यत्तदर्थघटितसाध्यहेतूनामननुगमेन नैका व्याप्तिरिति संयोगसामान्याभावतदीयविशेषाभावकूटयोः व्याप्तौ यावत्त्वादिविशेषणवैयर्थ्यमेव; **तथापि** तद्दोषस्य स्वयमग्रे वक्ष्यमाणतया यथाकथंचित् शङ्कासंगतिः ।।

## व्याख्या

यो यावद्विशेषाभाववान् स तत्सामान्याभाववान् इति व्याप्तौ हेतौ प्रविष्टं यावत्त्वं समुदायत्वरूपमिति यथाश्रुतार्थानुसारेण यो यदीयविशेषाभावसमुदायवान् स तत्सामान्याभाववान् इति व्याप्तिमनुसृत्य तत्र परिष्कारादिकमेतावता कृतम् । तत्र परिष्कारे यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभाव कूटवान् यः स तद्धर्मावच्छिन्नाभाववान् इति प्रदर्शिते सति यद्धर्मपदेन कम्बुग्रीवादिमत्त्वरूपगुरुधर्ममादाय व्याप्तिभङ्गः प्रसक्तः । तद्वारणाय च यद्धर्मे प्रतियोगितावच्छेदकेति विशेषणं देयमासीत् । तदुपर्याक्षेपसमाधानादिकं चाभूत् ।।

इदानीं किमियता क्लेशेन । यावत्पदं व्यापकत्वार्थकम् इत्याश्रित्य सामान्यव्याप्तिं प्रदर्शयति– **वस्तुतस्तु** इत्यादिना । यद्धर्मे प्रतियोगितावच्छेदकत्वविशेषणं नोपादेयम् । यावत्पदं च व्यापकत्वार्थकम् । अतः कम्बुग्रीवादिमत्त्व-

मादाय प्रसक्तो दोषो न भवति । तथा हि– यो यदीययावद्विशेषाभाववान् इति सामान्यमुखव्याप्तौ हेतुपरयदीयेत्यादिशब्दप्रतिपाद्यतयाभिमतं यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववत्त्वं यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावनिष्ठभेदप्रतियोगितात्वावच्छिन्नप्रतियोगिताकाभावरूपम् । एवं सति कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावनिष्ठप्रतियोगितात्वापेक्षया घटत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावनिष्ठप्रतियोगितात्वस्य लघुतया तस्य अवच्छेदकत्वसंभवे कम्बुग्रीवादिमत्त्वघटितधर्मस्य गुरुत्वेनानवच्छेदकतया तदवच्छिन्नाभावरूपव्यापकत्वस्याप्रसिद्ध्या व्यभिचारासंभवात् यद्धर्मे प्रतियोगितावच्छेदकेति विशेषणं नोपादेयमिति भावः ।।

अभावे यावत्त्वविशेषणस्य प्रयोजनमाह– **अभावे यावत्त्वादिविशेषण** इति । यावत्त्वविशेषणाभावे यो यदीयाभाववान् – यद्धर्म समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाववान् स तत्सामान्याभाववान् इति व्याप्तिः स्यात् । तथा सति घटत्वसमानाधिकरणनीलघटत्वावच्छिन्नप्रतियोगिताकाभाववति रक्तघटवद्भूतले घटसामान्याभावविरहात् व्यभिचारः स्यात् । एवं द्रव्यत्वजातिसमानाधिकरणघटत्वावच्छिन्नाभाववति जातिसामान्याभावो नास्तीति व्यभिचारः स्यात् । अतो यावत् पदमिति भावः । पूर्ववत् आधेयतासंबन्धेन व्यापकत्वमित्यादिकं स्मर्तव्यम् । यद्धर्मे प्रतियोगितावच्छेदकेति विशेषणमनावश्यकमित्येवात्र पक्षे विशेषः । ननु यो यदीययावद्विशेषाभाववान् इत्युक्तव्याप्तेः भिन्नभिन्नसाध्यहेतुघटितत्वेन अननुगतया तत्तद्धेतुसाध्यभेदेन व्याप्तिः भिन्नैवेति संयोगसामान्याभावतदीययावद्विशेषाभावव्याप्तौ यावत्त्वविशेषणं व्यर्थम् । उभयोरप्यभावयोः केवलान्वयित्वेन अन्यत्रेव व्यभिचारानवकाशात् इत्याशङ्कते– **यद्यपीति** । अयं



दोषः ग्रन्थकारेणैव वक्ष्यते । तथापि प्रकृतहेतौ सार्थक्याभावेऽपि प्रकृतहेतुतुल्यहेतौ सार्थक्येन सामान्यहेतौ सार्थक्यासंभवेऽपि न क्षतिरित्याशयेन समाधत्ते– **तथापीति** ।।

## गादाधरी

**अथ वृक्षादौ** यावत्संयोगाभाववत्त्वमुभयवाद्यसिद्धम् । तत्र विभुसंयोगाभावावच्छेदकस्य अवयवविशेषस्य **दिग्विशेषस्य** वा दुर्वचत्वात् । **ध्वंसप्रागभावयो**रत्यन्ताभावविरोधित्वे कालविशेषावच्छेदेनापि तत्र तदभावासंभवात् । तयोः **तदविरोधितामते द्रव्ये** संयोगसामान्याभावस्यापि उत्पत्तिकालावच्छेदन वृत्तावविरोधात् ।।

## व्याख्या

''न च यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान्'' इति **दीधितिग्रन्थे** वृक्षः संयोगसामान्याभाववान् संयोगीययावद्विशेषाभाववत्त्वात् इत्यनुमानोपयोगिनी सामान्यमुखी व्याप्तिः प्रदर्शिता । तत्र हेत्वसिद्धिमाशङ्कते **गादाधर्याम्– अथ वृक्षादा**वित्यादिना । वृक्षे विद्यमानानां सर्वेषामपि संयोगानां पिपीलिकासंयोगकपिसंयोगादीनामग्राद्यवच्छेदेन वर्तमानानां मूलाद्यवयवावच्छेदेनाभावः यद्यपि संभवति । प्रतियोग्यनवच्छेदकस्यैवाभावावच्छेदकत्वमिति न्यायेन कपिसंयोगादिप्रतियोग्यनवच्छेदकमूलादेः अभावावच्छेदकत्वसंभवात् । परं तु वृक्षे ये विभुपदार्थाकाशदिगादिसंयोगाः तेषां व्याप्यवृत्तितया सर्वावयवावच्छेदेन वृत्तितया तदनवच्छेदकावयवदौर्भिक्ष्यात् अभावाः वक्तुमशक्याः । ततश्च वृक्षे संयोगीययावद्विशेषाभावरूपहेत्वभावात् स्वरूपासिद्धिः इति भावः ।।

ननु वृक्षे अग्रमूलाद्यवच्छेदेन विभुसंयोगाभावस्य दुर्वचत्वेऽपि दिग्विशेषावच्छेदेन तदभावोऽस्तु इति शङ्कां निरस्यति– **दिग्विशेषस्येति** । दिशोऽपि

व्याप्यवृत्तित्वात् सर्वावयवावच्छेदेनेव सर्वदिगवच्छेदेनापि वृक्षे विभुसंयोगस्य सत्त्वेन तदभावासंभवादिति भावः । वृक्षे उत्पत्तिकालावच्छेदेन विभुसंयोगाभावस्तु ध्वंसादिमति वृक्षे न संभवतीत्याह– **ध्वंसप्रागभावयोरिति** । एतद्दोषपरिहाराय ध्वंसप्रागभावयोरत्यन्ताभावाविरोधित्वपक्ष एवाश्रीयत इत्याशङ्क्य आह– तयोरिति । ध्वंसप्रागभावयोरित्यर्थः । **तदविरोधिता मते** – अत्यन्ताभावाविरोधितामते । **द्रव्य** इति । उत्पत्तिकालावच्छेदेन सर्वस्मिन्नपि द्रव्ये संयोगविशेषाभावस्येव संयोगसामान्याभावस्यापि संप्रतिपन्नतया साधनीयत्वाभावात् उक्तप्रयासो व्यर्थ इति भावः ।।

### गादाधरी

**न च** मूलाग्राद्यवच्छिन्नविभुसंयोगव्यक्तीनां भेदात् अग्रमूलाद्यवच्छेदेनाभावः सुलभ इति वाच्यम् । **तासां भेदस्याप्रामाणिकत्वात्** ।।

### व्याख्या

वृक्षवृत्तेः विभुपदार्थसंयोगस्य एकत्वाभिप्रायेण भवता उच्यते । वस्तुतस्तु अग्रमूलादिभिन्नभिन्नावयवावच्छिन्नविभुसंयोगव्यक्तीनां अवयवरूपावच्छेदकभेदात् भेदस्यावश्यकतया तत्तदनवच्छेदकावयवावच्छेदेन विभुसंयोगव्यक्तीनाम् अभावोऽपि संभवतीति शङ्कते– **न चेति** । समाधत्ते– **तासां भेदस्येति** । **तासां** विभुसंयोगव्यक्तीनां **भेदस्य अप्रामाणिकत्वात्** । एकस्यैव विभुसंयोगस्य नानावयवावच्छिन्नत्वसंभवेन तद्भेदे प्रमाणाभावादिति भावः ।।

### गादाधरी

**न च नाना**वयवावच्छिन्नसंयोगव्यक्तीनामभेदे तत्तत्संयोगव्यक्तौ तत्तदवच्छेदकव्यक्तीनां तादात्म्यसंबन्धेन कारणतायां व्यभिचार इति अवच्छेदकभेदेन



संयोगभेदः आवश्यकः । **आवश्यकश्च** अवच्छेदकव्यक्तीनां विशिष्य स्वावच्छिन्नसंयोगव्यक्तिषु हेतुताभ्युमगमः । अन्यथा मूलादिमात्रावच्छिन्नमूर्तान्तर-संयोगानाम् अग्राद्यवच्छेदेन एतद्वृक्षादिवृत्तिविभुसंयोगानां च वृक्षान्तरावयवावच्छेदेन अनुत्पत्तिप्रयोजकस्य दुर्लभत्वापातादिति वाच्यम् ।।

### व्याख्या

एकस्यैव वृक्षे विद्यमानस्य विभुसंयोगस्य अग्रमूलादिनानावयवावच्छिन्नत्वसंभवेन अवच्छेदकभेदेन विभुसंयोगभेदस्य अप्रामाणिकत्वात् इति यदुक्तम्, तत्र शङ्कते– **न च नानेति** । अग्रमूलादिनानावयवावच्छिन्नविभुसंयोगव्यक्तीनामभेदे तत्तदवयवावच्छिन्नविभुसंयोगव्यक्तौ तत्तदवयवव्यक्तीनां तादात्म्यसंबन्धेन हेतुत्वं वक्तव्यम् । तत्र अवच्छिन्नसंयोगस्य एकत्वे मूलावच्छिन्नविभुसंयोगस्य अग्रेऽपि सत्त्वेन तत्र च मूलरूपावयवस्य तादात्म्यसंबन्धेन अभावात् व्यतिरेकव्यभिचारः स्यात् । अतश्च मूलाद्यवच्छेदकभेदेन विभुसंयोगभेद आवश्यकः । ततश्च तत्तदनवच्छेदकावयवावच्छेदेन विभुसंयोगव्यक्तीनामभावोऽपि संभवतीति शङ्का अवतिष्ठते ।।

ननु उक्तदोषपरिहाराय पूर्वोक्तः तत्तदवयवावच्छिन्नविभुसंयोगव्यक्तौ तादात्म्येन तत्तदवयवव्यक्तीनां कारणत्वमिति कार्यकारणभावः त्यज्यतामित्याशङ्क्य तथा वक्तुं न शक्यत इत्याह– **आवश्यकश्चेति** । तत्तदवच्छिन्नसंयोगव्यक्तौ तत्तदवच्छेदकानां तादात्म्येन हेतुत्वानङ्गीकारे मूलमात्रावच्छिन्नपिपीलिकादि-संयोगानामग्रावच्छेदेन उत्पत्तिः स्यात् । एवम् एतद्वृक्षवृत्तिविभुसंयोगानां वृक्षान्तरावयवावच्छेदेन उत्पत्तिः स्यात् । ततश्च तत्तदनवच्छेदकावयवावच्छेदेन विभुसंयोगव्यक्तीनामभावोऽपि संभवतीति शङ्का तथैवावतिष्ठते ।।

## गादाधरी

**व्याप्यवृत्ते**रवच्छेदकानभ्युपगमेन वृक्षादौ विभुसंयोगस्य व्याप्यवृत्तितया मूलाद्यवच्छिन्नत्वविरहेण तत्र मूलादीनां हेतुताविरहात् । व्याप्यवृत्तेरवच्छेदकोपगमे तत्तदवच्छेदकस्वरूपतत्तन्निष्ठावच्छेदकताव्यक्तीनामेव तत्तदवच्छेदकस्य जन्यतावच्छेदकसंबन्धतया मूलाग्राद्यवच्छिन्नविभुसंयोगव्यक्तीनामभेदेऽपि व्यभिचारानवकाशात् । **अन्यथा मूलाद्य**वच्छिन्नसंयोगस्य दिग्विशेषैरप्यवच्छिन्नतया तत्रावच्छेदकतासंबन्धेन तत्तत्संयोगव्यक्तीनामुत्पत्त्या मूलादेस्तत्र व्यभिचारस्य दुर्वारत्वात् ।।

## व्याख्या

अव्याप्यवृत्तेः कपिसंयोगादेरेव एकस्मिन्नेव वृक्षे कपिसंयोगः तदभावश्च विरोधात् कथं भवेत् इति विरोधशङ्कापरिहाराय अवच्छेदकमपेक्षितम् । अग्रावच्छेदेन संयोगः मूलावच्छेदेन तदभावः इति स्वीकारात् विरोधपरिहारः । वृक्षे विद्यमानः गगनादिरूपविभुसंयोगस्तु व्याप्यवृत्तिः गगनादिसंयोगाभावस्तत्र नास्ति । तत्सत्त्वे किल विरोधः प्रसक्तो भवति, तत्परिहाराय अवच्छेदकभेदश्चावश्यकः स्यात् । ततश्च विरोधपरिहाररूपयुक्त्यभावात् वृक्षादौ विभुसंयोगस्य मूलाद्यवच्छिन्नत्वमेव नास्तीति व्यतिरेकव्यभिचारस्य न प्रसक्तिरिति भावः ।।

ननु वृक्षे मूले गगनसंयोगः इति प्रतीतिबलात् व्याप्यवृत्तिगगनसंयोगस्यापि अवच्छेदकाभ्युपगमः आवश्यकः इति आशङ्कायामाह– **व्याप्यवृत्तेरिति** । व्याप्यवृत्तेः गगनादिसंयोगस्य मूलाद्यवच्छेदकाङ्गीकारेऽपि एकस्यैव वृक्षवृत्तेः गगनसंयोगस्य मूलाग्राद्यवच्छिन्नत्वेऽपि च मूलनिष्ठा गगनसंयोगनिरूपिता अवच्छेदकता अन्या, अग्रनिष्ठा गगनसंयोगनिरूपिता अवच्छेदकता अन्या इति स्वीकृत्य मूलनिष्ठावच्छेदकतासंबन्धेन गगनसंयोगं प्रति तादात्म्यसंबन्धेन मूलस्य कारणत्वम्, अग्रनिष्ठावच्छेदकतासंबन्धेन गगनसंयोगं प्रति तादात्म्यसंबन्धेन अग्रस्य कारणत्वम् इति रीत्या कार्यकारणभावस्वीकारेण कार्यतावच्छेदकस्य संबन्धस्य भिन्नभिन्नतया पूर्वोक्तव्यभिचारस्य न प्रसक्तिरिति भावः ।।



अवच्छेदकताभेदं स्वीकृत्य उक्तरीत्यैव कार्यकारणभावो वक्तव्य इति सयुक्तिकमाह– **अन्यथेति** । उक्तरीत्या कार्यकारणभावानङ्गीकारे इत्यर्थः । **मूलादीति** । वृक्षनिष्ठस्य विभुसंयोगस्य – गगनसंयोगस्य प्राच्यादिदिग्विशेषैरपि अवच्छिन्नत्वं स्वीकार्यम् ''मूले प्राच्यां वृक्षे गगनसंयोगः'' इति प्रतीतिबलात् । ततश्च मूलावच्छिन्नगगनसंयोगं प्रति तादात्म्येन मूलं कारणमिति वक्तव्यम् । तथा सत्यपि मूलावच्छिन्नगगनसंयोगस्य प्राच्यादिदिश्यप्युत्पत्त्या तत्र दिशि तादात्म्येन मूलरूपकारणविरहेण व्यतिरेकव्यभिचारः स्यात् । तद्वारणाय मूलनिष्ठावच्छेदकतासंबन्धेन गगनसंयोगं प्रति तादात्म्येन मूलं कारणम्, प्राचीनिष्ठावच्छेदकतासंबन्धेन गगनसंयोगं प्रति तादात्म्येन प्राच्याः कारणत्वमिति पृथक् पृथक् कारणत्वमेव कल्पनीयम् । अतो न व्यभिचार इति भावः ।।

## गादाधरी

**न च** मूलावच्छिन्नसंयोगानां अग्रावच्छिन्नसंयोगादेरिव प्राच्याद्यवच्छिन्नसंयोगादेरपि भेदः स्वीकर्तुं शक्यते । **मूले** प्राच्यां शरीरवृक्षसंयोगः इत्यादिप्रतीत्या एकसंयोगव्यक्तावेव मूलप्राच्याद्यवच्छिन्नत्वावगाहनात् ।।

**न चाग्रमूलयोः** शरीरसंयोगः इत्यस्या इव तादृशप्रतीतेरपि संयोगद्वयावगाहित्वमस्मदनुमतम् इति वाच्यम् ।।

**यत्र** मूलप्रतीचीमात्रावच्छिन्नः एकश्शरीरसंयोगः अग्रप्राचीमात्रावच्छिन्नश्च शरीरान्तरसंयोगः तत्र मूले प्राच्यां शरीरसंयोग इति प्रत्ययापत्तेः । **शरीर**तरुसंयोग-

व्यक्तीनाम् एकैकासामेव शरीरावयवेन वृक्षावयवेन च अवच्छिन्नतया व्यभिचारस्यापि दर्शितसंकोचमन्तरेण दुर्वारत्वाच्च ।।

### व्याख्या

मूलावच्छिन्नसंयोगस्य अग्रावच्छिन्नसंयोगस्य च यथा भेदः स्वीक्रियते, तथा मूलावच्छिन्नसंयोगस्य प्राच्यवच्छिन्नसंयोगस्य च भेदः स्वीक्रियते तावतैव व्यतिरेकव्यभिचारवारणं संभवतीति उक्तरीत्या – मूलनिष्ठावच्छेदकतासंबन्धेन विभुसंयोगं प्रति मूलस्य तादात्म्येन कारणत्वमिति रीत्या कार्यकारणभावः कल्प्यते इति शङ्कते– **न चेति** । समाधत्ते– **मूल** इति । प्रतीत्यनुसारेणैव वस्तुकल्पनं कर्तव्यम् । ''मूले प्राच्यां वृक्षे विभुसंयोगः अथवा शरीरसंयोगः'' इति प्रतीतिः एकस्यां संयोगव्यक्तावेव मूलप्राच्युभयावच्छिन्नत्वमवगाहत इति तत्र संयोगभेदस्य वक्तुमशक्यत्वात् इति भावः ।।

पुनः शङ्कते– **न चाग्रमूलयोरिति** । ''अग्रमूलयोः शरीरसंयोगः'' इति प्रतीत्या एकस्मिन् संयोगे उभयावच्छिन्नत्वस्य – अग्रमूलोभयावच्छिन्नत्वस्य अवगाहनेऽपि अग्रावच्छिन्नसंयोगस्य मूलावच्छिन्नसंयोगस्य च यथा भेदः प्रामाणिकः तद्वदत्रापि ''मूले प्राच्यां वृक्षे शरीरसंयोगः'' इत्यत्रापि मूलावच्छिन्नशरीरसंयोगस्य अग्रावच्छिन्नशरीरसंयोगस्य च भेदोऽस्तु इति वाच्यम् । तथा सति संयोगस्य अव्याप्यवृत्तित्वमेव क्वापि वक्तुं न शक्येत । तथा च तत्रावयवभेदवत् अत्र दिग्विशेषः भेदकोऽस्तु इत्याशयः ।।

तत्र दोषमाह– **यत्रेति** । अवयवद्वयावच्छिन्नसंयोगद्वये ''अग्रमूलयोः शरीरसंयोगः'' इति एकवचनान्तशब्दोल्लेखिप्रत्ययवत् अवयवविशेषदिग्विशेषोभयावच्छिन्नसंयोगस्थलेऽपि – ''मूले प्राच्यां वृक्षे शरीरसंयोगः'' इत्यत्रापि एकवचनान्तशब्दोल्लेखिप्रत्ययस्य संयोगद्वयावगाहित्वोपगमे, यत्र वृक्षे मूलप्रतीची-



मात्रावच्छिन्नः एकः शरीरसंयोगः अन्यश्च अग्रप्राचीमात्रावच्छिन्नः तत्र ''मूले प्राच्यां शरीरसंयोगः'' इति प्रत्ययापत्तिः, मूलावच्छिन्नसंयोगस्य प्राच्यवच्छिन्नसंयोगस्य च भेदेऽपि पूर्ववत् एकवचनान्तशब्दोल्लेखिप्रत्ययसंभवात् । न च तथा कस्यापि प्रत्ययो भवति । अत्रत्यसंयोगस्योभयावच्छिन्नत्वाभावात् ।।

तथा च दिग्विशेषावयवविशेषावच्छिन्नसंयोगद्वये एकचनान्तोल्लेखिप्रत्ययो न स्वीकर्तव्यः । तर्हि ''अग्रमूलयोः शरीरसंयोगः'' इति प्रागुक्तप्रत्ययः कथमुपपद्यत इति चेत्– अग्रमूलरूपावच्छेदकावच्छिन्नशरीरद्वयसंयोगस्य संयुज्यमानशरीर-व्यक्तिभेदेन वृक्षे घटपटसंयोगयोरिव भेदस्य दुरपलपत्वेन आवश्यकत्वात् कथंचित् स प्रत्ययो निर्वाह्यः ।।

अत्र तथाभेदस्य अनावश्यकत्वात् स्वरसतः प्रतीत्या अवगम्यमानमैक्यं न त्याज्यम्, बाधकविरहादिति भावः ।।

उक्तप्रयासं विनैव एकसंयोगव्यक्तेः अनेकावच्छिन्नत्वं स्पष्टयति– **शरीरेति** । यत्र वृक्षे शरीरसंयोगोऽस्ति तत्र तादृशसंयोगः वृक्षावयवेन मूलादिना शरीरावयवेन पादादिना चावच्छिन्नः । न चात्रापि संयोगभेदो वक्तुं शक्यः । **न हि** इत्यादिना वक्ष्यमाणदोषात् । तथा च मूलावच्छिन्नसंयोगं प्रति मूलस्य कारणत्वे तस्य शरीरावयवेऽप्युत्पत्त्या तत्र मूलरूपकारणविरहेण व्यतिरेकव्यभिचारस्य वारणार्थं तत्तदवच्छेदकतासंबन्धेन संयोगं प्रति तत्तदवच्छेदकस्य तादात्म्यसंबन्धेन कारणत्वमिति रीत्या कार्यकारणभावः आवश्यक इति भावः ।।

### गादाधरी

**न हि** तत्र शरीरावयवावच्छिन्नशरीरतरुसंयोगमूलावच्छिन्नतदुभयसंयोगयोः भेदसंभवः । तथा सति मूलावच्छिन्नवृक्षसंयोगस्य शरीरे, चरणावच्छिन्नशरीरसंयोगस्य वृक्षे व्याप्यवृत्तितया तत्र तदभावासत्त्वप्रसङ्गात् ।।

## व्याख्या

अत्रापि संयोगभेदाभ्युपगमे दोषमाह– **न हीति** । शरीरावयवावच्छिन्न-शरीरतरुसंयोग-मूलावच्छिन्नशरीरतरुसंयोगयोः भेदाभ्युपगमो न संभवति । तथा सति एकस्य संयोगस्य उभयावच्छिन्नत्वविरहेण मूलावच्छिन्नशरीरसंयोगस्य शरीरे अनवच्छिन्नतया, एवं चरणावच्छिन्नशरीरसंयोगस्य वृक्षे अनवच्छिन्नतया व्याप्यवृत्तित्वेन तत्र तदभावासत्त्वप्रसङ्गात् ।।

तथा च दर्शितसंबन्धसंकोचः आवश्यक इति वृक्षे मूलाद्यवच्छिन्न-विभुसंयोगव्यक्तीनाम् अभेदेऽपि बाधकविरहेण वृक्षे विभुसंयोगाभावावच्छेदकस्य असंभवात् तत्र विभुसंयोगाभावस्य यावद्विशेषाभावान्तर्गतस्याभावेन उक्तानुमाने हेत्वसिद्धिरिति ।।

## गादाधरी

तत्तदवच्छेदकावच्छिन्ननानासंयोगसाधारणं तत्तदवच्छेदकावच्छिन्नत्वमेव तत्तदवच्छेदकजन्यतावच्छेदकम्, न तु संयोगनिष्ठतत्तद्व्यक्तित्वम् । अनन्तकार्य-कारणभावप्रसङ्गात् । तथा च एकावच्छेदकावच्छिन्नसंयोगस्य अपरावच्छेदका-वच्छिन्नत्वेऽपि तदवच्छिन्नत्वविशिष्टस्य नान्यत्रोत्पत्तिरिति न व्यभिचार इत्यपि **वदन्ति** ।।

## व्याख्या

अवच्छेदकतासंबन्धेन अव्याप्यवृत्तिसंयोगं प्रति तत्तदवयवानां तादात्म्यसंबन्धेन कारणत्वे प्रसक्तं व्यतिरेकव्यभिचारं प्रकारान्तरेण वारयतां मतमाह– **तत्तदवच्छेदकेति** । मूलाद्यवच्छिन्ननानासंयोगस्थले मूलावच्छिन्नत्वा-वच्छिन्नं प्रति मूलं कारणम्, अग्रावच्छिन्नत्वावच्छिन्नं प्रति अग्रं कारणमिति रीत्या कार्यकारणभाव एव वक्तव्यः । न तु पूर्वोक्तरीत्या तत्तदवच्छेदकतासंबन्धेन



तत्तत्संयोगत्वावच्छिन्नं प्रति मूलादेः कारणत्वमिति । तथा सति संयोगव्यक्तिभेदेन अनन्तकार्यकारणभावप्रसङ्गात् । तथा च मूलावच्छिन्नसंयोगस्य अग्रावच्छिन्नत्वेऽपि मूलावच्छिन्नत्वविशिष्टस्य अन्यत्रानुत्पत्त्या पूर्वोक्तव्यभिचारशङ्कानवकाशादिति ।।

अत्र मते– पूर्वोक्तरीत्या संबन्धविशेषेणैवोपपत्तौ तत्तदवच्छेदकावच्छिन्नत्वस्य कार्यतावच्छेदककोटौ प्रवेशे गौरवमित्यस्वरसः **वदन्ति** इत्यनेन सूचितः ।।

## गादाधरी

**यत्तु– संयोगमात्रस्य** अव्याप्यवृत्तितासिद्धान्तानुरोधेन मूलाद्यवच्छिन्न-तरुविभुसंयोगादीनां भेदस्वीकार आवश्यकः इति । तदपि न सम्यक् । तादृशसंयोगव्यक्तीनां गगनादौ दिग्विशेषरूपावच्छेदकनियमेनैव तादृशसिद्धान्त-संगतेः ।।

## व्याख्या

**यत्तु संयोगमात्रस्येति** । वृक्षे विद्यमानः अग्रमूलाद्यवच्छिन्नः गगनादिरूप-विभुपदार्थसंयोगः एको वा अवच्छेदकभेदेन भिन्नो वा । आद्यपक्षे यद्येक एव संयोगः अग्रमूलाद्यवच्छेदेन वृक्षे स्यात् तदा गगनादिसंयोगाभावः न स्यात्, प्रतियोगिना संयोगेन साकं विरोधात् । न चेष्टापत्तिः । संयोगसामान्यम् अव्याप्यवृत्ति–स्वात्यन्ताभावसमानाधिकरणमिति सिद्धान्तविरोधात् । अतः सिद्धान्ताविरोधाय वृक्षे विद्यमानः गगनादिसंयोगः अवच्छेदकभेदेन भिन्न इति स्वीकरणीयम् । ततश्च वृक्षे यावत्संयोगविशेषाभावरूपहेत्वसिद्ध्या तत्र संयोगसामान्याभावः साधयितुं न शक्यः इति पूर्वपक्षस्य नेदं समाधानमिति भावः ।।

**यत्तु**कारस्य आशयः – गगनादिसंयोगोऽपि अवच्छेदकभेदेन भिन्नः । अतस्तदभावोऽपि वृक्षेऽस्तीति हेत्वसिद्धिशङ्का या **गदाधरेण अथ** इत्यादिना

कृता सा परिहृता भवतीति । तन्मतं तु पूर्वोक्तरीत्या विकल्प्य खण्डितं **भट्टाचार्यैः** । ततश्च हेत्वसिद्धिशङ्का तथैव वर्तते । तत्समाधानमुपरिग्रन्थे द्रष्टव्यम् ।।

## गादाधरी

**अत्र वदन्ति**– द्रव्यमात्र एव संयोगसामान्यभावस्य अप्रामाणिकतायाः **तन्न** इत्यादिना उक्तेः, **न च** इत्यादिना गगनादेरेव संयोगसामान्याभावसाधकम् अनुमानमाशङ्कितम् । विभुद्वयसंयोगानभ्युपगमेन तत्र यावत्संयोगव्यक्तीनामेव प्रतिनियतदिग्विशेषावच्छिन्नतया तत्तद्व्यक्तित्वेन तत्र तदभावसत्त्वेऽविवादात् नासिद्ध्यवकाशः । विभुमात्रे संयोगसामान्याभावसिद्धावपि संयोगि द्रव्यत्वात् इत्यादौ व्यावृत्तिसंगतेः वृक्षादौ एतद्व्याप्तिबलात् संयोगसामान्याभावासिद्धावपि न क्षतिः ।।

## व्याख्या

पूर्वोक्ताक्षेपे सिद्धान्तमाह– **अत्र वदन्तीत्यादिना** । पूर्वं **दीधितौ** ''यत्तु संयोगि द्रव्यत्वात् इत्यादौ अव्याप्तिवारणाय तत्'' इत्यादिना प्रतियोग्यसमानाधिकरणेति अभावविशेषणस्य परोक्ताव्याप्तिव्यावृत्तिस्थलस्य दूषणं ''द्रव्ये संयोगसामान्याभावे मानाभावात्'' इत्येवोक्तम्, न तु वृक्षादाविति । तदुपरि ''**न च**'' इत्यादिना सामान्यमुखव्याप्तिबलेन गगनादिरूपद्रव्ये एव संयोगसामान्याभावसाधकमनुमानमाशङ्कितम् । तत्र कथम् गगनं संयोगसामान्या-भाववत् संयोगीययावद्विशेषाभावरूपहेत्वभावात् इत्याशङ्कायाम् गगने वर्तमानानां मूर्तद्रव्यसंयोगव्यक्तीनां गगनस्य निरवयवत्वेन अवयवविशेषरूपावच्छेदकाभावेऽपि प्राच्यादिदिग्विशेषरूपावच्छेदकसत्त्वात् तत्तद्दिगवच्छिन्नसंयोगस्य दिगन्तरावच्छेदेन अभावस्य सुलभत्वात् गगने यावत्संयोगाभावरूपहेतोः निर्विवादतया ततस्तत्र संयोगसामान्याभावसाधनसंभवात् । विभुद्वयसंयोगो यदि स्यात् तदा तस्य व्याप्य-



वृत्तितया तदभावस्य कथंचित् अपि गगने असंभवेन तद्घटितयावद्विशेषाभाव-रूपहेतुः गगनेऽपि न स्यात् । स तु नेष्यते इति नासिद्ध्यवकाशः इति समाहितम् । विभुद्रव्यमात्रे संयोगसामान्याभावसिद्धावपि संयोगि द्रव्यत्वात् इत्यादौ व्यावृत्तिसंगतेः वृक्षादावेतद्व्याप्तिबलात् संयोगसामान्याभावस्यासिद्धावपि क्षत्यभावात् इति भावः ।।

## गादाधरी

**प्रतियोग्यनवच्छेदकस्य** तदभावावच्छेदकत्वनियमसत्त्वे वृक्षत्वावच्छेदेन वृक्षादावपि संयोगसामान्याभावसिद्धेः संभवेन तत्रापि तदभावं साधयतां तादृशनियमवादिनां आशङ्कां ''न च प्रतियोग्यनवच्छेदकवृक्षत्वादेरभावा-वच्छेदकत्वम्'' इत्यादिना निराकरिष्यति ।।

पूर्वमपि वृक्षत्वावच्छेदेन संयोगसामान्याभाववृत्तिः अविरोधमात्रेण प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वनियमेन वा सेद्धुमर्हतीत्याशयेन वृक्षादौ संयोगतत्सामान्याभावयोर्वृत्तावच्छेदकभेद उपपादितः, न तु यो यदीयेत्यादिनियमस्य तत्साधकत्वाशयेनेति न संदर्भविरोध इति ।।

## व्याख्या

नन्वेवं गगनादिवृत्तिसंयोगसामान्याभावमादाय अव्याप्तिवारकतया प्रतियोग्यसामनाधिकरण्यविशेषणमित्यभिप्रायः यदि **दीधिति**ग्रन्थस्य स्यात्, तदा उत्तरत्र **दीधितौ** ''प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वम्'' इत्याशङ्क्य परिहारः, तथा पूर्वम् ''संयोगस्य शाखाद्यवच्छेदेन वृत्तेः वृक्षत्वावच्छेदेन सामान्याभाववृत्तौ बाधकाभावात्'' इति वाक्यं च यदि परामृश्यते तदा वृक्ष पव संयोगसामान्याभावसाधनं **दीधित्य**भिमतम्, न तु गगने संयोगसामान्याभाव-

साधनमिति अवगम्यते इति शङ्कायामाह– **प्रतियोग्यनवच्छेदकस्ये**त्यादिना । यो यदभावप्रतियोग्यनवच्छेदकः स तदभावावच्छेदकः इति नियमसत्त्वे वृक्षत्वस्य प्रत्येकं सकलसंयोगातिप्रसक्ततया संयोगानवच्छेदकत्वेन वृक्षत्वावच्छेदेन संयोगसामान्या-भावस्य सिद्धिसंभवेन वृक्षेऽपि संयोगसामान्याभावः साधयितुं शक्यते इति तादृशनियमवादिनां शङ्कां निराकरोति **दीधितौ न चे**त्यादिना । न तु यो यदीययावद्विशेषाभाववान् इत्यादिनियमस्य वृक्षे तादृशाभावसाधकत्वाभि-प्रायेण । पूर्वमपि वृक्षत्वावच्छेदेन संयोगसामान्याभावसिद्धिः संयोगतदभावयोः एकत्र वृक्षे अवच्छेदकभेदेन वृत्तिसंभवात् एकावच्छेदेनैव एकत्र प्रतियोग्यभाव-योर्विरोधेन वृत्त्यसंभवात्, प्रतियोग्यनवच्छेदकस्य अभावावच्छेदकत्वनियमाद्वा वृक्षे संयोगतदभावयोः अवच्छेदकभेदेन सद्भाव उपपादितः, न तु यो यदीयेत्यादि-नियमबलेन संयोगाभावसिद्ध्यभिप्रायेण । तथा च न पूर्वोत्तरसंदर्भविरोधः ।।

अत्रायं संक्षेपः– इदं संयोगि द्रव्यत्वात् इत्यत्र अभावे प्रतियोग्यसमानाधि-करण्यविशेषणस्य अव्याप्तिव्यावृत्तिः प्राचीनानुमता । तत्र अव्याप्तिश्च द्रव्ये संयोगसामान्याभावसत्त्वे एव । ततश्च वृक्षेऽपि यो यदीयेत्यादिनियमबलात् संयोगाभावः संभवति । विभुद्रव्ये गगनादावपि यो यदीयेत्यादिनियमबलात् संयोगसामान्याभावः संभवतीति संभावितसर्वप्रकाराणां दूष्यत्वमित्यभिप्रायेण वृक्षादेः पूर्वोत्तरसंदर्भयोः कथनमिति न काचित् क्षतिरिति ।।

## गादाधरी

**यत्र** यत्किंचिदवयवनाशात् महावृक्षनाशानन्तरं खण्डवृक्षोत्पत्तिः तत्क्षणे पूर्वोत्पन्नक्रियातः अवस्थितयावत्तदवयवैः गगनादिसंयोगानां विनाशः, द्वितीयक्षणे च खण्डवृक्षस्य अपरावयवनाशः तृतीयक्षणे च तन्नाशः तत्र वृक्षे विभुसंयोगानुत्पत्त्या यावद्विशेषाभावसौलभ्यम् ।।



## व्याख्या

एतावता ''यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान्'' इति **दीधितिग्रन्थः** गगने संयोगसामान्याभावसाधकः इत्यङ्गीकृत्य वृक्षे संयोगसामान्या-भावपरपूर्वापर**दीधितिग्रन्थ**विरोधस्य महता श्रमेण परिहार उक्तः ।।

अत्र केचित्– यो यदीयेत्यादिदीधितिग्रन्थोऽपि संयोगसामान्याभावसाधन-परतया योजयन्ति । तन्मतमाह– **यत्रे**त्यादिना । महावृक्षो वर्तते । तस्य प्रथमक्षणे कुठारपाताधीनः तादृशवृक्षावयवस्य कस्यचित् नाशः, तदानीमेव अवस्थितयावदवयवेषु कर्म, ततो द्वितीयक्षणे समवायिकारणनाशाधीनः महावृक्षनाशः अवस्थितावयवगगनविभागश्च, ततः तृतीयक्षणे खण्डवृक्षोत्पत्तिः । तदुत्पादकश्च खण्डवृक्षावयव एव ।।

न चासमवायिकारणस्य वृक्षावयवसंयोगस्य नाशात् कथं खण्डवृक्षोत्पत्तिरिति वाच्यम् । तत्क्षणे तन्नाशाभावात् । तत्क्षणे पूर्वोत्पन्नक्रियातः गगनादिविभागानन्तरम् अवस्थितावयवैः गगनादिसंयोगानां नाशः तदनन्तरक्षणे च खण्डवृक्षस्यापरावय-वनाशः, तृतीयक्षणे च खण्डवृक्षस्यैव नाशः, तत्र वृक्षे विभुसंयोगोत्पत्तिरेव न संभवति । तथा हि– पूर्वोत्पन्नविभुसंयोगो नष्टः, अपूर्वसंयोगश्च खण्डवृक्षोत्पत्ति-द्वितीयक्षणे वाच्यः । स च वृक्षगतक्रियया वाच्यः । वृक्षे च द्वितीयक्षणे क्रियोत्पत्तिद्वारा कतिपयक्षणानन्तरं गगनसंयोगोत्पत्तेः पूर्वमेव तादृशवृक्षस्यैव नाशादिति, तादृशखण्डवृक्षे गगनादिसंयोगाभावघटितयावत्संयोगाभावरूपहेतोः सुलभत्वात् तादृशवृक्ष एव उक्तानुमानबलेन **संयोगाभावसिद्धिपरो** ग्रन्थ इति न पूर्वापरविरोध इति भावः ।।

## गादाधरी

**नचैवं** तादृशवृक्षे मूर्तान्तरेणापि संयोगः तदवयवसंयोगैः तत्तत्कर्मणा वा न संभवति, तदवयवगगनादिसंयोगनाशककर्मणा मूर्तान्तरतनदवयवसंयोगानामपि

तदुत्पत्तिकाले नाशात् अययवावयविनोः संयोगानभ्युपगमेन स्वावयवद्वयसंयोगेन संयोगजननासंभवात्, उत्पत्तिक्षणे च द्रव्ये गुणवत् कर्मसत्त्वानुपपत्तेरिति संयोगसाध्यके द्रव्यत्वस्य सद्धेतुतैव न निर्वहतीति वाच्यम् । तादृशखण्डद्रव्ये तदवयवसंयोगजन्यस्य तत्कर्मजन्यस्य च संयोगस्यासंभवेऽपि सर्वत्रैव सदागतिशील-पवनादिपरमाणूनां कर्मभिः तत्संयोगानामुत्पत्तौ बाधकविरहेण द्रव्यस्य संयुक्तत्वनियमादित्यपि केचिम् ।।

## व्याख्या

**नचैवमिति** । तादृशवृक्षे मूर्तान्तरेणापि समं संयोगो न संभवति । तादृशसंयोगश्च तदवयवसंयोगैः तत्तत्कर्मणा वा वाच्यः । स च न संभवति । तत्तदवयवगगनादिसंयोगनाशककर्मणा मूर्तान्तरतदवयवसंयोगानामपि तादृशखण्ड-वृक्षोत्पत्तिक्षणे नाशात् ।।

न च स्वावयवसंयोगात् तदवयविनि वृक्षे संयोग उत्पद्यतामिति वाच्यम् । अवयवावयविनोः संयोगानभ्युपगमेन तदसंभवात् । उक्तरीत्या संयोगज-संयोगाभावेऽपि तत्र कर्मजसंयोगोऽस्त्विति चेत् – उत्पत्तिकाले गुणवत् कर्मणोऽपि तत्राभावात् इति वृक्षे संयोगस्यैव अभावात् संयोगि द्रव्यत्वात् इत्यस्य तत्र व्यभिचारेण सद्धेतुत्वमेव न संभवतीत्याशङ्कते– **न चैवमि**त्यादिना ।।

अत्र समाधत्ते– **तादृशखण्डद्रव्य** इति । उक्तरीत्या तादृशवृक्षे संयोगासंभवेऽपि सदागतिशीलपवनपरमाणूनां कर्मभिः परमाणूनां संयोगोत्पत्तेः निराबाधत्वेन अदोषात् । द्रव्यस्य सदा संयुक्तत्वनियमात् इति केचित् आहुः इति भावः ।।

एवंविधवृक्षे मानाभाव एवास्वरसः ।।



## दीधितिः

**यत्तदर्थयोः अननुगमात् ।**

## गादाधरी

**यावत्संयोगाभावा एव मानमिति** (पृ. १२४) । **ज्ञायमानलिङ्गस्य** अनुमितिकारणत्व-मताभिप्रायेण । **यत्तदर्थयोरिति** । साध्यहेतुघटकयत्तच्छब्दार्थयोः संयोगत्वघटत्वा-द्योरित्यर्थः । **अनुनुगमादिति** । एकरूपेण निवेशासंभवात् इत्यर्थः । एकव्याप्तेर्निर्वाहयितुमशक्यत्वादिति शेषः ।।

**तथा च** घटत्वाद्यवच्छिन्नाभावघटादिविशेषाभावकूटयोः व्याप्तेः संयोग-सामान्याभावसिद्धावनुपयोगित्वात् यावत्संयोगविशेषाभावे संयोगसामान्याभावीय-विशेषव्याप्तेश्चाग्रे निराकर्तव्यत्वात् नोक्तानुमानसंभव इति भावः ।।

## व्याख्या

**यावत्संयोगाभावा एव मानम्** इति ग्रन्थेन यावत्संयोगाभावेषु प्रतीयमान-मनुमितिकरणत्वमुपपादयति– **ज्ञायमानलिङ्गस्येति** । ज्ञायमानं लिङ्गमनुमितिकरण-मिति मतानुसारेण तथोक्तमिति भावः । लिङ्गज्ञानस्यानुमितिकरणत्वे तदसंगतेः । **यत्तदर्थयोरितीत्यादि** । यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् इति व्याप्तौ साध्यहेतुघटकयत्तच्छब्दार्थयोः बुद्धिस्थसंयोगत्वघटत्वाद्योः भिन्नभिन्नत्वेन एकरूपेण निवेशासंभवात् सर्वसाधारणी एका व्याप्तिः निर्वाहयितुं न शक्येत्यर्थः । एकस्याः व्याप्तेरभावे दोषमाह– **तथा चेति** । यो यदीयेत्यादौ शब्दानुगमेऽपि अर्थस्य अननुगतत्वात् । घटत्वावच्छिन्नाभावघटविशेषाभावयोः संयोगत्वावच्छिन्नाभावसंयोगविशेषाभावकूटयोः व्याप्तिरन्येति घटाभावीयव्याप्तेः प्रकृतसाध्यसाधनानुपयोगितया संयोगविशेषाभावकूटे संयोगसामान्याभाव-

निरूपितव्याप्तिरेव उपयोगिनी । तादृशविशेषव्याप्तिश्च अग्रे निराकरिष्यत इति उक्तानुमानं – संयोगविशेषाभावकूटहेतुना संयोगसामान्याभावानुमानं न संभवतीति भावः ।।

### गादाधरी

**ननु** प्रकृतहेतौ **प्रकृतसाध्यव्याप्तेः अग्रहेऽपि** यथा यो यत्र प्रवर्तते स कार्यतया तत् जानातीत्याकारात् स्तन्यपानादिप्रवृत्तितद्विषयककार्यताज्ञानयोः व्याप्तिग्रहात् गवानयनादिप्रवृत्तिलिङ्गेन गवानयनादिकार्यताज्ञानस्य **सिद्धिः**, तथा प्रकृते संयोगीययावद्विशेषाभावे **तत्सामान्याभावव्याप्तेः** व्यर्थविशेषणत्वादिना अग्रहेऽपि घटादिविशेषाभावकूटे तत्सामान्याभावव्याप्तिग्रहादेव संयोगीययावद्विशेषा-भावे **पक्षधर्मताज्ञानात्** गगनादौ संयोगसामान्याभाव**सिद्धिः** दुर्वारैव । **व्यतिरेकि**हेतुकानुमिताविव सामान्यव्याप्त्यधीन विषयसिद्धौ व्याप्तिविशिष्टपक्ष-धर्मताज्ञानस्य हेतुतानुपगमात् ।।

### व्याख्या

**उत्तरदीधितिग्रन्थम्** अवतारयति– **नन्वित्यादिना** । मणिकारादिभिः सामान्य-मुखव्याप्त्या विशेषसिद्धिरङ्गीक्रियते । तथाहि– वृद्धव्यवहारात् शक्तिग्रहस्थले गामानयेति प्रयोजकवृद्धवाक्यं श्रुतवतः प्रयोज्यवृद्धस्य गवानयनरूपकार्यं दृष्ट्वा बालकस्य व्युत्पित्सोः एवमनुमितिः भवति– प्रयोज्यस्य वृद्धस्य गवानयने प्रवृत्तिः गवानयनं कार्यम् इत्याकारकगवानयनविशेष्यककार्यत्वप्रकारकज्ञानजन्या, यो यत्र प्रवर्तते स कार्यतया तज्जानाति, यथा मम स्तन्यपानादौ प्रवृत्तिः इति स्तन्यपानादिप्रवृत्तितद्विषयककार्यताज्ञानयोः व्याप्त्या प्रकृतहेतौ पक्षधर्मताज्ञानमात्रात् पूर्वोक्तप्रवृत्तित्वरूपलिङ्गेन गवानयनकार्यताज्ञानमनुमाय तदनन्तरं तादृशकार्यता-ज्ञानं गामानयेति वाक्यजन्यं तदन्वयव्यतिरेकानुविधायित्वात् इति क्रमेण गवादिशब्द-



शक्तिं गृह्णाति । अनेन दृष्टान्तेन सामान्यमुखव्याप्तिः आवश्यकीति सिध्यति । तद्वत् प्रकृते संयोगविशेषाभावकूटे संयोगसामान्याभाव निरूपितव्याप्तेः वक्ष्यमाणव्यर्थ-विशेषणत्वादिहेतुना अग्रहेऽपि घटविशेषाभावकूटे घटसामान्याभावनिरूपितव्याप्ति-ज्ञानसहकृतात् संयोगीयविशेषाभावकूटरूपप्रकृतहेतौ पक्षधर्मताज्ञानमात्रात् गगनादौ संयोगसामान्याभावसिद्धिः निष्प्रत्यूहेति शङ्का ।।

**पङ्क्त्यर्थः** - **प्रकृतसाध्यव्याप्तेः** - प्रकृतसाध्यनिरूपितव्याप्तेः **अग्रहेऽपि**-ज्ञानाभावेऽपि । स्तन्यपानादिप्रवृत्तिः हेतुः, स्तन्यपानादिविशेष्यककार्यत्व-प्रकारकज्ञानं साध्यम्, अनयोः व्याप्तिज्ञानात् – व्याप्यव्यापकभावज्ञानात् । प्रवृत्तिः व्याप्या कार्यत्वज्ञानं व्यापकम् । अनेन दृष्टान्तेन गवानयनादौ प्रवृत्तिरूपलिङ्गेन गवानयनं कार्यम् इत्याकारकानुमितिः भवति । **सिद्धिः** – अनुमितिः । **तत्सामान्याभावव्याप्तेः** – संयोगसामान्याभावनिरूपितव्याप्तेः । **पक्षधर्मता-ज्ञानात्** – गगनं संयोगीययावद्विशेषाभाववत् इति ज्ञानात् । **सिद्धिः**– अनुमितिः।।

ननु व्यतिरेकिस्थले - व्यतिरेकिहेतुकानुमितिस्थले धूमहेतुकवह्न्यनुमितिस्थले प्रकृतहेतौ धूमे प्रकृतसाध्यवह्निनिरूपितव्याप्तिज्ञानसहकृतात् धूमो वह्निव्याप्यः इत्याकारकज्ञानसहकृतात् प्रकृतहेतौ धूमे या प्रकृतसाध्यवह्निनिरूपितव्याप्तिः तद्विशिष्टप्रकृतहेतुधर्मिकपक्षताज्ञानमेव वह्निव्याप्यधूमः पर्वतवृत्तिः इत्याकारक-ज्ञानमेव पर्वतो वह्निमान् इत्यनुमितौ कारणम्, न तु अन्यहेतौ व्याप्तिज्ञानविशिष्टात् प्रकृतहेतौ पक्षधर्मताज्ञानमात्रात् इति शङ्कायामाह– **व्यतिरेकीति** ।।

अयं भावः– सर्वत्र अनुमानस्थले नायं नियमः यत् प्रकृतपक्षे प्रकृतसाध्य-व्याप्तिविशिष्टप्रकृतहेतुमत्ताज्ञानमेव कारणमिति । तथा सति पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् इत्यादिव्यतिरेक्यनुमानानुपपत्तेः । तत्र हि यदितरेभ्यो न

भिद्यते न तत् गन्धवत् इति व्यतिरेकव्याप्तिः प्रकृतसाध्याभावहेत्वभावयोः गृह्यते । गन्धवत्त्वरूपप्रकृतहेतौ तु न व्याप्तिः गृह्यते । तत्र गन्धे पक्षधर्मतामात्रं गृह्यते । तावतैव पृथिव्याम् इतरभेदानुमानं सर्वसंमतम् ।।

तद्वत् सामान्यव्याप्त्यधीनविशेषसिद्धौ व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य हेतुत्वं नोपगम्यते । अपि तु प्रकृतहेतुतुल्यहेतौ प्रकृतसाध्यतुल्यसाध्यव्याप्तिज्ञानसहकृतात् प्रकृतहैतौ पक्षधर्मताज्ञानमात्रात् प्रकृतसाध्यानुमानम् इष्यते । अतिप्रसङ्गवारणं तु व्याप्तिग्रहविषयहेतुसाध्ययोः प्रकृतहेतुसाध्यतुल्यत्वस्य नियामकत्वाङ्गीकारेण भवति । यथा वह्न्याद्यनुमानस्थलेऽपि प्रकृतहेतौ पर्वतीयधूमे पर्वतीयवह्निरूप-प्रकृतसाध्यव्याप्त्यग्रहेऽपि महानसीयवह्निधूमाद्योः व्याप्तिग्रहः कारणं, तथा अत्रापि ।।

ननु तत्र सामान्यलक्षणाप्रत्यासत्त्या पर्वतीयवह्निधूमयोरपि व्याप्तिः गृहीतैवेति चेत्– प्रकृतसाध्यहेत्वोः विशेषरूपेण व्याप्तिग्रहाभावेऽपि सामान्यरूपेण तद्ग्रहादेव हि अनुमितिः अनुभवबलादुपेयते । तथा अनुभवानुसारेण प्रकृतस्थलेऽपि प्रकृतहेतु-साध्यवृत्तिधर्मावच्छिन्नयोः अन्ययोः व्याप्तिग्रहेणापि अनुमानं संभवतीति कुतो न संभवति । सर्वत्रानुभवानुसारेण खलु हेतुकल्पनम् । अर्थानुगमाभावेऽपि शब्दानुगमो वा अस्तीति ।।

## गादाधरी

**न च विशेषाभावान्तरे सामान्याभावान्तरव्याप्तिग्रहात्** संयोग विशेषाभावेन सामान्याभावसिद्ध्युपगमे यावत्त्वाद्यविशेषितकपिसंयोगप्रतियोगिकाभावे कपिसंयोगादि सामान्याभावदिव्याप्तिग्रहादेव संयोगादिप्रतियोगिकाभावेन तत्सामान्या-भावसिद्धिसंभवात् यावत्त्वादिविशेषणमनर्थकम् । **प्रकृतहेतुतुल्य**निखिलहेत्वन्तरेषु (तत्प्रविष्टतत्तत्पदार्थघटित) प्रकृतसाध्यतुल्यसाध्यव्याप्तिग्रहापेक्षायाः स्वीकर्तु-



मशक्यत्वात् तादृशसकलहेतुसाध्यानां युगसहस्रेणापि असर्वज्ञैर्ज्ञातुमशक्यत्वात् इति वाच्यम् ।।

## व्याख्या

अत्र दोषं शङ्कते– **न चेति** । **विशेषाभावान्तरे** – अन्यस्मिन् विशेषाभावे प्रकृतहेतुभिन्ने विशेषाभावे इति यावत् । **सामान्याभावान्तरव्याप्तिग्रहात्** – प्रकृतसाध्यभिन्नो यः सामान्याभावः तन्निरूपितव्याप्तिग्रहात् । अयं भावः - घटविशेषाभावकूटे घटसामान्याभावनिरूपितव्याप्तिग्रहात् संयोगविशेषाभावेन संयोगसामान्याभावसिद्ध्युपगमे यावत्त्वाविशेषितकपिसंयोगप्रतियोगिकाभावे कपिसंयोगसामान्याभावनिरूपितव्याप्तिग्रहादेव संयोगप्रतियोगिकाभावेन संयोग-सामान्याभावसिद्धिसंभवात् यावत्त्वादिविशेषणं व्यर्थम् । यत्किंचित्कपिसंयोगा-भावस्यापि केवलान्वयित्वेन कपिसंयोगसामान्याभावव्याप्यत्वेन व्यभिचारानवका-शादिति भावः ।।

ननु सामान्यमुखव्याप्तिस्थले प्रकृतहेतुसजातीयानि यावन्ति हेतुसाध्यानि तेषु सर्वेषु व्याप्तिग्रहोऽपेक्षितः । तथा सति हेतौ यावत्त्वविशेषणानुपादाने प्रकृतहेतुसजातीययत्किंचिद्घटाभावे घटसामान्याभावव्याप्यत्वासंभवेन तत्र व्यभिचारवारणाय यावत्त्वविशेषणं सार्थकम् । तथा च कपिसंयोगविशेषाभावे यावत्त्वविशेषणस्य वैयर्थ्येऽपि यत्तत्यदार्थत्वेन सामान्यरूपेण घटत्वादिघटितव्याप्तौ क्वचित् आवश्यकत्वात् तादृशविशेषणसार्थक्यं भवतीति शङ्कायामाह– **प्रकृतहेतुतुल्येति** । प्रकृतहेतुतुल्ययावद्धेतुषु प्रकृतसाध्यतुल्ययावत्साध्यव्याप्तिग्रहः अपेक्षितुमेवाशक्यः । तादृशसकलहेतुसाध्यानामनन्ततया असर्वज्ञानां तद्विषयक-ज्ञानासंभवात् । किं तु यथासंभवं प्रकृतहेतुतुल्यकतिपयहेतुषु प्रकृतसाध्यतुल्य-कतिपयसाध्यव्याप्तिज्ञानापेक्षैव वक्तव्या । तत्र कपिसंयोगादिकतिपयविशेषाभावे

तत्सामान्याभावव्याप्तिग्रहेणापि प्रकृतसाध्यानुमानसंभवात् तत्र च यावत्त्वविशेषणस्य व्यर्थत्वादिति शङ्कितुराशयः ।।

## गादाधरी

**उपस्थित**यावत्तादृशहेतुषु तादृशतत्तत्साध्यव्याप्तिग्रहापेक्षया साम-अस्यात् । तावन्मात्रापेक्षायाश्च तत्तत्साधनधर्मिकतत्तत्साध्यव्याप्तिग्रहाभावविशिष्ट-तत्तत्साध्यसाधनोपस्थितेरनुमितिप्रतिबन्धकतया सूपपादत्वात् ।।

## व्याख्या

पूर्वोक्तशङ्कायाः समाधानमाह– **उपस्थितेति** । अनुमित्यव्यवहितप्राक्काले यावतां साध्यानां हेतूनां चोपस्थितिः तावतां व्याप्तिज्ञानमपेक्षितम् इत्यङ्गीकारात् नोक्तदोष इति भावः । तावन्मात्रमपेक्षितमिति कथं नियन्तुं शक्यते इति चेत्– अनुमित्यव्यवहितप्राक्कालोपस्थितयावत्कूटव्याप्तिज्ञानं कारणम् इत्युक्तावपि कदाचित् कूटत्रयं कूटद्वयमुपस्थितम् इति रीत्या अननुगततया त्रयोपस्थितिदशायां त्रयव्याप्तिज्ञानं द्वयोपस्थितिदशायां द्वयव्याप्तिज्ञानं कारणमित्यननुगमात् । तस्मात् फलीभूतानुमित्यव्यवहितप्राक्कालोपस्थिततत्तत्साधनधर्मिक तत्तत्साध्यव्याप्ति-ज्ञानस्यैव कारणत्वमिति नाननुगम इति भावः । यदा तु व्याप्तिग्रहं विना तत्तत्साध्यसाधनोपस्थितिमात्रं वर्तते तदा नानुमितिः, तत्तत्साधनधर्मिक-तत्तत्साध्यव्याप्तिग्रहाभावविशिष्टतत्तत्साध्यसाधनोपस्थितेरनुमितिप्रतिबन्धकत्वाङ्गी-कारान्नानुपपत्तिः कापीत्याशयः ।।

एतावता यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् इति सामान्य-मुखव्याप्तिमवलम्ब्य गगने संयोगसामान्याभावः सिध्यतीति **''न च यो यदीय''** इत्यादि ग्रन्थेन आशङ्क्य, तत्र दोषत्रयमुक्तं **दीधितिकारेण** यत्तदर्थयोः अननुगमात्, व्यर्थविशेषणत्वात् एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्चेति । तेषु यत्तदर्थयोरननुगमः इति दोषं परिहर्तुं **भट्टाचार्यैः ''ननु प्रकृतहेतौ''** इत्यादिग्रन्थः प्रवर्तितः । तत्र **यो यत्र प्रवर्तत** इत्यादिग्रन्थेन सामान्यमुखव्याप्तिः प्रदर्शिता । तत्र प्रकृतसाध्यसाधनतुल्यसाध्यसाधनव्याप्तेरनुपयोगित्वस्योद्धारेऽपि ''अयं संयोगाभाववान् यावद्विशेषाभावात्'' इत्यनुमाने हेतौ यावत् इति विशेषेति च पदद्वयं व्यर्थम् । संयोगसामान्याभावस्य केवलान्वयितया अभावस्यैव केवलान्वयिनो व्याप्यत्वसंभवात्– इति व्यर्थविशेषणत्वदोषः दुर्वारः । तत्र च लिङ्गे यावत्त्व-विशेषणसार्थक्यं विशेषव्याप्तिरेव च सामान्यमुखव्याप्तिकार्यसाधिका चेति निरूपणे सति– अननुगमः, व्यर्थविशेषणत्वं च परिहृतं भवति । एकावच्छेदेन तदीयया-वद्विशेषाभाववत्त्वस्य उपाधित्वमिति तृतीयो दोषः अपरिहृतस्तिष्ठति ।।



## गादाधरी

एवं सति यावत्त्वविशेषणानुपादाने जात्यादिविशेषघटत्वाद्यभावे जात्यादि-सामान्याभावव्यभिचारोपस्थितिदशायां संयोगादिसामान्याभावसाधनासंभवेन तादृशविशेषणसार्थक्यात् ।।

## व्याख्या

तत्र व्यर्थविशेषणत्वपरिहार एवम्– यो यदीययावद्विशेषाभाववान् स तत्सा-मान्याभाववान् इति व्याप्तौ यावत्पदानुपादाने यः यदीयाभाववान् – यत्प्रतियोगिका-भाववान् स तत्सामान्याभाववान् इति व्याप्तिः स्यात् । तथा सति घटत्वरूपजाति-प्रतियोगिकाभाववति पटादौ जातिसामान्याभावविरहात् व्यभिचारः स्यात् । अत एव संयोगविशेषाभावैः संयोग सामान्याभावोऽपि साधयितुं न शक्य इति शङ्का च स्यात् । तद्वारणाय यावत्पदसार्थक्यम् ।।

## दीधितिः

**एकावच्छेदेन** यावद्विशेषाभाववत्त्वस्य उपाधित्वाच्च ।।

## गादाधरी

**गगनाद्यवृत्ति**स्वसमानाधिकरणनिरुक्तधर्मावच्छिन्नप्रतियोगिताकयत्किंचिदभावकं यद्यत् स्वं तदन्यो यो धर्मः सः तन्निष्ठाभावप्रतियोगितावच्छेदकः इत्येतादृशोक्तसामान्यव्याप्तिस्थलाभिषिक्तव्याप्त्यैव वा संयोगत्वादौ गगनादिनिष्ठाभावप्रतियोगितावच्छेदकत्वं साधनीयम् । **तत्र च** नाननुगमो दोष इत्याशयेन उक्तानुमाने उपाधिमाह– **एकावच्छेदेनेति** ।।

## व्याख्या

विशेषव्याप्तिरेव सामान्यव्याप्तिकार्यसाधिकेत्याशयेनाह– **गगनाद्यवृत्तीत्यादिना** । अत्रायमनुमानप्रयोगः– संयोगत्वं गगननिष्ठात्यन्ताभावप्रतियोगितावच्छेदकम्, गगनाद्यवृत्तिस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावकम् यद्यत्स्वं तत्तदन्यत्वात्, रूपत्वादिवत् इति । अत्र स्वम् परिमाणत्वजातित्वादि । गगने परममहत्त्वस्य परिमाणस्य द्रव्यत्वजातेश्च सत्त्वात् । परिमाणत्वसमानाधिकरणः उभयावृत्तिधर्मः गगनपरिमाणत्वम्, एवं जातित्वसमानाधिकरणः उभयावृत्तिधर्मः द्रव्यत्वत्वम् तदवच्छिन्नप्रतियोगिताकाभावः गगनाद्यवृत्तिः । गगने परममहत्त्वाभावस्य द्रव्यत्वाभावस्य चासत्त्वात् । संयोगत्वं तु न स्वपदग्राह्यम्, तत्समानाधिकरणोभयावृत्तिधर्मभूततत्तत्संयोगत्वावच्छिन्नाभावस्य गगनवृत्तित्वात् इति संयोगत्वे स्वपदग्राह्यपरिमाणत्वादिभिन्नत्वरूपहेतुसत्त्वात् गगननिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वसिद्धिः । तेन च अर्थात् गगने संयोगसामान्याभावसिद्धिः । गगने संयोगसामान्याभावसत्त्वे हि संयोगत्वं गगननिष्ठात्यन्ताभावप्रतियोगितावच्छेदकं भवेत् ।।



दृष्टान्ते रूपत्वे हेतुसाध्ययोः समन्वयः इत्थम् । स्वं रूपत्वं तत्समानाधिकरणः रूपत्वाधिकरणनीलरूपादिवृत्तिः उभयावृत्तिधर्मः नीलरूपत्वादि तदवच्छिन्नप्रतियोगिताकाभावस्य गगनवृत्तितया गगनावृत्तितादृशाभावकान्यत्वरूपहेतुः गगननिष्ठाभावप्रतियोगितावच्छेदकत्वरूपं साध्यं चास्ति इति उक्तानुमानं संभवति ।।

अत्र हेतौ यद्यत् इति वीप्सायाः अनुपादाने स्वपदेन सत्त्वद्रव्यत्वान्यतरत्वसत्तात्वादिकं गृहीत्वा तदधिकरणसत्ताद्रव्यत्ववृत्तिः यः उभयावृत्तिधर्मः सत्तात्वं द्रव्यत्वत्वं च तदवच्छिन्नप्रतियोगिताकाभावकं यत् रूपत्त्वद्रव्यत्वान्यतरत्वं सत्तात्वं च तदन्यत् परिमाणत्वम्, तत्र गगननिष्ठाभावप्रतियोगितावच्छेदकत्वरूपं साध्यं नास्ति, पूर्वोक्ततदन्यत्वरूपहेतुः अस्ति इति व्यभिचारः स्यात् । तद्वारणाय यद्यत् इति वीप्सायाः निवेशः । तन्निवेशे च यद्यत् इति कूटे परिमाणत्वस्यापि पूर्वोक्तरीत्या ग्रहीतुं शक्यतया तद्भिन्नत्वरूपहेतुरपि परिमाणत्वे नास्तीति न व्यभिचारः ।।

हेतुघटकधर्मे उभयावृत्तित्वानिवेशे स्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकं यत् स्वं तदन्यत्वं हेतुः स्यात् । तथा सति स्वपदेन संयोगत्वग्रहणे तत्समानाधिकरणसंयोगत्वावच्छिन्नाभावः गगने केनाप्यवच्छेदेन न संभवति । गगनस्य विभुत्वात् विभुत्वस्य सर्वमूर्तद्रव्यसंयोगित्वरूपतया मूर्तसंयोगाभावस्य असंभवात् तादृशाभावः गगने संदिग्ध इति तदभावकं यत्स्वं तदन्यत्वमपि संदिग्धमिति गगनावृत्तित्वमपि संदिग्धम् इति तद्घटितहेतोरपि संदिग्धत्वात् संदिग्धासिद्धिरूपो दोषः स्यात् । धर्मे उभयावृत्तित्वनिवेशे तु संयोगत्वावच्छिन्नाभावः न ग्रहीतुं शक्यते, संयोगत्वस्य उभयवृत्तित्वात् । अपि तु तत्तत्संयोगाभावः एव ग्राह्यः स तु गगने निश्चित इति तद्घटितहेतोरपि निश्चितत्वात् न संदिग्धासिद्धिरिति भावः ।।

यत्किंचित्त्वानिवेशे निरुक्तस्वपदार्थाप्रसिद्धिः । तथाहि– सामान्यतः गगनाद्यवृत्तिस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकं यद्यत् स्वं तदन्यत्वं हेतुः इत्युक्ते सति परिमाणत्वसमानाधिकरणोभयावृत्तिघटपरिमाणत्वावच्छिन्नाभावस्य गगनवृत्तितया तस्य परिमाणत्वस्य स्वपदेन ग्रहीतुमशक्यत्वात् । यत्किंचित्त्वनिवेशे तु यत्किंचित्पदेन विवक्षितव्यक्तिविशेषस्यैव ग्राह्यतया परिमाणत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव इत्यनेन गगनपरिमाणाभावः ग्राह्यः, स च गगनावृत्तिरिति परिमाणत्वस्य स्वपदार्थत्वसंभवात् न निरुक्तस्वपदार्थाप्रसिद्धिः ।।

यद्यप्यत्र यो यो धर्मः स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयत्किंचिदभावकान्यः स स तन्निष्ठाभावप्रतियोगितावच्छेदकः इति सामान्यव्याप्तिरपि संभवति, तथापि तत्र **दीधितिकारोक्त**लिङ्गविशेषणवैयर्थ्यं भवतीति सामान्यमुखव्याप्तिरेवाश्रिता । अत्र तु लिङ्गविशेषणवैयर्थ्याभावः । विशेषव्याप्तिरपि सामान्यमुखव्याप्तिकार्यकारिणीति सामान्यव्याप्तिस्थानाभिषिक्ता ।।

कल्पद्वये पूर्वोक्तदोषं वारयति– **तत्र चेति** । प्रथमकल्पे प्रकृतहेतुतुल्यहेतुषु व्याप्तिग्रहस्य अपेक्षितत्वे तेषां सर्वथा प्रकृते हेतुभिः अनुगमासंभवात् अननुगमो न दोषः । द्वितीयकल्पे च अनुगम एवेति ।।

## गादाधरी

**अनवच्छिन्नतदीय**यावद्विशेषाभावाधिकरणत्त्वस्योपाधित्वात् इत्यर्थः । यथाश्रुते गुणादिनिष्ठायाः यावत्संयोगाभावाधिकरणतायाः व्याप्यवृत्तितया अवच्छेदकविरहेण उपाधेः साध्यव्यापकत्वानिर्वाहात् ।।

**न च गुणादिनिष्ठायाः** यावत्संयोगाभावाधिकरणतायाः व्याप्यवृत्तित्वेऽपि गुणत्वाद्यवच्छिन्नत्वमावश्यकम् । अन्यथा अधिकरणतावच्छेदकप्रकारकज्ञानासंभवेन



गुणादौ तदभावग्रहासंभवादिति वाच्यम् । **द्रव्यनिष्ठ**यावत्संयोगाभावाधिकरणतायाः अपि द्रव्यत्वादिरूपैकावच्छेदकावच्छिन्नतया उपाधेः साधनाव्यापकतानिर्वाहाय सप्तमीनिर्देश्यं यत् अव्याप्यवृत्तितानिर्वाहकं विलक्षणमवच्छेद्यत्वं तस्यैव विवक्षणीयतया गुणादिनिष्ठसंयोगाद्यभावाधिकरणतायां तादृशावच्छेद्यत्वविरहेण साध्यव्यापकतायाः यथाश्रुते दुरुपपादत्वात् ।।

## व्याख्या

वृक्षः संयोगसामान्याभाववान् संयोगीययावद्विशेषाभाववत्त्वात् इत्यनुमानेन वृक्षे संयोगसामान्याभावः सिध्यति । तत्र च यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् यथा गुणादिः इति व्याप्तिः प्रदर्शिता **दीधितौ** पूर्वम् । तत्रानुमाने एकावच्छेदेन संयोगीययावद्विशेषाभाववत्त्वमुपाधिरिति **दीधितौ** उक्तम् । तत्रेयमाशङ्का अवतरति । एतादृशसामान्यव्याप्तेः उदाहरणं गुणादिकमेव । तत्रैव गुणे गुणानङ्गीकारेण संयोगीययावद्विशेषाभावः संयोगसामान्याभावश्च भवितुमर्हति । उपाधेः साध्यव्यापकत्वं गुणान्तर्भावेण वक्तव्यम् । गुणे हि संयोगसामान्याभावरूपं साध्यं वर्तते, संयोगीययावद्विशेषाभाववत्त्वं च वर्तते । परं तु गुणे वर्तमानानां संयोगविशेषभावानां व्याप्यवृत्तितया अनवच्छिन्नवृत्तिकत्वात् गुणनिष्ठा संयोगविशेषाभावाधिकरणता अनवच्छिन्ना, न तु एकावच्छेदकावच्छिन्नेति उपाधेः कथं साध्यव्यापकत्वम् इति शङ्का ।।

तत्र समाधानमाह– **अनवच्छिन्नतदीयेति** । एकावच्छेदकावच्छिन्नेत्यस्य अनवच्छिन्नेत्यर्थः । तथा च अनवच्छिन्नसंयोगीययावद्विशेषाभावाधिकरणत्वमुपाधिः । गुणनिष्ठायां संयोगविशेषाभावाधिकरणतायामनवच्छिन्नत्वमस्तीति उपाधेः साध्यव्यापकत्वनिर्वाह इति भावः ।।

अत्र काचन शङ्का । **दीधितिस्थात्** एकावच्छेदेनेति पदात् अनवच्छिन्नेत्यर्थः कथं लभ्यते इति । तात्पर्यतो लभ्यते इति केचिदाहुः । **पितृचरणास्तु** सावधारणेन एकावच्छेदेन इति पदेन अनेकावच्छेद्यत्वाभावलाभात् तत्र च अनेकेत्यंशं विहाय अवच्छेद्यत्वाभावमात्रग्रहणेन उक्तार्थलाभ इति प्राहुः ।।

**न च गुणादिनिष्ठाया** इति । गुणादिनिष्ठायाः यावत्संयोगाभावाधिकरणतायाः व्याप्यवृत्तित्वेऽपि गुणत्वावच्छिन्नत्वमावश्यकम् । अन्यथा अभावबुद्धौ अधिकरणतावच्छेदकप्रकारकज्ञानस्य कारणतया गुणादौ संयोगाभावप्रकारकधीरेव न स्यात् । ततश्च एकावच्छेदेनेत्यस्य एकावच्छेदकावच्छिन्नेति यथाश्रुतार्थेऽपि गुणत्वरूपैकावच्छेदकावच्छिन्नत्वं गुणनिष्ठायां यावत्संयोगाभावाधिकरणतायामस्तीति अनवच्छिन्नेत्यर्थकथनमनावश्यकमिति शङ्कितुराशयः ।।

समाधत्ते– **द्रव्यनिष्ठेति** । अधिकरणतावच्छेदकं धर्मं पुरस्कृत्य यदि एकावच्छिन्नत्वमुपपाद्यते तदा उपाधेः साधनाव्यापकत्वं न स्यात् । साधनाधिकरणे द्रव्ये विद्यमानायाः यावत्संयोगाभावाधिकरणतायाः द्रव्यत्वावच्छिन्नत्वेन एकावच्छिन्नसंयोगविशेषाभावाधिकरणतायाः पक्षवृत्तित्वेन उपाधित्वं न स्यात्, पक्षावृत्तिधर्मस्यैव उपाधित्वात् । तस्मात् अग्रे वृक्षः कपिसंयोगीत्यादिसप्तमीनिर्देश्यं यत् अव्याप्यवृत्तिसाधकं विलक्षणमवच्छेदकत्वं अवच्छेद्यत्वं वा तदेव विवक्षणीयमिति गुणादिनिष्ठायां संयोगाभावाधिकरणतायां तादृशावच्छेदकतानिरूपकत्वविरहेण यथाश्रुतार्थे अनुपपत्तिरस्तीति अनवच्छिन्नार्थकतया एकावच्छेदेनेति पदं व्याख्यातमिति भावः ।।

## गादाधरी

अथैवं कपिसंयोगसामान्यस्य मूलाद्यवच्छेदेन अभाववति कपिसंयोगादिमद्वृक्षादौ अनवच्छिन्नतदीययावद्विशेषाभाववत्त्वविरहेण **साध्योपाध्योर्न सामान्यव्याप्तिनिर्वाहः** ।।



## व्याख्या

वृक्षः कपिसंयोगसामान्याभाववान् कपिसंयोगीययावद्विशेषाभाववत्त्वात् गुणादिवत् इति प्रयोगः यस्मिन् वृक्षे मूलावच्छेदेन एकोऽपि कपिसंयोगो नास्ति, अर्थात् कपिसंयोगसामान्याभावो वर्तते, अग्रावच्छेदेन च कपिसंयोगो वर्तते, तत्र वृक्षनिष्ठं कपिसंयोगीययावद्विशेषाभाववत्त्वं मूलावच्छिन्नम् । इदं मनसि क्रियताम् । **दीधितिकारेण** यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् इति व्याप्तौ अनवच्छिन्नयावद्विशेषाभावाधिकरणत्वमुपाधिरित्युक्तम् । उपाधेः साध्यव्यापकत्वमावश्यकम्, पक्षान्तर्भावेण साधनाव्यापकत्वं चावश्यकम् । साध्यशब्देन व्यापकं, साधनपदेन व्याप्यं च ग्राह्यम् । प्रकृते कपिसंयोगसामान्याभावः व्यापकः । कपिसंयोगीययावद्विशेषाभावः व्याप्यः । अनवच्छिन्नयावद्विशेषाभाववत्त्वमुपाधिः । तस्य च कपिसंयोगसामान्याभावव्यापकत्वं नास्ति । वृक्षे मूलावच्छेदेन कपिसंयोगसामान्याभावः वर्तते । अनवच्छिन्नकपिसंयोगसामान्याभावाधिकरणत्वं तु नास्ति । कपिसंयोगसामान्याभावाधिकरणतायाः वृक्षनिष्ठायाः मूलावच्छिन्नत्वात् इति शङ्कितुराशयः । **साध्योपाध्योर्न सामान्यव्याप्तिनिर्वाह इति** । उपाधौ साध्यव्यापकत्वं नास्ति, अत एव साध्ये उपाधिव्याप्यत्वं च नास्ति इति भावः । अत्र साध्यपदेन सामान्यव्याप्तौ यत् व्यापकं तत् ग्राह्यम् ।।

## गादाधरी

**अत्र केचित्** – अवच्छिन्नत्वैकावच्छेदकानवच्छिन्नत्वोभयाभाववद्यावद्विशेषाभाववत्त्वमिहोपाधित्वेनाभिमतम् । गुणे यावद्विशेषाभाववत्त्वमवच्छिन्नत्वाभावेनोभयाभाववत्, कपिसंयोगवति वृक्षे कपिसंयोगीययावद्विशेषाभाववत्त्वं मूलाद्येकावच्छेदकावच्छिन्नमिति तदनवच्छिन्नत्वाभावात् उभयाभाववत् इति नोक्तोपाधिसाध्ययोः सामान्यव्याप्तिभङ्गः ।।

### व्याख्या

अत्र केषांचित् समाधानमाह– **अत्र केचिदि**त्यादिना । ''एकावच्छेदेन तदीययावद्विशेषाभाववत्त्वस्योपाधित्वात्'' इति **दीधितिग्रन्थेन** अवच्छिन्नत्व–एकावच्छेदकानवच्छिन्नत्वोभयाभाववद्यावद्विशेषाभावधिकरणत्वस्योपाधित्वमभिप्रेतम् । गुणादिनिष्ठयावत्संयोगाभाववत्त्वरूपप्रकृतोपाधेः गुणादौ व्याप्यवृत्तितया अवच्छिन्नत्वविरहेण उक्तोभयाभाववत्त्वमक्षतम् । वृक्षनिष्ठकपिसंयोगविशेषाभावकूटाधिकरणतायाः मूलरूपैकावच्छेदकावच्छिन्नतया तदनवच्छिन्नत्वाभावप्रयुक्तमुभयाभाववत्त्वमिति नोक्तोपाधिसाध्ययोः सामान्यव्याप्तिभङ्गः इति भावः ।।

### गादाधरी

**अथ** वृक्षादिनिष्ठानां यावत्कपिसंयोगविशेषाभावाधिकरणतानां नैकावच्छेदकावच्छिन्नत्वं संभवति । वृक्षावृत्तियावत्कपिसंयोगव्यक्तीनां येऽभावाः तेषां वृक्षे व्याप्यवृत्तितया तन्निष्ठतदधिकरणतानामनवच्छिन्नत्वात् ।।

### व्याख्या

पुनरप्यनुपपत्तिं शङ्कते– **अथेत्यादिना** । वृक्षे तावत् अग्रे कपिसंयोगसत्त्वेऽपि मूलावच्छेदेन वर्तमानाः ये कपिसंयोगाभावाः तेषु वृक्ष एवाग्रे स्थितस्य कपिसंयोगस्य अभावः तथा वृक्षावृत्तयो गोपुरादिवृत्तयो ये कपिसंयोगाः तेषामप्यभावाः वृक्षे सन्ति । तत्र वृक्षवृत्तिकपिसंयोगस्याभावः अव्याप्यवृत्तिः । गोपुरादिवृत्तिकपिसंयोगानामभावाः व्याप्यवृत्तयः । तथा च तद्घटितसमुदाये एकावच्छेदकावच्छिन्नत्वं नास्तीति एकावच्छेदकानवच्छिन्नत्वमस्ति । वृक्षवृत्ति-कपिसंयोगाभावाधिकरणतायाः अवच्छिन्नत्वमस्ति । एवं च वृक्षवृत्तिकपिसंयोगाभावाधिकरणतायाम् अवच्छिन्नत्व एकावच्छेदकानवच्छिन्नत्वोभयाभावाभावात् साध्योपाध्योः सामान्यव्याप्तिः न संभवतीति भावः ।।



### गादाधरी

**न च** व्याप्यवृत्त्यधिकरणातानाम् अनवच्छिन्नतया अन्यासां च एकावच्छेदकावच्छिन्नतया सर्वास्वेव तासु उभयाभावोऽक्षत इति वाच्यम् ।।

**एवं सति पक्ष** (गगन) **निष्ठ**संयोगव्यक्तीनां दिग्देशविशेषाद्यवच्छिन्नानां यावन्तोऽभावाः पक्षनिष्ठतावन्निरूपिताधिकरणतानां सर्वासामेकावच्छेदकविरहेऽपि द्वित्रादीनाम् अवच्छेदकैक्यसंभवेन सर्वास्वेव तासु तादृशतादृशावच्छेदकमादाय एकावच्छेदकावच्छिन्नत्वं संभवतीति उभयाभावसत्त्वात् तदवृत्तिसंयोगव्यक्तीनां येऽभावाः तेषां तन्निष्ठाधिकरणतानामुभयानवच्छिन्नतया उभयाभावसत्त्वात् उक्तोपाधेः यावत्संयोगाभावरूपसाधनव्यापकतापत्तेः ।।

### व्याख्या

ननु पूर्वोक्तस्थले यावद्विशेषाभावाधिकरणताः काश्चित् व्याप्यवृत्त्यभावाधिकरणताः, काश्चिच्च अव्याप्यवृत्त्यभावाधिकरणताः । तथा च व्याप्यवृत्त्यधिकरणतानाम् अवच्छिन्नत्वाभावात् तत्प्रयुक्तोभयाभावाधिकरणत्वम् । अव्याप्यवृत्त्यभावाधिकरणतानामेकावच्छेदकावच्छिन्नत्वेन तदनवच्छिन्नत्वाभावप्रयुक्तोभयाभावसौलभ्यम् इति सर्वास्वेवाधिकरणतासु उभयाभावोऽक्षत इति शङ्कते– **न चेति** । समाधत्ते – **एवं सतीत्यादिना** । **पक्षनिष्ठेति** । गगनादिनिष्ठेत्यर्थः । गगनादौ विद्यमानानां तत्तन्मूर्तवस्तुसंयोगानां प्रतीच्यादिदिगन्तरावच्छेदेन येऽभावाः तावन्निरूपिताधिकरणतानां सर्वासां भिन्नभिन्नावच्छेदकावच्छिन्नत्वेन एकावच्छेदकावच्छिन्नत्वविरहेऽपि तदन्तर्गतद्वित्राद्यधिकरणतानाम् एकावच्छेदकावच्छिन्नत्वसंभवेन तदनवच्छिन्नत्वाभावप्रयुक्तोभयाभावसत्त्वेन प्रकृतोपाधौ प्रकृतसाधनव्यापकत्वस्यैव सत्त्वेन तदव्यापकत्वं भज्येत । गगनाद्यवृत्तिसंयोगानां येऽभावाः गगननिष्ठाः तदधिकरणतानां गगने व्याप्यवृत्तितया अवच्छिन्नत्व-

विरहेण उभयाभाववत्त्वम् इति प्रकृतोपाधेः प्रकृतसाधनव्यापकत्वात् उपाधित्वं न स्यादिति भावः ।।

### गादाधरी

**स्वसमानाधिकरण**यावत्तदभावाधिकरणतावच्छेदकावच्छिन्नत्वस्य उभयाभावघटकैकावच्छेदकावच्छिन्नत्वरूपत्वे च वृक्षादिनिष्ठमूलाद्यवच्छिन्नकपिसंयोगाद्यभावाधिकरणतास्वपि न तथात्वसंभवः । तत्समानाधिकरणव्याप्यवृत्तिकपिसंयोगाद्यभावाधिकरणतानामपि तादृशयावदधिकरणतान्तर्गतत्वात् तदवच्छेदकस्य चाप्रसिद्धत्वादिति चेत्–

### व्याख्या

नन्वत्र उभयाभावघटकैकावच्छेदकावच्छिन्नत्वं स्वसमानाधिकरणाः यावद्विशेषाभावाधिकरणताः तदवच्छेदकावच्छिन्नत्वरूपं विवक्षितम् । एवं च गगनादिनिष्ठसंयोगविशेषाभावाधिकरणतायाः कस्याश्चित् स्वपदेन उपादाने तत्समानाधिकरणयावदभावाधिकरणताः व्याप्यवृत्त्यभावाधिकरणता अपीति तद्घटितसमुदायावच्छेदकाप्रसिद्ध्या निरुक्तोभयाभावघटितोपाधेः गगनादावभावेन साधनाव्यापकत्वं स्यादिति शङ्कां निरस्यति– **स्वसमानाधिकरणेति** । एवं सति वृक्षादिनिष्ठकपिसंयोगाभावाद्यधिकरणतानामपि निरुक्तोभयाभाववत्त्वं न संभवति । तत्समानाधिकरणव्याप्यवृत्तिकपिसंयोगाभावाधिकरणतानामपि उक्तयावदधिकरणतान्तर्गततया तासामवच्छेदकाभावेन तद्घटितयावदधिकरणतावच्छेदकाप्रसिद्ध्या स्वपदेन तदुपादानासंभवेन प्रकृतोपाधितुल्योपाधौ प्रकृतसाध्यतुल्यसाध्यव्याप्तेः दुरुपपादत्वात् ।।

### गादाधरी

**न । एकावच्छेदका**वच्छिन्नत्वस्य स्वसमानाधिकरणकिंचिदवच्छिन्नयावत्तदभावाधिकरणतावच्छेदकावच्छिन्नत्वरूपस्य विवक्षितत्वेन अनवच्छिन्नाधिकरणताभिः



सह अवच्छिन्नाधिकरणतानाम् एकावच्छेदकावच्छिन्नत्वासंभवेऽपि क्षतिविरहात् ।।

**अथवा** यावद्विशेषाभाववत्त्वमित्यनेन यावत्तदीयविशेषाभाववत्त्वावच्छिन्ननिरूपितमेकाधिकरणत्वं विवक्षितम् । न तु तत्समुदायः ।।

### व्याख्या

पूर्वोक्तशङ्कायाः समाधानमाह– **न, एकावच्छेदकेति** । उक्तोभयाभावघटकैकावच्छेदकावच्छिन्नत्वं स्वसमानाधिकरणकिंचिदवच्छिन्नयावद्विशेषाभावाधिकरणतावच्छेदकावच्छिन्नत्वरूपं विवक्षितम् । तथा च व्याप्यवृत्त्यव्याप्यवृत्त्युभयाभावाधिकरणतावच्छेदकाप्रसिद्धावपि इदानी किंचिदवच्छिन्नेत्यनेन अव्याप्यवृत्त्यधिकरणतानामेव उपादेयतया तासां च एकावच्छेदकस्य प्रसिद्धत्वात् ।।

अत्र एकैकविशेषाभावसमुदायनिवेशापेक्षया अभावानां यावत्त्वेन निवेशं कृत्वा तन्निरूपितैकाधिकरणतापक्षमवलम्ब्य तस्या एव निवेश उचितः । तावतैव सर्वदोषाणां वारणसंभवात् । तादृशाधिकरणताप्रसिद्धिश्च वृक्षः यावत्संयोगाभाववान् इति प्रतीत्यैव । तादृशप्रतीतेः प्रत्येकाभावाधिकरणताकूटविषयकत्वापेक्षया अखण्डतादृशैकाधिकरणताविषयकत्वं लाघवात् । एवम् अनभ्युपगमे सर्वत्र सामान्याभावविषयकप्रतीतौ विशेषाभावकूटस्यैव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं स्वीकृत्य तद्विषयत्वकल्पनसंभवेन सामान्याभावस्यैव असिद्धिप्रसङ्गात् । एवं च तथैव निवेश उचित इत्याशयेनाह– **अथ वेति** । एकावच्छेदकावच्छिन्नत्वं च एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वम् । तच्च तत्तन्मूलत्वादिरूपम् ।।

### गादाधरी

एकावच्छिन्नत्वं च (एकावच्छेदकावच्छिन्नत्वं च) एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकावच्छिन्नत्वम्, न तु अभिन्नावच्छेदककत्वम् । **वृक्षावृत्ति**कपि-

संयोगानां वृक्षनिष्ठाभावाः यद्यपि व्याप्यवृत्तयः, तथापि अव्याप्यवृत्तिसाधारणयावत्त्वेन तेषामव्याप्यवृत्तित्वात् तत्साधारणयावत्त्वावच्छिन्ननिरूपिताधिकरणता एकमात्र-वृत्तितत्तन्मूलत्वाद्यवच्छिन्नतत्तन्मूलादिरूपावयवावच्छिन्नेति तत्रोभयाभावोऽक्षत इति न साध्योपाध्योस्सामान्यव्याप्तिभङ्गः ।।

### व्याख्या

ननु अभिन्नावच्छेदककत्वरूपार्थस्वीकारे वृक्षावृत्तिकपिसंयोगाभावानां वृक्षे व्याप्यवृत्तितया तद्घटितयावदभावाधिकरणतायाः एकावच्छेदकावच्छिन्नत्वविरहेण तदनवच्छिन्नतया वृक्षवृत्तिकपिसंयोगाभावानां अवच्छिन्नतया च तत्रोभयाभावविरहेण उपाधेः साध्यव्यापकत्वं न स्यात् इति शङ्कायामाह– **वृक्षावृत्तीति** । अव्याप्य-वृत्त्यभावघटितव्याप्यवृत्त्यभावानामपि यावत्त्वेन रूपेणाव्याप्यवृत्तित्वस्वीकारात्, तादृशयावत्त्वावच्छिन्ननिरूपितवृक्षनिष्ठाधिकरणता तत्तन्मूलत्वावच्छिन्नतत्तन्मूला-वच्छिन्नैवेति तत्रोभयाभावोऽक्षत इति साध्योपाध्योः सामान्यव्याप्तिनिर्वाहः ।।

### गादाधरी

**पक्षनिष्ठ**संयोगसामान्यीययावद्विशेषाभावाधिकरणता च न प्रत्येकावच्छेदका-वच्छिन्ना । अस्यां दिशि गगने न संयोग इत्यादिप्रतीतिविरहात्, अपि तु यत्किञ्चिदनुगतधर्मावच्छिन्नतदवच्छेदकावच्छिन्ना, यावत्संयोगाभाववत् गगनमिति प्रत्ययात् । **एकरूपाव**च्छिन्नस्य प्रतियोग्यभावाधिकरणतावच्छेदकत्वे विरोधात्, एकस्यापि विशेषरूपसामान्यरूपाभ्यामुभयावच्छेदकत्वोपगमात् । तथा च पक्षनिष्ठ-संयोगविशेषाभावानां तावत्त्वावच्छिन्ननिरूपिताधिकरणता न निरुक्तैकावच्छेदका-वच्छिन्नत्ववती इति तस्योक्तोभयवत्त्वात् उपाधेः साधनाव्यापकत्वम् इति वदन्ति ।।



### व्याख्या

प्रकृतोपाधेः प्रकृतसाधनाव्यापकत्वमुपपादयति– **पक्षनिष्ठेति** । गगने यावत्संयोगविशेषाभावाधिकरणता च नानादिगवच्छिन्ना न तु प्रत्येकावच्छेदका-वच्छिन्ना । एतस्यां दिशि गगने न संयोगः इत्यादिप्रतीतिविरहात् । अपि तु दिक्त्वरूपयत्किंचिदनुगतधर्मावच्छिन्नदिगवच्छिन्ना । कुत इति चेत्– यावत्संयोगा-भाववत् गगनम् इति प्रत्ययात् ।।

ननु यावत्संयोगाभाववत् गगनम् इति प्रत्यये अवच्छेदकस्य कस्याप्यभानात् कथमवच्छिन्नत्वम् । यथा मूले वृक्षः न कपिसंयोगी इति प्रतीत्या मूलस्य कपिसंयोगाभावावच्छेदकत्वं भासते तथात्रापि कस्यचित् भाने अवच्छिन्नत्वं सुलभमिति चेत्–

उच्यते । गगने संयोगविशेषाभावाधिकरणतानां प्रत्येकं भिन्नभिन्नदिग-वच्छिन्नत्वसत्त्वात्, तत्कूटे अवच्छिन्नत्वसत्त्वेऽपि तस्य एकमात्रवृत्तितत्तदिक्त्वा-वच्छिन्नयत्किंचिद्दिगवच्छिन्नत्वस्य सर्वत्राभावादिति भावः ।।

नन्वेवमेकस्या एव दिशः संयोगतदभावावच्छेदकत्वे विरोध इत्यत आह– **एकरूपेति** । यद्रूपावच्छिन्नस्य प्रतियोग्यवच्छेदकत्वं तद्रूपावच्छिन्नस्यैव अभावा-वच्छेदकत्वं विरुद्धम् । प्रकृते च तत्तद्दिक्त्वावच्छिन्नदिशः संयोगावच्छेदकत्वं दिक्त्वावच्छिन्नस्य अभावावच्छेदकत्वमिति न विरोध इति भावः ।।

एवं च पक्षनिष्ठयावद्विशेषाभावाधिकरणतानां निरुक्तैकावच्छेदकावच्छिन्नत्व-विरहेण तद्घटितोभयाभाववत्त्वाभावेन उपाधेः साधनाव्यापकत्वसंभवात् अत्र स्वयं वक्ष्यमाणस्य **अथवा** इत्यादिनिर्वाहस्य संभवात् उभयाभावघटितक्लिष्टकल्पन-मयुक्तमिति अस्वरसबीजम् ।।

## गादाधरी

**वस्तुतस्तु**– अनवच्छिन्नयावद्विशेषाभाववत्त्वमुपाधिः । तादृशोपाधिना साध्यस्य सामान्यव्याप्तिविरहेऽपि संयोगसामान्याभावरूप**पर्यवसितसाध्य**व्यापकतया **तादृशोपाधेः** सत्प्रतिपक्षोन्नायकत्वमव्याहतम् ।।

तादात्म्येन साध्यवतोऽपि उपाधिव्याप्यतया तादृशोपाध्यभावेन संयोगसामान्याभावरूपसाध्यवद्भेदो**ऽन्यत्रा**प्रसिद्धोऽपि साधयितुं शक्यते एव । अभावसाध्यकव्यतिरेकिणि प्रतियोगिमात्रप्रसिद्धेः अपेक्षितत्वात् । **उपाध्यभावेन** साध्याभावसाधनं तु न सम्यक् । **संयोग**रूपस्य तस्य साधने सिद्धसाधनात् । **पक्षावृत्त्यु**पाधिव्याप्यत्वेन साध्ये पक्षावृत्तित्वसाधनात् सत्प्रतिपक्षनिर्वाहात् इति केचित् ।।

## व्याख्या

एतावत्पर्यन्तं **भट्टाचार्यैः** ''एकावच्छेदेन तदीययावद्विशेषाभाववत्त्वस्योपाधित्वात्'' इति **दीधितेः** परामर्शेन साध्योपाध्योः सामान्यव्याप्तिर्न निर्वहतीति पूर्वपक्षं कृत्वा तत्समाधानार्थं महान् प्रयास आश्रितः । अथेदानीं तत्रेष्टापत्त्या प्रकारान्तरमालम्बते– **वस्तुतस्तु** इति । उपाधेः व्यभिचारोन्नायकतया दूषकत्वम्, सत्प्रतिपक्षोन्नायकतया दूषकत्वमिति पक्षद्वयमस्ति । आद्यं यथा– वह्निः धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचरितत्वात्, यो यद्व्यापकव्यभिचारी स तद्व्यभिचारीति । द्वितीयं यथा– पर्वतो धूमाभाववान् धूमव्यापकार्द्रेन्धनसंयोगाभावात्। साध्यव्यापकस्योपाधेरभावेन हेतुना उपाधिव्याप्यस्य धूमस्याभावसाधनम् ।।

उपाधेः व्यभिचारोन्नायकतया दूषकत्वमिति पक्षे तस्योपाधेः साध्यव्याप्यत्वावश्यकत्वेऽपि सत्प्रतिपक्षोन्नायकतया दूषकत्वमिति पक्षे तस्य उपाधेः साध्यव्याप्यत्वमनावश्यकम् । एकावच्छेदेन तदीययावद्विशेषाभाववत्त्वस्योपाधित्वात्



इति **दीधितिग्रन्थः** सत्प्रतिपक्षोन्नायकत्वपक्षमवलम्ब्य प्रवृत्तः । प्रकृते संयोगसामान्याभावः साध्यः, संयोगीययावद्विशेषाभाववत्त्वं हेतुः । एकावच्छेदेन संयोगीययावद्विशेषाभाववत्त्वं उपाधिः । यत्र यत्र साध्यः संयोगसामान्याभावः गुणादौ तत्र अनवच्छिन्नयावत्संयोगविशेषाभाववत्त्वरूपोपाधिरस्तीति साध्यव्यापकत्वमुपाधेः । पक्षे गगनादौ व्यापकस्य उक्तोपाधेरभावात् पक्षे साध्यविरोध्यनुमितिः भवति । अत्र मूले यत्र साध्यः संयोगसामान्याभावः गुणादौ स गुणादिः तादात्म्यसंबन्धेन उपाधिव्याप्यो भवति । व्यापकस्य उपाधेः अभावः अनवच्छिन्नयावत्संयोगाभावाभावः गगनादौ अस्ति, तेन हेतुना तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताका-भावरूपः व्याप्याभावः संयोगसामान्याभाववद्भेदः गगने साधयितुं शक्यते । तस्य च संयोगसामान्याभावविरोधितया प्रकृतसाध्यविरोध्यनुमितिजनकत्वरूपं सत्प्रतिपक्षोन्नायकत्वमुपाधेरिति भावः । **पर्यवसितसाध्येति** । यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् इति सामान्यतो व्याप्त्या प्रकृते पर्यवसितं साध्यं संयोगसामान्याभावः तद्व्यापकतया **तादृशोपाधेः** – संयोगीययावद्विशेषाभाववत्त्वरूपोपाधेः इत्यर्थः ।।

ननु संयोगसामान्याभाववद्भेदस्य अन्यत्राप्रसिद्धत्वात् अनुमितौ च क्वचित् साध्यप्रसिद्धेः आवश्यकत्वात् इति शङ्कायामाह– **अन्यत्रेति** । अयं भावः– अनुमानं द्विविधम् – अन्वयि व्यतिरेकि चेति । तत्र अभावसाध्यकव्यतिरेकिणि साध्यप्रसिद्धिः नापेक्षिता । अपि तु प्रतियोगिप्रसिद्धिरेव । यथा– पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् इत्यत्र साध्यः पृथिवीतरभेदः पक्षादन्यत्र अप्रसिद्धोऽपि इतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवी इति व्यतिरेकिपरामर्शात् पृथिव्यामितरभेदसिद्धिः इतरत्वप्रसिद्धिमात्रात् भवति, तद्वत् प्रकृतेऽपि संभवात् इति भावः ।।

ननु उपाध्यभावेन साक्षादेव साध्याभावः साध्यताम्, किं सत्प्रतिपक्षोन्नायकतया इति शङ्कायामाह– **उपाध्यभावेनेति** । संयोगाभावाभावरूपस्य साध्याभावस्य संयोगरूपतया तत्साधनं सिद्धसाधनदोषान्न संभवतीति समाधत्ते– **संयोगेति** ।।

मतान्तरमाह– **पक्षावृत्तीति** । संयोगसामान्याभावः गगनादिरूपपक्षावृत्तिः पक्षावृत्त्यनवच्छिन्नतदीययावद्विशेषाभाववत्त्वरूपोपाधिव्याप्यत्वात् इति क्रमेण प्रकृतसाध्ये पक्षावृत्तित्वं साध्यते । तावता च सत्प्रतिपक्षसिद्धिः । पक्षः साध्याभाववान् इति ज्ञानस्येव साध्यं पक्षावृत्ति इति ज्ञानस्यापि प्रकृतसाध्यानुमितिप्रतिबन्धकतया प्रतिरोधसंभवात् इति एतेषामाशयः । अत्र च प्रतिबन्ध्यज्ञानसमानाकारकज्ञानस्यैव प्रतिबन्धकत्वात् उक्तरीतिर्न साधीयसी इत्यस्वरसः ।।

## गादाधरी

**सिद्धसाधनादितः** साध्याभावसाधनासंभवेऽपि **प्रतियोगि**वैयधिकरण्याघटितसाध्यव्यापकतावच्छेदकतया गृह्यमाणोपाधितावच्छेदकावच्छिन्नाभाववत्ताज्ञानात् पक्षे साध्यानुमितिप्रतिरोध इति **सारम्** ।।

## व्याख्या

एतावता विरोध्यनुमितिजनकस्य सत्प्रतिपक्षत्वमिति मतमवलम्ब्योक्तम् । सत्प्रतिपक्षोन्नायकत्वस्य **मणिकारा**संमतत्वात् तत् परित्यज्य प्रकारान्तरमाह– **सिद्धसाधनादित** इति । पूर्वं संयोगसामान्याभाववद्भेदसाधने साध्याप्रसिद्धिमाशङ्क्य कथंचित् परिहार उक्तः । सा अप्रसिद्धिः आदिपदग्राह्या । प्रकृतानुमितिप्रतिरोधरूपं दूषकताप्रयोजकं स्वयमाह– **प्रतियोगीति** । अत्रायमाशयः । प्रतिबध्यप्रतिबन्धकभावविषये अनेके प्रकाराः सन्ति । यथा–



१) तद्वत्ताबुद्धिं प्रति तदभाववत्ताज्ञानं प्रतिबन्धकम् ।

२) तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताज्ञानं प्रतिबन्धकम् ।

३) ह्रदो वह्निमान् इति बुद्धिं प्रति वह्न्यभाववज्जलवद्वृत्तिजलवान् इति ज्ञानं जलवान् वह्न्यभाववान्, जलवांश्च ह्रदः इत्याकारकं ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकम् इति स्वविरोधिधर्मधर्मितावच्छेदककत्वप्रकारकज्ञानत्वेन प्रतिबन्धकमित्युच्यते ।।

४) साध्यव्यापकः उपाधिः, उपाध्यभाववांश्च पक्षः इति ज्ञानमपि प्रतिबन्धकम् । यथा आर्द्रेन्धनसंयोगः धूमव्यापकः आर्द्रेन्धनसंयोगाभाववांश्च पर्वतः इति ज्ञानं यथा पर्वतो धूमनान् इति ज्ञानप्रतिबन्धकं (पर्वतो धूमवान् इति ज्ञानं प्रति), तथा धूमव्यापकार्द्रेन्धनसंयोगाभाववान् पर्वत इति ज्ञानमपि प्रतिबन्धकम् । इदं तद्धर्मव्यापकतावच्छेदकतया गृहीतधर्मावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानतया प्रतिबन्धकमिति कथ्यते ।।

इमं चतुर्थप्रकारं मनसिकृत्याह– गगने संयोगसामान्याभावः सिद्धसाधनदोषात् यद्यपि अनुमातुमशक्यः, तथापि संयोगसामान्याभावरूपसाध्यव्यापकतावच्छेदकतया गृहीतः यः उपाधितावच्छेदकधर्मः अनवच्छिन्नसंयोगीययावद्विशेषाभाववत्त्वरूपो धर्मः तदवच्छिन्नाभाववत्ताज्ञानात् गगनादौ संयोगसामान्याभावानुमितिः प्रतिबध्यते इति तात्पर्यम् ।।

यद्व्यापकतावच्छेदकतया गृहीतो यो धर्मः तदवच्छिन्नाभावज्ञानात् तद्धर्मज्ञानप्रतिबन्धः इत्युक्ते सति वृक्षत्वव्यापकतावच्छेदकतया गृहीतो धर्मः कपिसंयोगत्वं तदवच्छिन्नकपिसंयोगाभावज्ञानं वृक्षेऽस्तीति, तेन ज्ञानेन वृक्षे वृक्षत्वज्ञानप्रतिबन्धः

स्यात् । तद्वारणाय प्रतियोगिवैयधिकरण्याघटितेत्युक्तम् । कपिसंयोगत्वे प्रतियोगिवैयधिकरण्यघटितवृक्षत्वव्यापकतावच्छेदकत्वमस्ति, नतु तदघटितम् । वृक्षत्ववति वृक्षे कपिसंयोगाभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकत्वात् कपिसंयोगत्वस्य तदनवच्छेदकत्वरूपव्यापकतावच्छेदकत्वविरहात् ।।

प्रकृते संयोगसामान्याभावरूपप्रकृतसाध्यव्यापकतावच्छेदकतया गृहीतो यः उपाधितावच्छेदकधर्मः अनवच्छिन्नयावद्विशेषाभाववत्त्वरूपो धर्मः तदवच्छिन्नाभावज्ञानरूपात् उपाध्यभावज्ञानात् पक्षे संयोगसामान्याभावानुमितिः प्रतिबध्यते इति भावः ।।

पूर्वकल्पे अप्रसिद्धिसिद्धसाधनरूपदोषद्वयं, सत्प्रतिपक्षोन्नायकत्वपक्षे **मणिकारोक्त**दोषाश्चेति उक्तपक्षे तादृशदोषाभावात् **सारम्** इत्युक्तम् ।।

## गादाधरी

**अथवा** प्रतियोग्यधिकरणत्वरूपपक्षधर्मावच्छिन्नसामान्याभावरूपसाध्यव्यापकतया **एकावच्छेदेन** इत्यादेः यथाश्रुतस्यैवोपाधितानिर्वाहः । **यत्र प्रतियोगिमति** तस्य सामान्याभावः तत्र एकावच्छेदकावच्छेदेन तस्य यावद्विशेषाभाववत्त्वमिति सामान्यव्याप्तेः । **कपिसंयोगादिमतः** कपिसंयोगादिसामान्याभावाधिकरणवृक्षादेः **एकावच्छेदेन** कपिसंयोगविशेषाभावकूटवत्त्वनियमेन सुग्रहत्वात् । **गुणादौ** एकावच्छेदेन यावद्विशेषाभावासत्त्वेऽपि तत्र प्रतियोग्यसत्त्वेनावच्छिन्नसाध्यवत्त्वाक्षतेश्च ।।

**द्रव्ये** च प्रतियोगिमत्त्वविशिष्टयावत्संयोगविशेषाभावाधिकरणे, एकावच्छेदेन तदीययावद्विशेषाभावसत्त्वात् प्रतियोगिमत्त्वरूपावच्छेदक विशिष्टसाधनाव्यापकत्वं तस्य वृक्षादिवृत्तिकपिसंयोगादिविशेषाभावाधिकरणताकूटान्तर्गत कतिपया-



भावाधिकरणतानां अनवच्छिन्नत्वेऽपि तत्कूटस्य एकावच्छेदकावच्छिन्नत्वं **पूर्ववत्** उपपादनीयम् ।।

## व्याख्या

उक्तेषु सर्वेष्वपि पक्षेषु एकावच्छेदेनेत्यस्य यथाश्रुतार्थं परित्यज्य अनवच्छिन्नेत्यर्थस्वीकारेण विचारः प्रवर्तितः । अथ तस्य यथाश्रुतार्थानुसारेणैव **मणिकारा**भिमतम् उपाधेः व्यभिचारोन्नायकत्वं समर्थयति– **अथवेति** । उपाधेरनेकविधत्वात् प्रकृते पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिलक्षणमिति स्वीकृत्य उपाधेः व्यभिचारोन्नायकत्वं समर्थयति– **अथवेति** । यत्र प्रतियोगिमति सामान्याभावः तत्र एकावच्छेदेन तदीययावद्विशेषाभाववत्त्वमिति सामान्यव्याप्तिः । यत्र वृक्षादौ प्रतियोगिमति अग्रे कपिसंयोगवति **सामान्याभावः** (मूले) कपिसंयोगसामान्याभावः तत्र वृक्षे एकावच्छेदेन मूलावच्छेदेन कपिसंयोगीययावद्विशेषाभाववत्त्वमस्तीति साध्योपाध्योः सामान्यव्याप्तिनिर्वाहः । अत्र प्रतियोगिमतीत्यनुक्तौ-यत्र यस्य सामान्याभावः तत्र एकावच्छेदेन तदीययावद्विशेषाभाववत्त्वं न संभवति । गुणादौ कपिसंयोगसामान्याभाववति एकावच्छेदेन तदीययावद्विशेषाभाववत्त्वविरहात् । तत्र कपिसंयोगसामान्याभावस्य व्याप्यवृत्तित्वात् = अनवच्छिन्नवृत्तिकत्वात् । अत्र पक्षधर्मः = प्रतियोगिमत्त्वं । तदवच्छिन्नत्वं = सामानाधिकरण्येन तद्विशिष्टत्वम् । वृक्षे कपिसंयोगरूपप्रतियोग्यपि वर्तते कपिसंयोगसामान्याभावोऽपि वर्तते । अतः पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमुपाधेरिति ध्येयम् । तदाह– **यत्र प्रतियोगिमतीत्यादिना** । सामान्यव्याप्तेः समन्वयं स्पष्टीकरोति– **कपिसंयोगादिमत** इत्यादिना । **एकावच्छेदेन** = मूलावच्छेदेन । प्रतियोगिमतीति विशेषणस्य प्रयोजनमाह– **गुणादाविति** । सामान्यव्याप्तिशरीरे प्रतियोगिमतीति विशेषणं यदि न दीयते,

तदा यत्र संयोगसामान्याभावः तत्र एकावच्छेदेन तदीययावद्विशेषाभावः इति व्याप्तिः स्यात् । तदा गुणे संयोगसामान्याभावः वर्तते तत्र एकावच्छिन्नयावद्विशेषाभाववत्त्वं नास्तीति व्याप्तिभङ्गः स्यात् । अतः प्रतियोगिमतीति कथितम् । गुणे च संयोगरूपप्रतियोगिमत्त्वं नास्तीति तद्विशिष्टं संयोगाभावरूपं व्याप्यं नास्तीति न दोष इत्याशयः । **अवच्छिन्नसाध्येति** । प्रतियोगिमत्त्वरूपपक्षधर्मविशिष्टसाध्येत्यर्थः । एतावता उपाधेः साध्यव्यापकत्वमुपपादितम् । अत्र साध्यपदेन सामान्यव्याप्तिघटकं व्यापकं विवक्षितम् इति आदितः स्मर्तव्यम् । उपाधिशरीरे तदेव व्याप्यं भवति । उपाधिः व्यापको भवति ।।

उपाधौ प्रकृतसाध्यव्यापकत्वमुक्त्वा प्रकृतोपाधौ प्रकृतसाधनाव्यापकत्वमाह– **द्रव्ये चेति** । गगनादिद्रव्ये संयोगरूपप्रतियोगिमति यावत्संयोगविशेषाभावरूपसाधनमस्ति, तथापि तत्र एकावच्छेदेन तद्विशेषाभावाधिकरणत्वं नास्तीति तत्र साधनाव्यापकत्वोपपत्तिः ।।

ननु प्रतियोगिमत्त्वविशिष्टकपिसंयोगसामान्याभावव्यापकत्वम् एकावच्छेदेन तद्विशेषाभाववत्त्वे न संभवति । वृक्षावृत्तिकपिसंयोगाभावाधिकरणताकूटान्तर्गतवृक्षाद्यवृत्तिकपिसंयोगविशेषाभावाधिकरणतानां वृक्षे व्याप्यवृत्तितया अवच्छिन्नत्वाभावादित्यत आह– **वृक्षादीति । पूर्ववदिति** । तासामपि अव्याप्यवृत्त्यधिकरणतासाधारणकूटत्वेन एकावच्छेदकावच्छिन्नत्वमित्यर्थः ।।

## गादाधरी

**अथ** एतादृशोपाधेः व्यभिचारोन्नायकत्वं सत्प्रतिपक्षोन्नायकत्वं वा न संभवति । प्रकृतसाध्यव्यापकस्य एकावच्छेदकावच्छिन्नसंयोगीययावद्विशेषाभाववत्त्वस्य अप्रसिद्धेः । द्रव्ये तदीययावद्विशेषाभाववत्त्वस्य अवच्छिन्नत्वेऽपि



एकावच्छेदकावच्छिन्नत्वाभावात् । गुणे च तस्यावच्छिन्नताया एवाभावात् । **प्रतियोगिमत्त्वविशिष्ट**कपिसंयोगादिसामान्याभावव्यापकस्य तदीयैकावच्छेदकावच्छिन्नयावद्विशेषाभाववत्त्वस्य प्रसिद्धत्वेऽपि तदभावेन प्रकृतसाध्यवद्भेदसाधनं तु न संभवति । तस्य प्रकृतसाध्याव्यापकत्वात् ।।

**प्रतियोगिमत्त्वविशिष्ट**कपिसंयोगादिसामान्याभाववद्भेदश्च कपिसंयोगादिरूपप्रतियोगिशून्ये हेतुमति साध्यमानः न कपिसंयोगादिसामान्याभाववद्भेदपर्यवसायी । प्रतियोगिमद्भेदस्याबाधात् । प्रतियोगिमति च एकावच्छेदकावच्छिन्नतदीययावद्विशेषाभावसत्त्वेन तद्वत्त्वाभावादिरूपहेतोरसिद्धिरिति न व्यभिचारोन्नयननिर्वाह इति ।।

## व्याख्या

प्रतियोगिमत्त्वरूपपक्षधर्मावच्छिन्नसंयोगसामान्याभावरूपसाध्यव्यापकतया एकावच्छेदेन संयोगीययावद्विशेषाभावरूपस्य यथाश्रुतस्यैवोपाधित्वं संभवतीति पूर्वमुपपादिते पक्षेऽपि उक्तोपाधेः केनापि रूपेण दूषकत्वं न संभवतीति शङ्कते– **अथेत्यादिना** । उपाधेः सत्प्रतिपक्षोन्नायकत्वं व्यभिचारोन्नायकत्वं वा वक्तव्यम् ।।

तत्र सत्प्रतिपक्षोन्नायकत्वपक्षे साध्यव्यापकोपाध्यभावात् पक्षे साध्यानुमितिविरोध्यनुमितिजनकतया दूषकत्वं वक्तव्यम् । तच्च न संभवति । प्रकृतसाध्यव्यापकत्वस्य प्रकृतोपाधावभावात् । तथाहि– द्रव्ये संयोगीययावद्विशेषाभावस्य सत्त्वेऽपि एकावच्छेदेन तदभावात् । गुणादौ च तस्यावच्छिन्नताया एवाभावात् । तथा चोभयथापि उक्तोपाधेरप्रसिद्ध्या तदभावेन हेतुना साध्यविरोध्यनुमितिजननासंभवात् ।।

व्यभिचारोन्नायकत्वमपि न संभवतीत्याह– **प्रतियोगिमत्त्वविशिष्टेति** । तत्पक्षे हि पक्षे उपाध्यभावेन साध्याभावं प्रसाध्य तद्वद्वृत्तितया हेतोः साध्यव्यभिचारः उन्नेतव्यः । स च न संभवतीत्याह– **प्रतियोगिमत्त्वविशिष्टेत्यादिना** । वृक्षादौ प्रतियोगिमत्त्वविशिष्टकपिसंयोगसामान्याभावव्यापकस्य एकावच्छेदकावच्छिन्नतदीययावद्विशेषाभाववत्त्वस्य प्रसिद्धावपि तदभावेन प्रकृतसाध्यवद्भेदसाधनासंभवात् । कुत इति चेत् ? तस्य कपिसंयोगसामान्याभावरूपस्य प्रकृतसाध्याव्यापकत्वात् । गुणादावपि कपिसंयोगसामान्याभावसत्त्वेन तत्र निरुक्तस्य एकावच्छेदेन तदीययावद्विशेषाभावरूपोपाध्यभावात् । उपाधेः साध्यव्यापकत्वे सत्येव हि उपाध्यभावेन साध्यवद्भेदं साधयित्वा तद्वद्वृत्तित्वेन हेतोः व्यभिचारित्वमुन्नेतुं शक्यते इति भावः ।।

ननु प्रकृतसाध्यवद्भेदानुमानासंभवेऽपि प्रतियोगिमत्त्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यभावात् प्रतियोगिमत्त्वविशिष्टप्रकृतसाध्यवद्भेद एव साध्यताम् । तावतापि विशिष्टस्य शुद्धानतिरिक्ततया व्यभिचारोन्नयनसंभवादिति शङ्कायामाह– **प्रतियोगिमत्त्वविशिष्टेति** । कपिसंयोगादिमत्त्वविशिष्टकपिसंयोगादिसामान्यवद्भेदेत्यर्थः ।।

अयं भावः– उक्तोपाध्यभावहेतुना साध्यवद्भेदः कुत्र साध्यते ? प्रतियोगिमति प्रतियोगिशून्ये वा । कपिसंयोगरूपप्रतियोगिशून्ये गुणादौ साध्यमानः कपिसंयोगरूपप्रतियोगिमत्त्वविशिष्टकपिसंयोगसामान्यवद्भेदः न कपिसंयोगसामान्याभाववद्भेदपर्यवसायी, किं तु कपिसंयोगवद्भेदपर्यवसायी । कुत इति चेत्- तत्र कपिसंयोगवद्भेदस्य अबाधितया लाघवेन तद्रूपत्वात् । विशेषणशून्ये विशेष्यवति विशिष्टाभावस्य विशेषणाभावरूपत्वात् । एवं च नोक्तरीत्या व्यभिचार-



सिद्धिः । प्रतियोगिमति वृक्षादौ च तादृशोपाधेरेव सत्त्वेन तदभावरूपहेतौ असिद्धिरिति न व्यभिचारोन्नायकत्वमपि संभवतीति शङ्कितुराशयः ।।

## गादाधरी

**मैवम्** । क्वचित् द्रव्ये जलादिसंयोगवति तत्सामान्याभावस्य सत्त्वे एकावच्छेदकावच्छिन्नतदीययावद्विशेषाभावसत्त्वात् तदीयप्रतियोगिमत्त्वविशिष्टतत्सामान्याभावव्यापकैकावच्छेदकावच्छिन्नतदीययावद्विशेषाभाववत्त्वम् । यत्र च द्रव्ये सर्वावयवावच्छेदेन भिन्नभिन्ना जलसंयोगा वर्तन्ते, यावत्तद्विशेषाभावरूपहेतुमति तत्र एकावच्छेदकावच्छिन्नयावत्तद्विशेषाभावरूपोपाध्यभावेन प्रतियोगिमत्त्वविशिष्टतत्सामान्याभाववद्भेदस्य सिद्धौ बाधकाभावात् । प्रतियोगिमति तत्र विशेष्यवद्भेदपर्यवसानेन व्यभिचारसिद्ध्या सामान्यव्याप्तिभङ्गात् ।।

**संयोगत्वे** गगनादिष्ठाभावप्रतियोगितावच्छेदकत्वसाधकानुमानौपयिकदर्शितव्याप्तावपि एकावच्छेदकावच्छेद्यस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावाधिकरणताशून्यगगनादिकं यद्यत् तदन्यत्वस्य उपाधित्वं बोध्यम् ।।

## व्याख्या

पूर्वोक्तशङ्कां समाधत्ते– **मैवमिति** । जले पूर्णनिमग्नदण्डः अर्धनिमग्नदण्डश्चास्ति । तत्र पूर्वोक्तोपाधेः व्यभिचारोन्नयनरूपेष्टसिद्धिः भवति । तथा हि– योऽयं दण्डः जले अर्धनिमग्नः तत्र हि जलसंयोगः तदभावश्च वर्तते । तत्र जलसंयोगशून्यभागावच्छेदेन प्रकृतसाध्यसजातीयजलसंयोगसामान्याभावस्य सत्त्वात्, जलसंयोगरूपप्रतियोगिमत्त्वस्य च तत्र दण्डे सत्त्वात् तथैव तत्र किंचिदवच्छेदेन जलसंयोगीययावद्विशेषाभाववत्त्वस्य उपाधेश्च सत्त्वात्, तत्र उपाधेः साध्यव्याप-

कत्वम् । यश्च दण्डः जले पूर्णनिमग्नः तत्र सर्वावयवावच्छेदेन भिन्नभिन्नजलसंयोगानां सत्त्वात् तदनवच्छेदकविभिन्नावच्छेदेन जलसंयोगीययावद्विशेषाभावाश्च वर्तन्ते । परं तु एकावच्छेदेन न वर्तन्त इति तत्र जलसंयोगरूपप्रतियोगिमत्त्वविशिष्टजल-संयोगसामान्याभावव्यापकः यः एकावच्छिन्नतदीययावद्विशेषाभाववत्त्वरूपः उपाधिः तदभावेन हेतुना प्रकृतसाध्यवद्भेदः = जलसंयोगसामान्ययावद्भेदः सिध्यति । ततः यावज्जलसंयोगाभावरूपहेतोः तत्र सत्त्वात् हेतौ साध्यवद्भिन्नवृत्तित्वरूपो व्यभिचारः सिध्यति । परं तु प्रतियोगिमत्त्वविशिष्टजलसंयोगसामान्याभावरूप-प्रकृतसाध्यतुल्यसाध्यवद्भेद एव सिध्यति । न तु पूर्वोक्तरीत्या प्रतियोगिमद्भेदः । तादृशविशिष्टभेदस्य प्रतियोगिमत्त्वरूपविशेषणवति तादृशद्रव्ये वर्तमानस्य विशिष्टा-भावरूपस्य विशेष्यवद्भेदे पर्यवसानेन शुद्धविशेष्यवद्भेदरूपत्वात् । एवंरीत्या उपाधिना व्यभिचारोन्नयनेन यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् इति व्याप्तेः भङ्ग इति भावः ।।

अथ स्वाभिमतसामान्यमुखव्याप्तिस्थलाभिषिक्तव्याप्तावपि उपाधिमाह– **संयोगत्व** इति ।।

संयोगत्वं गगनादिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकम्, गगनाद्यवृत्तिस्वस-मानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयत्किंचिदभावकं यद्यत् स्वं तत्तदन्यत्वात् इत्युक्तव्याप्तौ एकावच्छेदकावच्छिन्नस्वसमानाधिकरणोभयावृत्तिधर्मा-वच्छिन्नप्रतियोगिताकयावदभावाधिकरणताशून्यगगनादिकं यद्यत् तत्तदन्यत्वमुपाधिः। तादृशोपाधेश्च क्रियात्वादौ साध्यव्यापकत्वम् ।।

तथा हि– क्रियात्वे गगनादिनिष्ठाभावप्रतियोगितावच्छेदकत्वरूप-प्रकृतसाध्यमस्ति । निरुक्तोपाधिश्च वर्तते । कथमिति चेत्– श्रूयताम् । क्रियात्वं



न स्वपदेन ग्रहीतुं शक्यम् । तथा सति तत्समानाधिकरणतत्तत्क्रियात्वावच्छिन्ना-भावानां गगने सत्त्वेन तादृशयावदभावाधिकरणताशून्यगगनादिकत्वाभावात् । अपि तु परिमाणत्वादिकमेवेति तदन्यत्वरूपोपाधेः क्रियात्वे सत्त्वात् ।।

पूर्वोक्तप्रकृतहेतुमति संयोगत्वे च पक्षे, गगननिष्ठयावत्संयोगविशेषाभावाधि-करणतानां विभिन्नावच्छिन्नत्वेन एकावच्छेदकावच्छिन्नत्वविरहेण एकावच्छेदका-वच्छिन्नस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावत्संयोगाभावाधि-करणतानां गगनादावसत्त्वेन तादृशाधिकरणताशून्यगगनादिकत्वेन तदन्यत्वरूपो-पाध्यभावात् उपाधिरूपव्यापकाभाववति पक्षे साध्यस्य व्याप्यस्य अभावमुन्नीय तद्वति तस्मिन् हेतुसत्त्वात् व्यभिचारः उन्नेतव्य इति भावः । अयं उपाधेः व्यभिचारोन्नायकत्वप्रकारः कथंचित् उपपादितः । बहुवारमत्र लिखितं मनसि गृहीत्वा संतोष्टव्यं जिज्ञासुभिः ।।

## दीधिति :

**एतेन** अयं संयोगाभाववान् यावद्विशेषाभावात् **इति** परास्तम् । **व्यर्थ-विशेषणत्वात्, अप्रयोजकत्वात्, निर्गुणत्वादेः** उपाधित्वाच्च ।।

## गादाधरी

**एतेनेति** । अनवच्छिन्नयावद्विशेषाभाववत्त्वस्य उपधित्वेनेत्यर्थः । **इति** विशेषव्याप्त्युपष्टम्भ्यनुमानं परास्तम् । दूषणान्तरमाह– **व्यर्थेति । त्वन्मते** संयोगसामान्याभावस्य केवलान्वयितया **अभाववत्त्वस्यैव तद्व्याप्यता-वच्छेदकत्वेन** इतरांशस्य व्यर्थत्वादित्यर्थः । ननु अभावात् इत्येव हेतुरस्तु इत्यत आह– **अप्रयजकत्वादिति** । व्याप्तिग्राहकतर्कशून्यत्वादित्यर्थः । विशेषव्याप्तावुपाध्यन्तरमपि सुलभमित्याह– **निर्गुणत्वादेरिति** । आदिना निष्परिमाणत्वादेः परिग्रहः ।।

## व्याख्या

**दीधितौ** आदौ ''अयं कपिसंयोगी एतद्वृक्षत्वात्'' इत्यत्र अव्याप्तिवारणाय अभावे प्रतियोग्यसमानाधिकरणेति विशेषणमिति कथितम् । तदुपरि– ''यत्तु इदं संयोगि द्रव्यत्वात्'' इत्यत्र ''अव्याप्तिवारणाय तत्'' इति प्राचां मतमनूद्य ''तन्न । द्रव्ये संयोगसामान्याभावे मानाभावात्'' इति तन्मतं खण्डितम् । ततः ''यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् इति व्याप्तेः यावत्संयोगाभावा एव मानम्'' इत्याशङ्क्य ''यत्तदर्थयोः अननुगमात्, एकावच्छेदेन यावद्विशेषाभाववत्त्वस्य उपाधित्वाच्च'' इति दूषितम् । इदानीं द्रव्ये संयोगसामान्याभावसाधकं विशेषव्याप्त्युपष्टभ्यमनुमानमाशङ्क्य निराक्रियते **दीधितौ-एतेनेति** । अभावे प्रतियोग्यसमानाधिकरणेति विशेषणानुपादाने इदं संयोगि द्रव्यत्वात् इत्यत्राव्याप्तिः । हेत्वधिकरणे द्रव्ये वृक्षादौ संयोगाभावस्य वृक्षत्वाद्यवच्छेदेन सत्त्वात् तत्प्रतियोगितावच्छेदकमेव संयोगत्वरूपं साध्यतावच्छेदकमित्यव्याप्तिः । वृक्षादौ संयोगसामान्याभावे प्रमाणं तु अयं संयोगसामान्याभाववान् संयोगीययावद्विशेषाभाववत्त्वात् इति अनुमानमेव प्रमाणमिति शङ्का । सा च अस्मिन्ननुमानेऽपि अनवच्छिन्न-यावत्संयोगविशेषाभाववत्त्वमुपाधिः । साध्यव्यापकत्वात् साधनाव्यापकत्वाच्च । संयोगसामान्याभावरूपसाध्यवति गुणादौ अनवच्छिन्नयावत्संयोगविशेषाभावस्य सत्त्वात् साध्यव्यापकत्वम् । साधनवति द्रव्ये संयोगविशेषाभावानां अव्याप्यवृत्तितया सावच्छिन्नत्वात्, अनवच्छिन्नसंयोगविशेषाभाववत्त्वविरहात् साधनाव्यापकत्वम् । अतः सोपाधिकत्वादिदमनुमानं दुष्टमिति एतेनेत्यनेन विवक्षितम् । अन्यान्यपि त्रीणि दूषणानि कथयति – **व्यर्थविशेषणत्वादि**त्यादिना । तदुपपादयति **गादाधर्यां त्वन्मते** इत्यादिना । संयोगवति द्रव्येऽपि संयोगसामान्याभावमङ्गीकुर्वतः तव मते गुणादौ सुतरां



संयोगसामान्याभावोऽस्तीति संयोगसामान्याभावस्य केवलान्वयितया केवलान्वयिनः अभाववत्त्वस्यैव तत्साधकत्वसंभवेन हेतुशरीरप्रविष्टः **यावद्विशेष** इत्यंशः व्यर्थ इति भावः । **अभाववत्त्वस्ये**त्यस्य स्थाने **अभावत्वस्ये**ति पाठः साधुः । **तद्व्याप्यता-वच्छेदकत्वेन** = संयोगसामान्याभावव्याप्यतावच्छेदकत्वेन । तर्हि अभावादित्येव हेतुरस्तु इति शङ्कायां दूषणान्तरमुक्तं **दीधितौ अप्रयोजकत्वा**दिति । व्याप्तिग्राहकतर्कशून्यत्वादिति तदर्थः । एतदुक्तं भवति - हेतुरस्तु साध्यं मास्तु इति व्यभिचारशङ्कायां तर्केणैव सर्वत्र तत्परिहारः कार्यः ! स च विपर्यये – साध्याभावे अनिष्टापादनरूपः । पर्वतो वह्निमान् धूमात् इत्यत्र धूमोऽस्तु वह्निर्मास्तु इति शङ्कायां वह्निधूमयोः कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्कः तादृशशङ्कानिवर्तकः, तद्वत् । प्रकृते यावत्संयोगाभावरूपो हेतुरस्तु संयोगसामान्याभावरूपं साध्यं मास्तु इति शङ्कायां तन्निवर्तकानुकूलतर्काभावादिति भावः ।।

उक्तायां यः संयोगीययावद्विशेषाभाववान् स संयोगसामान्याभाववान् इति विशेषव्याप्तौ निर्गुणत्वमुपाधिः । यत्र यत्र संयोगसामान्याभावः निर्विवादः गुणादौ, तत्र निर्गुणत्वमिति साध्यव्यापकत्वस्य, प्रकृतसाधनवति द्रव्ये निर्गुणत्वं नास्तीति साधनाव्यापकत्वस्य च सत्त्वात् इति भावः ।।

## दीधितिः

**न च प्रतियोग्यनवच्छेदकतयैव** वृक्षत्वादेरभावावच्छेदकत्वम् । **गुणाद्यनवच्छेदक**प्रमेयत्वादेः **तदभावाव**च्छेदकत्वप्रसङ्गात् ।।

## गादाधरी

**यत् यद्धर्माश्रया**नवच्छेदकं तत् तद्धर्मावच्छिन्नाभावावच्छेदकमिति **व्याप्त्युपष्टभ्यं** वृक्षत्वादेः संयोगसामान्याभावावच्छेदकत्वसाधकमनुमानमाशङ्क्य

निराकुरुते– **न चेति** । **गुणाद्यनवच्छेदकेति** । गुणत्वाश्रयानवच्छेदकेत्यर्थः । **तदभावेति**– गुणत्वाद्यवच्छिन्नाभावेत्यर्थः । **तथा च** गुणत्वाद्यवच्छिन्नत्वस्यापि अव्याप्य-वृत्तिताप्रसङ्ग इति भावः । घटादौ द्रव्यत्वावच्छेदेन घटत्वाद्यभावप्रसङ्गः घटत्वादेर्व्याप्यवृत्तितया तदवच्छेदकाप्रसिद्ध्या तदनवच्छेदकत्वरूपापादकाप्रसिद्धेर्न संभवतीति नाभिहितः । गुणत्वाद्याश्रयस्य संयोगादेरवच्छेदकप्रसिद्ध्या न गुणत्वाद्यवच्छिन्नाभावावच्छेदकत्वापादकाप्रसिद्धिरिति भावः ।।

### व्याख्या

**दीधितौ** द्रव्ये संयोगसामान्याभावसिद्धिं प्रकारान्तरेण आशङ्क्य निराकरोति– **न च प्रतियोग्यनवच्छेदकतयेति** । वृक्षत्वं संयोगसामान्याभावा-वच्छेदकम् संयोगानवच्छेदकत्वात् । यत् यद्धर्माश्रयानवच्छेदकं तत् तद्धर्मावच्छिन्नाभावा-वच्छेदकमिति व्याप्तेः । वृक्षत्वं संयोगत्वाश्रयानवच्छेदकम्, अग्रादेरेव संयोगावच्छेद-कत्वात् । ततश्च संयोगत्वाश्रयसंयोगानवच्छेदकत्वेन हेतुना वृक्षत्वे संयोगसामान्या-भावावच्छेदकत्वे सिद्धे अर्थात् वृक्षे संयोगत्वाश्रयसंयोगसामान्याभावः सिध्यतीति शङ्कितुराशयः । ततश्च द्रव्ये संयोगसामान्याभावसिद्धिः निराबाधा इति **न च** इत्यादि**दीधितिग्रन्थस्य** भावः । तदाह– **गादाधर्याम्– यत् यद्धर्माश्रये**त्यादिना । **व्याप्त्युपष्टब्धं** = व्याप्त्युपजीवकं, अनुमानमित्यनेनास्यान्वयः ।।

उक्तमनुमानं निराकुरुते **दीधितौ गुणाद्यनवच्छेदकेत्यादिना** । संयोगत्वा-श्रयतत्तत्संयोगातिप्रसक्ततया तदनवच्छेदकत्वेन वृक्षत्वादेः संयोगाभाववच्छेदकत्वं यथा भवति, तथा गुणत्वाश्रयसंयोगाद्यनवच्छेदकतया प्रमेयत्वादेः गुणत्वावच्छिन्ना-भावावच्छेदकत्वप्रसङ्गात् इति भावः ।।



अस्तु तथैवेति चेत् अनिष्टमाह– **तथा चेति** । प्रमेयत्वावच्छेदेन गुणसामान्याभावस्य स्वीकारे द्रव्ये गुणस्य तदभावस्य च सर्वत्र स्वीकार्यतया गुणसामान्यस्य संयोगस्येव स्वाभावसामानाधिकरण्यरूपमव्याप्यवृत्तित्वं प्रसजेत् । रूपादिगुणानां व्याप्यवृत्तित्वेन तथा अभ्युपगन्तुं न शक्यमिति भावः । नन्वेवं घटत्वानवच्छेदकद्रव्यत्वावच्छेदेन घटादौ घटत्वाभावप्रसङ्गः स्फुटतरः कुतो न प्रदर्शितः इति शङ्कां वारयति– **घटादाविति** । घटत्वादेः व्याप्यवृत्तितया तदवच्छेदकाप्रसिद्ध्या तदनवच्छेदकत्वरूपापादकमप्रसिद्धमिति द्रव्यत्वावच्छेदेन घटादौ घटत्वाभावप्रसङ्गो न प्रदर्शितः । गुणत्वाश्रयस्तु संयोगादिः अव्याप्यवृत्तिरिति पूर्वोक्तप्रसङ्गो भवतीति भावः ।।

### दीधितिः

**यथा च** घटपूर्ववृत्तित्वस्य **प्रतिदण्डं, वह्निसामानाधिकरण्यस्य** वा प्रतिधूमं **भिन्नत्वेऽपि दण्डत्वं** धूमत्वं वा **तत्सामान्यावच्छेदकं,** तथा **संयोगसामान्यस्य** अवच्छेदकं द्रव्यत्वादिकमित्यस्यापि **सुवचत्वाच्चेति संप्रदायविदः** ।।

### गादाधरी

ननु यद्धर्माश्रयानवच्छेदकमित्यत्र यत्पदेन व्याप्यवृत्त्यवृत्तिधर्मो विवक्षितः । गुणत्वादेश्च व्याप्यवृत्तिरूपादिवृत्तितया तदाश्रयानवच्छेदकत्वस्य न तदवच्छिन्नाभावावच्छेदकत्वापादकता इत्याशङ्क्य, वृक्षत्वादौ संयोगत्वाश्रयान-वच्छेदकत्वरूपसंयोगत्वावच्छिन्नाभावसाधकरूपहेतोरसिद्धिमाह– **यथाचेति** । दण्डनिष्ठकारणताघटकतदव्यवहितपूर्वकालसंबन्धस्येत्यर्थः । **प्रतिदण्डं भिन्नत्वेऽपि दण्डत्वं तत्सामान्यावच्छेदकमित्यन्वयः** । प्रतिदण्डं भिन्नत्वेऽपीत्यनेन दण्डत्वं तत्प्रत्येकातिप्रसक्तमिति सूचितम् । एवमग्रेऽपि । **तत्सामान्येति** । घटपूर्ववृत्ति-

तात्वावच्छिन्नेत्यर्थः । प्रत्येकातिप्रसक्तत्वेऽपि अवच्छेद्यतावच्छेदकानुगतरूपावच्छिन्नानतिप्रसक्ततया तस्यावच्छेदकत्वम् । अन्यथा घटकारणतावच्छेदकत्वमेव भज्येतेति भावः ।।

### व्याख्या

यत् यद्धर्माश्रयानवच्छेदकमित्यत्र यद्धर्मपदेन व्याप्यवृत्त्यवृत्तिधर्मो विवक्षणीयः। तेन व्याप्यवृत्त्यवृत्तियद्धर्माश्रयानवच्छेदकं यत् तत् तद्धर्मावच्छिन्नाभावावच्छेदकम् इत्युक्तौ गुणत्वस्य यद्धर्मपदेनोपादानं न संभवति । तस्य व्याप्यवृत्तिरूपादिवृत्तित्वात् । अतः गुणत्वाश्रयानवच्छेदकतया प्रमेयत्वस्य गुणत्वावच्छिन्नाभावावच्छेदकत्वापादानं न संभवति ।।

तथा च व्याप्यवृत्त्यवृत्ति यत् संयोगत्वं तदाश्रयसंयोगावच्छेदकवृक्षत्वादेः संयोगत्वावच्छिन्नाभावावच्छेदकत्वस्य आपादनं न संभवति । तथा च संयोगत्वाश्रयानवच्छेदकवृक्षत्वादेः संयोगत्वावच्छिन्नप्रतियोगिताकाभावावच्छेदकत्वं निराबाधमिति शङ्कायां, वृक्षत्वादौ संयोगत्वाश्रयसंयोगानवच्छेदकत्वरूपस्यास्य संयोगत्वावच्छिन्नाभावसाधकस्य हेतोः असिद्धिमाह– **यथाचेति** इति भावः । **दण्डनिष्ठेत्यादि** । घटत्वावच्छिन्नं प्रति दण्डत्वेन कारणत्वात् दण्डत्वं घटकारणतावच्छेदकमितीष्यते । कारणत्वस्य कार्यनियतपूर्ववृत्तित्वरूपत्वात् तस्य च पूर्वकालसंबन्धरूपतया प्रकृते दण्डनिष्ठपूर्वकालसंबन्धस्य दण्डभेदेन भिन्नतया तदतिप्रसक्तेऽपि **तत्र** दण्डत्वे तदवच्छेदकत्वं कार्यनियतपूर्ववृत्तितावच्छेदकत्वम्, घटपूर्ववृत्तित्वत्वावच्छिन्नानतिप्रसक्ततया इष्यते; तत्तद्दण्डनिष्ठघटपूर्ववृत्तित्वातिप्रसक्तेऽपि दण्डत्वे अवच्छेद्यतावच्छेदकघटपूर्ववृत्तित्वत्वावच्छिन्नानतिप्रसक्तत्वात् । एवमनभ्युपगमे घटकारणतावच्छेदकत्वमेव दण्डत्वस्य न स्यात् तथा प्रकृतेऽपीति भावः ।।



### गादाधरी

**ननु दण्डत्वस्य** घटनियतपूर्ववृत्तितावच्छेदकत्वं न घटनियतपूर्ववृत्तितायाः स्वरूपसंबन्धरूपावच्छेदकत्वम्; अपि तु तदव्यवहितपूर्वकालनिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपं पारिभाषिकमेव । तच्चातिप्रसक्तेऽपि निराबाधमेव। स्वरूपसंबन्धरूपावच्छेदकताया एव अवच्छेद्यानतिप्रसक्तत्वनियतत्वादिति प्रत्येकातिप्रसक्तस्य सामान्यानतिप्रसक्तत्वेन सामान्यरूपावच्छिन्नावच्छेदकत्वे दृष्टान्तान्तरमाह– **वह्निसामानाधिकरण्यस्येति** । प्रतिधूमं भिन्नत्वेऽपि धूमत्वं तत्सामान्यावच्छेदकमित्यन्वयः । तत्पदेनात्र वह्निसामानाधिकरण्यपरामर्शः । धूमत्वस्य तदनवच्छेदकत्वे तस्य वह्निव्याप्यतावच्छेदकत्वं नोपपद्येत ।।

### व्याख्या

पूर्वं यत् यद्धर्माश्रयानवच्छेदकं तत् तद्धर्मावच्छिन्नाभावावच्छेदकम् इति व्याप्तिः न संभवति, गुणत्वावच्छिन्नानवच्छेदकस्य प्रमेयत्वस्य गुणत्वावच्छिन्नाभावावच्छेदकत्वप्रसङ्गात् । तथा च प्रमेयसामान्ये गुणसामान्याभावः स्यादिति प्रमेयसामान्यान्तर्गतद्रव्येऽपि गुणसामान्याभावः स्यात् इत्युक्तम् । तदुपरि यद्धर्मे व्याप्यवृत्त्यवृत्तीति विशेषणं प्रक्षिप्य व्याप्यवृत्त्यवृत्तियद्धर्माश्रयानवच्छेदकं यत् तत् तद्धर्मावच्छिन्नाभावावच्छेदकमित्युक्तौ प्रमेयत्वस्य व्याप्यवृत्तिरूपादिवृत्तितया प्रमेयत्वस्य गुणत्वावच्छिन्नाभावावच्छेदकत्वापादनं न संभवति इति कथितम् । ततश्च संयोगत्वाश्रयानवच्छेदकवृक्षत्वादेः संयोगत्वावच्छिन्नाभावावच्छेदकत्वं निराबाधमित्याशङ्क्य संयोगत्वाश्रयानवच्छेदकत्वरूपो हेतुः वृक्षत्वे असिद्धः इति सदृष्टान्तमुच्यते **यथा च** इत्यादिना **दीधितौ** इत्युक्तम् । तत्र दृष्टान्तद्वयं प्रदर्शितम् । तत्र प्रथमदृष्टान्तः– यथा घटपूर्ववृत्तित्वस्य प्रतिदण्डं भिन्नत्वेऽपि दण्डत्वं घटपूर्ववृत्तित्वसामान्यावच्छेदकमिति । तस्य च विवरणं पूर्वं

कृतमेव । इदानीं **दीधितौ** ''वह्निसामानाधिकरण्यस्य प्रतिधूमं भिन्नत्वेऽपि धूमत्वं वह्निसामानाधिकरण्यसामान्यावच्छेदकम्'' इति द्वितीयदृष्टान्तः प्रदर्शितः। तत्र प्रथमदृष्टान्तं परित्यज्य द्वितीयदृष्टान्तप्रदर्शने हेतुमाह - **गादाधर्यां– ननु दण्डत्वस्ये**त्यादिना । अयमाशयः– अवच्छेदकत्वं द्विविधं – स्वरूपसंबन्धरूपम् अनतिरिक्तवृत्तित्वरूपं अथवा पारिभाषिकम् चेति । तत्र स्वरूपसंबन्धरूपमवच्छेदकत्वम् अन्यूनानतिरिक्तधर्मस्यैवेति नियमः । प्रकृते च पारिभाषिकमवच्छेदकत्वमेवाङ्गीक्रियते । तच्च घटाव्यवहितपूर्वकालनिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपम् । घटाव्यवहितपूर्वकालनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य तत्तद्दण्डत्वे सत्त्वेऽपि दण्डत्वे तदनवच्छेदकत्वसत्त्वात् । घटाव्यवहितपूर्वकाले दण्डो नास्तीति प्रतीत्यभावात् अर्थात् तत्तद्दण्डाभावस्य सत्त्वेऽपि दण्डसामान्याभावस्यासत्त्वात् । इदमवच्छेदकत्वमतिप्रसक्तसाधारणमिति नास्य दृष्टान्तत्वमुचितमिति शङ्कायां प्रत्येकातिप्रसक्तस्यापि सामान्यानतिप्रसक्तत्वेन सामान्यरूपावच्छिन्ननिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वे अन्यं दृष्टान्तं प्रकृतसाधकतया प्रदर्शयतीति भावः ।।

**वह्निसामानाधिकरण्यस्येति** । धूमनिष्ठस्य धूमव्यापकवह्निसामानाधिकरण्यरूपव्याप्तिघटकस्य वह्निसामानाधिकरण्यस्येत्यर्थः । वह्निसामानाधिकरण्यस्य – वह्न्यधिकरणवृत्तित्वस्य प्रतिधूमं भिन्नत्वेऽपि धूमत्वं तत्सामान्यावच्छेदकम् – वह्निसामानाधिकरण्यसामान्यावच्छेदकम्, वह्निव्याप्यतावच्छेदकमिति यावत् । धूमत्वे व्याप्यतावच्छेदकत्वानङ्गीकारे व्याप्तेः ऐक्यं दुर्घटमिति भावः ।।

## गादाधरी

**न च** व्याप्यतावच्छेदकत्वमपि स्वविशिष्टव्यापकसाध्यकत्वरूपं पारिभाषिकमेव । तच्चातिप्रसक्तसाधारणमिति न दृष्टान्तसंगतिरिति वाच्यम् ।



**साध्यसामानाधिकरण्या**वच्छेदकरूपवत्त्वं व्याप्तिः । तत्रावच्छेदकत्वं स्वरूपसंबन्धविशेषः । **अत एव** यत्र व्यर्थविशेषणघटितनीलधूमत्वादिना हेतुता तत्र व्याप्यत्वासिद्धिरिति प्राचीनमतानुसारेण एतदभिधानात् । **अन्यथा पुनः स्वरूपसंबन्धरूप**कारणत्वप्रतियोगित्वादि निरूपितमनुगतधर्मनिष्ठं स्वरूपसंबन्धरूपमवच्छेदकत्वं दृष्टान्ततया बोध्यम् । **संयोगसामान्यस्येति** । संयोगत्वरूपावच्छेद्यतावच्छेदकरूपावच्छिन्नस्य । **सुवचत्वादिति** । प्रत्येकसंयोगाद्यतिप्रसक्तस्यापि द्रव्यत्वादेः तद्रूपावच्छिन्नानतिप्रसक्तत्वादिति भावः ।।

## व्याख्या

ननु वह्निसामानाधिकरण्यरूपं यत् धूमनिष्ठं व्याप्यत्वं तदवच्छेदकत्वमपि स्वविशिष्टव्यापकसाध्यकत्वरूपं पारिभाषिकमेव । स्वं धूमत्वं स्वविशिष्टः धूमः तद्व्यापकः वह्निः तत्कत्वं धूमेऽस्तीति समन्वयः । तच्च प्रत्येकसामानाधिकरण्यशून्ये धूमत्वे संभवति । धूमसमानाधिकरणाभावाप्रतियोगि वह्निकत्वस्य तत्राक्षतत्वात् । तथा च कथमयं दृष्टान्तः इति शङ्कते– **न चेति** । मतान्तरेण तदुक्तमिति समाधत्ते– **साध्यसामानाधिकरण्येति** । साध्यसामानाधिकरण्यावच्छेदकधर्मवत्त्वं व्याप्तिः । धूमत्वं वह्निसामानाधिकरण्यावच्छेदकं, तद्वत्त्वं धूमेऽस्तीति समन्वयः । तादृशव्याप्तिघटकमवच्छेदकत्वम् स्वरूपसंबन्धविशेषः इति **प्राचीनमतानुसारेण** धूमत्वदृष्टान्तः । **अत एव** – स्वरूपसंबन्धविशेषरूपस्यावच्छेदकत्वस्य अत्र व्याप्तिशरीरे निवेशादेव ''पर्वतो वह्निमान् नीलधूमात्'' इत्यत्र नीलत्वरूपव्यर्थ विशेषणघटितस्य नीलधूमत्वस्य व्याप्यतावच्छेदकत्वं धूमत्वापेक्षया गुरुत्वात् न संभवतीति व्याप्यत्वासिद्धिः उपपादनीया । अन्यथा स्वविशिष्टव्यापकसाध्यकत्वरूपस्य पारिभाषिकावच्छेदकत्वस्य नीलधूमत्वेऽपि सत्त्वात् व्याप्यत्वासिद्धेरिति **प्राचां मतम्** अवलम्ब्य धूमत्वदृष्टान्तः **दीधितौ**

उपात्त इति भावः ।।

**अन्यथा पुनरित्यादि** । पूर्वोक्तप्राचीनरीत्यनभ्युपगमे अन्यं दृष्टान्तं ग्रन्थकाराभिमतं प्रदर्शयति– **अन्यथेति** । **स्वरूपसंबन्धरूपेति** । कारणत्वं नियतपूर्ववृत्तित्वमिति कैश्चिदुच्यते । स्वरूपसंबन्धरूपं यत् कारणत्वं तन्निरूपित-मवच्छेदकत्वमपि स्वरूपसंबन्धरूपमेव तत् । एवं स्वरूपसंबन्धरूपप्रतियोगित्व-निरूपितस्वरूपसंबन्धरूपावच्छेदकत्वं तच्च प्रकृते दृष्टान्ततया ज्ञेयमिति भावः । प्रकृते तत् योजयति– **संयोगसामान्यस्ये**त्यदिना । द्रव्यत्वादेः प्रत्येक-संयोगशून्यवृत्तित्वेऽपि अवच्छेद्यतावच्छेदकसंयोगत्वावच्छिन्नशून्यावृत्तितया संयोगावच्छेदकत्वस्यैव सत्त्वेन तदभावावच्छेदकत्वासंभवादित्यर्थः । अयमाशयः– प्रतियोग्यनवच्छेदकस्यैव अभावावच्छेदकत्वम् इति स्वीकारेऽपि– द्रव्ये संयोगसामान्याभावः न संभवति । द्रव्यत्वावच्छेदेन संयोगसामान्याभावः द्रव्यत्वस्य प्रतियोग्यनवच्छेदकत्व एव भवितुमर्हति । तत्र तत्तत्संयोगरूपप्रतियोग्यतिरिक्त-वृत्तितया द्रव्यत्वस्य तत्तत्संयोगावच्छेदकत्वासंभवेऽपि संयोगत्वावच्छिन्नानतिरिक्त-वृत्तितया द्रव्यत्वस्य संयोगत्वावच्छिन्नं प्रति अवच्छेदकत्वं संभवति इति द्रव्यत्वावच्छेदेन संयोगत्वावच्छिन्नाभावः न संभवति । यदि द्रव्यत्वं संयोगत्वा-वच्छिन्नं प्रति अनवच्छेदकं भवेत् तदैव हि द्रव्यत्वावच्छेदेन संयोगसामान्याभावो भवेत् इति भावः ।।

## गादाधरी

**यद्यप्येवमपि** प्रमेयत्वादेः संयोगसामान्यातिप्रसक्तत्वेन तत्सामान्या-वच्छेदकत्वाप्रसक्त्या **उक्तव्याप्तिबलात्** तदवच्छेदेन संयोगसामान्याभावसिद्धिर्न शक्यते वारयितुम्; तथापि **प्रतियोगिमत्संबद्धदेशकालयोरेव** प्रतियोग्यनवच्छेद-कयोरभावावच्छेदकत्वनियमः, तयोरेव तदनुभवात्; न तु प्रतियोग्यनवच्छेदकमात्रस्य,



मानाभावादित्यत्र तात्पर्यम् । द्रव्ये संयोगसामान्याभावस्य कालभेदाद्यवच्छेदेन स्वयमनुपदं व्यवस्थापनीयतया **संप्रदायविदः** इत्यनेनास्वरसः दर्शितः ।।

## व्याख्या

**यद्यपीति** । **एवमपि** = पूर्वोक्तरीत्या द्रव्यत्वावच्छेदेन संयोगसामान्या-भावासिद्धावपि प्रमेयत्वावच्छेदेन संयोगसामान्याभावस्य सिद्धिः संभवति । प्रमेयत्वस्य संयोगसामान्यशून्ये गुणादावपि सत्त्वेन अतिप्रसक्ततया संयोगसामान्यरूपप्रति-योग्यनवच्छेदकत्वेन संयोगसामान्याभावावच्छेदकत्वसंभवात् । प्रतियोग्यनवच्छेद-कस्याभावावच्छेदकत्वमिति न्यायात् । तथा च **उक्तव्याप्तिबलात्** - यत् यद्धर्माश्रयानवच्छेदकं तत् तद्धर्मावच्छिन्नाभावावच्छेदकमिति व्याप्तिबलात् प्रमेयत्वाश्रये द्रव्येऽपि संयोगसामान्याभावसिद्ध्या ''इदं संयोगि द्रव्यत्वात्'' इत्यत्र प्रतियोग्यसामानाधिकरण्यविशेषणस्य अव्याप्तिवारणफलकत्वं युज्यते; तथापि **प्रतियोगिमत्संबद्धदेशकालयोरेव** - संयोगरूपप्रतियोगिमद्वृक्षादिसंबद्धा-ग्रादिदेशकालयोरेव प्रतियोग्यनवच्छेदकयोरभावावच्छेदकत्वं, न तु प्रतियोगिता-वच्छेदकस्य सर्वस्य इति तेषामाशयः । तदुक्तमभ्युपगम्य प्रतिबन्द्यभिप्रायेण **यथा च** इत्यादिना **दीधितिकारेण** उक्तमिति भावः । परमार्थतस्तु देशकालव्यतिरिक्तयोः अव्याप्यवृत्तिप्रयोजकावच्छेदकत्वमप्रामाणिकम् । तथा च वृक्षत्वाद्यवच्छेदेन न संयोगसामान्याभावप्रसक्तिरिति दूषण एव तात्पर्यम् । शिष्टं स्पष्टम् ।।

## दीधितिः

**नवीनाः पुनः** उत्पत्तिकालावच्छेदेन घटादौ **गुणस्य** प्रलयावच्छेदेन गगनादौ संयोगस्य **सामान्याभावो वर्तते** । **तथा** धूमवत्यपि विरहो **दहनस्य** । इह पर्वते नितम्बे हुताशनो न शिखरे इति **प्रतीतेः** संयोगेन द्रव्यस्याप्यव्याप्य-

वृत्तित्वात् । **वृत्तेः** अरव्याप्यवृत्तिमत्त्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तम् **असंभावितत्वात्** ।।

### व्याख्या

हेतुसमानाधिकरणाभावे प्रतियोग्यसमानाधिकरणेति विशेषणस्य अयं कपिसंयोगी एतद्वृक्षत्वात् इत्यत्राव्याप्तिवारणमेव प्रयोजनम्, न तु इदं संयोगि द्रव्यत्वात् इत्यत्राव्याप्तिवारणमिति एतावता मध्ये संभावितबहुविचारपूर्वकं साधितं **दीधितौ गादाधर्यां च** । सर्वमिदं **प्राचीनमतानुसारेण** । अथ स्वाभिमतं नवीनमतमनुसृत्य प्रतियोग्यसमानाधिकरणेति विशेषणस्य प्रयोजनमाह– **दीधितौ नवीनाः पुनः** इत्यादिना । घटः गुणवान् द्रव्यत्वात् । अयं सद्धेतुः । यत्र यत्र द्रव्यत्वं तत्र गुणस्य कस्यापि सत्त्वात् । अत्र–अभावे प्रतियोग्यसमानाधिकरणेति विशेषणाभावे अव्याप्तिः । तथाहि - हेतोः द्रव्यत्वस्य अधिकरणे घटादौ उत्पत्तिकालावच्छेदेन गुणसामान्याभावो वर्तते, ''उत्पन्नं द्रव्यं क्षणमगुणम् अक्रियं च तिष्ठति'' इति न्यायात् । तथा च गुणसामान्याभावस्य प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं गुणत्वम् इत्यव्याप्तिः । एवं गगनं संयोगि नित्यद्रव्यत्वात् इत्यत्र हेत्वधिकरणे गगने प्रलयावच्छेदेन संयोगसामान्याभावः वर्तते । तत्प्रतियोगितावच्छेदकमेव संयोगत्वमित्यव्याप्तिः ।।

एवं पर्वतो वह्निमान् धूमात् इत्यत्र हेतुमति पर्वते संयोगसंबन्धेन वह्नयभावः शिखरावच्छेदेन वर्तते । संयोगवत् संयोगेन द्रव्यस्याप्यव्याप्यवृत्तित्वात् । तत्र प्रमाणम् ''इह पर्वते नितम्बे वह्निः न शिखरे इति प्रतीतिरेव । तथा च पर्वतवृत्तिवह्नयभावप्रतियोगितावच्छेदकमेव वह्नित्वमित्यव्याप्तिः । **वृत्तेः** = संयोगादिसंबन्धस्य अव्याप्यवृत्तित्वे वृत्तिमतः संबन्धिनः द्रव्यस्याप्यव्याप्यवृत्तित्वात् । तथा च साध्यतावच्छेदकं वह्नित्वं प्रतियोगितावच्छेदकमेवेत्यव्याप्तिः इति **दीधिति**-



**ग्रन्थस्य** भावः । एतादृशाव्याप्तिवारणाय च प्रतियोग्यसमानाधिकरणेति साध्याभावे विशेषणं देयम् । उक्तस्थलेषु साध्याभावानां प्रतियोग्यधिकरणवृत्तित्वेन प्रतियोग्यसमानाधिकरणत्वं नास्तीति नाव्याप्तिः इति **दीधिति**ग्रन्थार्थः ।।

प्राचीनानां मते ध्वंसप्रागभावयोरधिकरणे अत्यन्ताभावो नाङ्गीक्रियते । तयोः अत्यन्ताभावविरोधित्वात् । अतश्च घटादौ उत्पत्तिकालावच्छेदेन गुणप्रागभावसत्त्वात् गुणात्यन्ताभावो न भवतीत्यव्याप्त्यप्रसक्त्या **नवीनाः पुनः** इति **दीधितौ** उक्तम् ।।

### गादाधरी

**गुणस्य सामान्याभावो वर्तत** इत्यन्वयः । ध्वंसप्रागभावयोरत्यन्ताभावविरोधितायाः **निराकृतत्वादिति** भावः । एतेन तदवच्छेदेन संयोगादिसामान्याभावोऽपि सुतरां वर्तते । व्यापकधर्मावच्छिन्नाभाववति व्याप्यधर्मावच्छिन्नाभावसत्त्व नियमादिति सूचितम् ।।

**न च** उत्पत्तिकालावच्छेदेन घटादौ **गुणस्य प्रागभाव एव**, न तु सामान्यात्यन्ताभावोऽपि, मानाभावादिति वाच्यम् । तदा तत्र **जन्यैकत्व**हेतुभूतस्य एकत्वत्वा-वच्छिन्नाभावस्यावश्यकतया तस्यैव स्वसमनियतगुणत्वाद्यवच्छिन्नाभावरूपतया विवादायोगात् । **संयोगादिसाध्यकनित्यद्रव्यमात्रवृत्तिहेतुकस्थले** व्यावृत्तिदानायाह– **प्रलयेति** । **महाप्रलयस्य** जन्यभावानधिकरणतया तदानीं संयोगाद्यसत्त्वादिति भावः । तदानीं च गगनादौ नित्यैकत्वपरिमाणादिसत्त्वेन गुणसामान्याभावासत्त्वात् संयोगस्येत्युक्तम् । अत्र च प्रमाणं ''महाप्रलये गगने न संयोगः'' इत्यादि प्रामाणिकव्यवहार एव । तादृशव्यवहारस्य ध्वंसावगाहित्वे **अतिप्रसङ्गात्**, व्यवहारानादरे च अतीन्द्रियगगनादौ गोत्वाद्यभावस्य अप्रामाणिकतापत्तेः । प्रत्यक्षाद्यसंभवात्, अनुमानस्य चाप्रयोजकत्वात् ।।

## व्याख्या

**निराकृतत्वादिति** । **चतुर्दशलक्षण्यां** पूर्वापररक्तध्वंसप्रागभाववति अन्तरा श्यामे मध्यरक्तिमवति घटे रक्तं रूपं नास्तीति प्रत्ययानुरोधेन तादृशविरोधस्या प्रामाणिकतायाः **दीधितिकारेणैव** उक्तत्वादिति भावः । अव्याप्यवृत्तिसंयोग-सामान्याभावस्य गुणविशेषाभावरूपस्य सत्त्वे विवदमानान् प्रति गुणसामान्या-भावस्यापि सत्त्वोक्त्या व्यापकधर्मावच्छिन्नाभाववति व्याप्यधर्मावच्छिन्नाभाव-सत्त्वनियमात् तत्र उत्पत्तिकालावच्छिन्नघटे संयोगसामान्याभावः कैमुतिकन्यायेन सुतरां वर्तत इति सूचितमिति भावः ।।

**न चेति** । **गुणस्य प्रागभाव एवेति** । आद्यक्षणे घटे यद्यपि गुणो न संभवति । जन्यगुणं प्रति द्रव्यस्य समवायिकारणतया द्रव्योत्पत्तिद्वितीयक्षण एव गुणोत्पत्तिसंभवादिति तदा गुणाभावोऽस्ति । स तु नात्यन्ताभावः, अपि तु गुणप्रागभाव एव । तेनैवोपपत्तेः अत्यन्ताभावसत्त्वे प्रमाणाभावात् इति भावः । समाधत्ते– **जन्यैकत्वेति** । उत्पत्तिकालावच्छिन्नघटे द्वितीयक्षणे एकत्व-संख्योत्पत्त्यनुसारेण जन्यैकत्वत्वाच्छिन्नं प्रति एकत्वात्यन्ताभावः कारणतया स्वीकरणीयः । गुणत्वावच्छिन्नाभावश्च जन्यैकत्वाभावसमनियतः । समनियता-भावानामैक्यात् स एव गुणत्वावच्छिन्नाभावः । तथाच उत्पत्तिकालावच्छेदेन घटादौ जन्यैकत्वाभावसत्त्वेन तत्समनियतः गुणत्वावच्छिन्नाभावरूपः गुणसामान्या-भावोऽपि भवतीत्याशयेन **दीधितौ** घटादौ उत्पत्तिकालावच्छेदेन गुणसामान्या-भावोऽस्तीत्युक्तमिति भावः ।।

नच उत्पत्तिकालावच्छिन्नघटे रूपसामान्याभावस्य सत्त्वात् तस्य तत्समनियतगुणसामान्याभावरूपतामादाय गुणसामान्याभावसत्त्वोपपत्तौ किमर्थं जन्यैकत्वाभावानुधावनमिति वाच्यम् । वायौ रूपसामान्याभावस्य सर्वदा सत्त्वात्



तत्र च द्वितीयक्षणे गुणसामान्याभावस्यासत्त्वेन उभयोः समनियतत्वाभावात् । जन्यैकत्वाभावस्तु वायौ उत्पत्तिक्षणावच्छेदेनैव, तदा गुणसामान्याभाव इति उभयोः समनियतत्वम् । तथा च एकत्वत्वावच्छिन्नाभावः गुणसामान्या-भावसमनियतः । घटादौ उत्पत्तिकालावच्छेदेन एकत्वत्वावच्छिन्नाभावसत्त्वात् तत्समनियतः गुणसामान्याभावोऽस्तीति तात्पर्यम् । अत्र एकत्वशब्देन एक त्वसंख्यारूपो गुणः विवक्षितः ।।

**संयोगादिसाध्यकेति** । गगनं संयोगि नित्यद्रव्यत्वात्, अथवा परममह-त्परिमाणवत्त्वात् इत्यत्र गगने संयोगसामान्याभावः प्रलयावच्छेदेन वर्तते । तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं संयोगत्वमित्यब्याप्तिः इति भावः । **नित्यद्रव्यमात्रवृत्तिहेतुकेति** । अनित्यद्रव्यसाधारणस्य द्रव्यत्वस्य हेतुत्वे, हेत्वधिकरणस्य अनित्यद्रव्यस्य प्रलयकाले विनाशात् प्रलयावच्छेदेन तत्र संयोगसामान्याभावः न संभवतीति नित्यद्रव्यमात्रवृत्तीति हेतुविशेषणमिति भावः । गगनस्य नित्यत्वेन उत्पत्तिकालाभावात् उत्पत्तिकालावच्छेदेनेत्यनुक्त्वा प्रलयावच्छेदेनेत्युक्तम् । तदेव स्पष्टयति– **महाप्रलयस्येति** । **अति-प्रसङ्गादिति** ।।

## गादाधरी

वह्निमान् धूमादित्यत्र व्यावृत्तिदानायाह– **तथेति** । **दहनस्य** = दहनत्वावच्छिन्नस्य । प्रतीतेरित्यन्तं द्रव्यस्याव्याप्यवृत्तित्वादित्यत्र हेतुः । प्रत्यक्षप्रमाणमुक्त्वा युक्तिमाह– **वृत्तेरिति** । संयोगरूपसंबन्धस्येत्यर्थः । **असंभावितत्वादिति** । अयमाशयः– **संबन्धिसत्तायाः संबन्धाधीनत्वात्** यदवच्छेदेन संबन्धो नास्ति **तदवच्छेदेन तत्संबन्धावच्छिन्नतदभाव-सत्त्वमावश्यकम्** । **संयोगादेः संबन्धस्य समवायस्य** व्याप्यवृत्तित्वेऽपि न

संयोगादेर्व्याप्यवृत्तिता । गुणादौ समवायसत्त्वेऽपि संयोगाद्यसत्त्ववत् संयोगाद्यन-वच्छेदकावच्छिन्ने संयोगादिमति तत्समवायसत्त्वेऽपि तदभावोपपत्तेरिति ।।

**केचित्तु** वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतोऽव्याप्यवृत्तित्ववत् वृत्तेर्व्याप्यवृत्तित्वे वृत्तिमतोऽपि व्याप्यवृत्तित्वम्, युक्तितौल्यात् । संयोगादिप्रतियोगिकत्वविशिष्ट-समवायो न व्याप्यवृत्तिः इत्याहुः ।।

**व्याख्या**

**संयुक्तस्य** = संयोगसंबन्धेन विद्यमानस्य वह्नेः व्याप्यवृत्तितायाः असंभवात् पर्वतादौ शिखरावच्छेदेन संयोगसंबन्धावच्छिन्नवह्न्यभावस्य सत्त्वात् अव्याप्तिरिति भावः । **संबन्धिसत्तायाः** पर्वते संयोगसंबन्धप्रतियोगिवह्निसत्तायाः **संबन्धाधी-नत्वात्** = पर्वते वह्निसंयोगाधीनत्वात् **यदवच्छेदेन** = शिखरावच्छेदेन **संबन्धो नास्ति** = वह्निसंयोगो नास्ति **तदवच्छेदेन** = शिखरावच्छेदेन **तत्संबन्धा-वच्छिन्नतदभावसत्त्वम्** = संयोगसंबन्धावच्छिन्नवह्निनिष्ठप्रतियोगिताका-भावसत्त्वम् आवश्यकम् ।।

ननु संयोगि द्रव्यत्वात् इत्यत्र संयोगस्य कथम् अव्याप्यवृत्तित्वम् । संयोगस्य यः संबन्धः समवायः तस्य व्याप्यवृत्तित्वात् समवायसंबन्धिनः संयोगस्य व्याप्यवृत्तितायाः आवश्यकत्वात् इत्यत्राह– **संयोगादेः संबन्धस्य सम-वायस्येति** । संयोगप्रतियोगिकसमवायसंबन्धस्येत्यर्थः । तथा च समवायस्य एकत्वात् गुणादौ सत्त्वेऽपि संयोगो यथा नास्ति तद्वत् पर्वते नितम्बावच्छेदेन वह्निमति वह्निसंयोगवति वह्निसंयोगसमवायसत्त्वेऽपि संयोगानवच्छेदकशिखरावच्छेदेन वह्निसंव्योगाभावो भवितुमर्हतीति भावः ।।

अत्रैव विषये मतान्तरमाह– **केचितु** इत्यादिना । **वृत्तेः** संबन्धस्य अव्याप्यवृत्तित्वे संबन्धिनः अव्याप्यवृत्तित्ववत् **वृत्तेः** संबन्धस्य व्याप्यवृत्तित्वे



संबन्धिनोऽपि व्याप्यवृत्तित्वम्, समानयुक्तिकत्वात् । परं तु संयोगप्रतियोगिकत्व-विशिष्टसमवायः न व्याप्यवृत्तिः । तथा च पूर्वोक्तरीत्या पर्वते शिखरे वह्निसंयोग-प्रतियोगिकसमवायसत्त्वेऽपि वह्निसंयोगप्रतियोगिकत्वविशिष्ट समवायो नास्ति । अतस्तेन संबन्धेन वह्निसंयोगाभावः पर्वते अस्तीति कृत्वा संयोगवतो वह्नेरभावाः भवितुमर्हतीति भावः ।।

समवायैकत्ववादिभिः वायौ स्पर्शसमवायसत्त्वे रूपसमवायस्यापि सत्त्वात् वायू रूपवानिति बुद्धिः कुतो नेति शङ्कायां रूपप्रतियोगिकत्वविशिष्टसमवायो नास्तीति तथा बुद्धिर्न भवतीति समाधीयते ।–तद्वत् अत्रेति सारम् ।।

**दीधितिः**

एवं प्रतियोगिमतोरपि देशकालयोः देशकालावच्छेदेन तदभावः । तथा च तत्तत्साध्यकाव्याप्तिवारणाय तदुपादानम् ।।

**गादाधरी**

**वह्निमान्** धूमात् इत्यादौ कालविशेषावच्छेदेन **हेतुमति** वर्तमानं कालिकसंबन्धावच्छिन्नाभावमादाय घटत्ववान् कालत्वात् इत्यादौ पटाद्यवच्छेदेन काले वर्तमानं कालिकसंबन्धावच्छिन्नाभावमादाय च व्यावृत्तिदानायाह– **एवमिति** । **प्रतियोगिमतो देशस्य प्रतियोग्यनधिकरणकालावच्छेदेन प्रतियोगिमतः कालस्य** च **प्रतियोग्यनधिकरणदेशावच्छेदेन अभाव-वत्त्वमित्यर्थः** । इदानीमत्र घटो नास्तीत्यादिप्रत्यये देशनिष्ठायाः कालावच्छिन्ना-धारतायाः, कालनिष्ठायाःदेशविशेषावच्छिन्नाया अधिकरणताया वा विषयत्वमित्यत्र विनिगमनाविरहात् उभयस्यैव विषयत्वादिति भावः ।।

**तत्तत्साध्यकेति** । गुणत्वाद्यवच्छिन्नसाध्यकद्रव्यत्वाद्यव्याप्तिवारणा-येत्यर्थः । **तत्**– असमानाधिकरणान्तम् ।।

## व्याख्या

एवं प्रतियोगिमतोऽपीति दीधितिग्रन्थमवतारयति– **वह्निमान्** इत्यादिना । पर्वतो वह्निमान् धूमात् इत्यत्र **हेतुमति** = धूमवति पर्वते उत्पत्ति-कालावच्छेदेव संयोगसंबन्धावच्छिन्नवह्न्यभावः वर्तते । तमादाय अव्याप्तिः । एवं अयं घटत्ववान् कालत्वात् इत्यत्र हेतुमति काले पटावच्छेदेन कालिकसंबन्धा-वच्छिन्नघटत्वाभावो वर्तते । तत्तदभावप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं वह्नित्वं घटत्वत्वं चेत्यव्याप्तिः । तद्वारणाय हेतुमद्वृत्त्यभावे प्रतियोग्यसमानाधिकरणेति विशेषणं देयम् । उक्ताभावयोः, हेतुमति प्रतियोग्यधिकरणे वृत्तित्वात् प्रतियोग्य-सामानाधिकरण्यं नास्तीति लक्षणाघटकतया नाव्याप्तिरिति भावः ।।

**प्रतियोगिमतः देशस्य**– वह्निमान् धूमात् इत्यत्र वह्निमतः पर्वतस्य **प्रतियोग्यनधिकरणकालावच्छेदेन** = वह्न्यनधिकरणोत्पत्तिकालावच्छेदेन **अभाववत्त्वम्** वह्न्यभाववत्त्वम् । **प्रतियोगिमतः कालस्य** घटत्ववान् कालत्वात् इत्यत्र कालिकसंबन्धेन घटत्ववतः कालस्य **प्रतियोग्यनधिकरणदेशावच्छेदेन**– घटत्वानधिकरणपटावच्छेदेन **अभाववत्त्वम्** – घटत्वाभाववत्त्वम् । तदुपपादयति– इदानीमत्र घटो नास्तीत्यादिप्रत्यये अत्रपदोपात्तायां देशनिष्ठाधारतायां इदानींपदबोध्यकालावच्छिन्नत्वं बोध्यते, तथैव तत्र इदानींपदोपात्तायां कालनिष्ठायां आधारतायां अत्रपदबोध्यदेशावच्छिन्नत्वं बोध्यते ।।

पश्चादपि **दीधितौ** वक्ष्यति– ''देशे कालस्येव काले देशस्याप्य-वच्छेदकत्वात्'' इति ।।

''प्रतियोगिमतोरपि देशकालयोः देशकालावच्छेदेन तदभावः'' इति दीधितिवाक्ये यथासंख्यान्वयभ्रमवारणय भट्टाचार्यैः तद्वाक्यं विवृतम् ।।



अयमाशयः– इदानीमत्र घटो नास्तीति प्रत्यये सप्तम्याः आधारत्वम् अवच्छेदकत्वं चार्थः । देशकालयोरूभयोरपि आधारत्वमवच्छेदकत्वं चोभय-मस्ति । परं तु एकस्य आधारत्वम् अपरस्य अवच्छेदकत्वमित्यत्र नियामकाभावात्, कालावच्छिन्नदेशनिष्ठाधारतायाः देशावच्छिन्नकालनिष्ठाधारतायाश्च तादृशप्रतीति-विषयत्वमिति भावः । तथा च प्रतियोगिमति देशे कालावच्छिन्नाभावः प्रतियोगिमति काले देशावच्छिन्नाभावश्च तादृशप्रतीत्या सिध्यतीति ।।

**तत्तत्साध्यकेति** । गुणवान् द्रव्यत्वात्, वह्निमान् धूमात् इत्यादौ हेत्वधिकरणेऽपि साध्याभावसत्त्वात् तमादायाव्याप्तिवारणाय मूले प्रतियोग्यसमानाधि-करणत्वमभावविशेषणमुपात्तम् । तदुपादाने च उक्ताभावानां प्रतियोगिसमानाधि-करणत्वान्न तानादाय दोषप्रसक्तिरिति भावः ।।

## दीधिति :

**नोपादेयं** च सर्वथैव व्याप्यवृत्तिसाध्यके तत् । साध्यादिभेदेन व्याप्तेर्भेदादिति वदन्ति ।।

## गादाधरी

**अव्याप्यवृत्तिसाध्यके** प्रतियोगिवैयधिकरण्याघटितव्याप्तेरप्रसिद्ध्या तद्घटितैव व्याप्तिः । **व्याप्यवृत्तिसाध्यके** तु प्रतियोगिवैयधिकरण्यानुपस्थिति-दशायामपि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावग्रहात् अनुमित्युत्पत्त्या प्रतियोगिवैयधिकरण्याघटितापि व्याप्तिरस्ति । प्रतियोगिवैयधि-करण्यघटितव्याप्तिरुभयत्रैव प्रसिद्धा अनुमितिप्रयोजिका चेत्याशयेन मूलकृतस्त-दुपादानमित्याह– **नोपादेयमिति** । व्याप्यवृत्तिसाध्यके सार्वत्रिकमुपादानं प्रतिक्षिप्तम् । न तु अनुपादानस्य सार्वत्रिकत्वमुक्तम् । व्याप्यवृत्तेरपि साध्यस्य

अव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानादेव अनुमित्युपगमात् ।।

**व्याप्यवृत्तिसाध्यके** सर्वत्र तादृशविशेषणोपादानानियमः, तदघटिताया अपि व्याप्तेः सर्वत्रानुमित्यौपयिकत्वात् । अव्याप्यवृत्तिसाध्यके तु सर्वत्र तदुपादाननियम एव । तदघटितव्याप्तेरप्रसिद्धेरिति वा अर्थः ।।

## व्याख्या

**दीधितौ नोपादेयमिति** । व्याप्यवृत्तिसाध्यके ''सत्तावान् जातेः'' ''द्रव्यं गुणवत्त्वात्'' इत्यादौ प्रतियोगिवैयधिकरण्याघटितव्याप्तिः संभवति । तथाहि– हेतोःजातेः अधिकरणे द्रव्यगुणकर्मसु योऽभावः सत्तायाः अभावः न संभवति, तेषु सत्तायाः सत्त्वात् तदभावासंभवात्, अपि तु द्रव्यत्वाद्यभावः तत्प्रतियोगितावच्छेदकं द्रव्यत्वत्वादि तदनवच्छेदकत्वं साध्यतावच्छेदके सत्तात्वेऽस्तीति साध्याभावे प्रतियोगिवैयधिकरण्याघटितापि व्याप्तिस्तत्र संभवति। अव्याप्यवृत्ति-साध्यके ''कपिसंयोगी एतद्वृक्षत्वात्'' इत्यादौ हेत्वधिकरणे वृक्षे मूलावच्छेदेन कपिसंयोगाभावस्य सत्त्वात् तत्प्रतियोगितावच्छेदकमेव कपिसंयोगत्वमिति प्रति योगिवैयधिकरण्यघटितैव व्याप्तिः संभवतीति स्थितिः। व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याघटितापि व्याप्तिरस्तीति ''अपि''शब्द-प्रयोगात् प्रतिव्यधिकरणत्वघटितव्याप्तिरपि वर्तते । तथा हि – सत्ताधिकरणे द्रव्यगुणकर्मसु प्रतियोगिव्यधिकरणः अभावः सत्ताभावभिन्नोऽभावः द्रव्यत्वाद्यभावः तत्प्रतियोगितानवच्छेदकत्वस्य सत्तात्वे सत्त्वात् । एवं च अव्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्यघटितैव व्याप्तिः, व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्यघटिता तदघटिता च व्याप्तिः वर्तते । सर्वमिदमालोच्य **दीधितौ नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके तत्** इत्युक्तम् । तदाह– **गादाधर्यां अव्याप्यवृत्तिसाध्यक**



इत्यादिना । सार्वत्रिकमुपादानं प्रतिक्षिप्तमिति । पुनः स्पष्टीक्रियते । मूलकृता **मणिकारेण** सर्वसाधारणव्याप्तौ प्रतियोग्यसमानाधिकरणेति अभावविशेषण-दानमसंगतम्, व्याप्यवृत्तिसाध्यके तदनावश्यकत्वात् इति शङ्कां परिहर्तुं ''नोपादेयं च'' इत्यारम्भः इति प्रतिपादयितुं गूढतात्पर्यप्रकाशनेन **नोपादेयमित्यादिदीधिति-ग्रन्थमवतारयति– अव्याप्यवृत्तिसाध्यक** इति । कपिसंयोगी एतद्वृक्षत्वात् इत्यादौ प्रतियोगिवैयधिकरण्याघटितव्याप्तिरेव न प्रसिध्यतीति तादृशस्थले नियमेन प्रतियोगिवैयधिकरण्यघटितैव व्याप्तिः । व्याप्यवृत्तिसाध्यके तु सत्तावान् जातेः इत्यादौ साध्यस्याव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्याघटितव्याप्ति-ज्ञानासंभवात् तद्घटितापि व्याप्तिः । तादृशभ्रमाभावे तु तदघटितापीति उभयथापि प्रतियोगिवैयधिकरण्यघटितव्याप्तिः उभयत्र संभवति, अनुमितिप्रयोजिकापि भवति । न तु प्रतियोगिवैयधिकरण्याघटिता तथा भवतीति सर्वत्र व्याप्तौ तद्विशेषणं मूलकृत इति विशदीकरोति– **नोपादेयमित्यादिनेति** भावः ।।

**नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके तदिति दीधितेः** द्वेधा अर्थः संभवति । अव्याप्यवृत्तिसाध्यके सर्वथैव नोपादेयम् इति अनुपादानस्य सार्वत्रिकत्व-मेकोऽर्थः । सर्वथा उपादेयमिति न इति योजनया तत्र सार्वत्रिकोपादानप्रतिक्षेप इत्यपरः । तत्र कोऽर्थो विवक्षित इति शङ्कायामाह– **व्याप्यवृत्तिसाध्यक** इति । अन्यतरविवक्षायामाह– **नोपादेयं चेति** यथाश्रुतमूलात् प्रतियोगिवैयधि-करण्याघटितापि व्याप्तिरस्तीत्येव लभ्यते । तथा च सैव कुतो न दर्शिता मूले इति न्यूनतापरिहाराय प्रकारान्तरेणार्थं वर्णयति– **व्याप्यवृत्तीति** । व्याप्यवृत्तिसाध्यके सर्वथा तादृशविशेषणं न देयमेव । तदघटिताया एव व्याप्तेः तत्र सर्वत्रानुमिति-प्रयोजकत्वात् । अव्याप्यवृत्तिसाध्यके तु सर्वत्रोपादाननियमः । तदघटितव्याप्ते-स्तत्राप्रसिद्धेः । एवं च पूर्वं कदाचित् उपादानं व्याप्यवृत्तिसाध्यके कदाचिच्च

नेति रीत्या अर्थवर्णनेन उभयत्रापि प्रतियोगिवैयधिकरण्यघटितव्याप्तिसद्भावाभिप्रायेण मूले तथोक्तमिति **नोपादेयम्** इत्यस्यार्थ उक्तः ।।

इदानीं तु व्याप्यवृत्तिसाध्यके सर्वत्रानुपादानमेवेति प्रतियोगिवैयधिकरण्याघटितव्याप्तिसद्भावोऽपि मूलकृदभिमत इति भावः ।।

## गादाधरी

**व्याप्यवृत्तिसाध्य**कत्वं च **स्वसमानाधिकरणा**भावाप्रतियोगिसाध्यकत्वम्। सत्तावान् द्रव्यत्वात्, कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववान् आत्मत्वात् इत्यादिकं च **न तथा** । अतस्तत्र साध्यवति कालात्मादौ कालिकदैशिकविशेषणताभ्यां तदभावसत्त्वात् प्रतियोगिवैयधिकरण्याविशेषितहेतुसमानाधिकरणाभावाप्रतियोगित्वस्य साध्ये असत्त्वेन व्याप्तेः प्रतियोगिवैयधिकरण्यघटितत्वेऽपि **न दोषः** ।।

## व्याख्या

नन्वत्र सत्तावान् द्रव्यत्वात् इत्यादौ निरवच्छिन्नवृत्तिकसत्तादिसाध्यके हेत्वधिकरणकालादौ कालिकसंबन्धेन सत्ताभावमादायाव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यविशेषणमावश्यकमिति शङ्कायामाह– **व्याप्यवृत्तीति । स्वसमानाधिकरणेति ।** निरवच्छिन्नवृत्तिकत्वेऽपि सत्तायाः स्वसमानाधिकरणाभावाप्रतियोगित्वरूपव्याप्यवृत्तित्वाभावात् न क्षतिरिति भावः । ननु व्याप्यवृत्तिसाध्यके यदि प्रतियोग्यसामानाधिकरण्यं न निवेश्यते तदा सत्तावान् द्रव्यत्वात् इत्यत्राव्याप्तिः। अत्र साध्यस्य सत्तायाः अनवच्छिन्नवृत्तिकत्वरूपं व्याप्यवृत्तित्वमस्ति । द्रव्यत्वरूप हेतुमति काले कालिकसंबन्धेन सत्ताभावस्य सत्त्वात् तत्प्रतियोगित्वमेव साध्ये सत्तायामस्तीति अव्याप्तिः । अतः अत्राव्याप्तिवारणाय अभावे



प्रतियोगिवैयधिकरण्यं निवेशनीयम् । तन्निवेशे च हेत्वधिकरणे काले सत्तारूपप्रतियोगिनः सत्त्वात् तत्र विद्यमानः सत्ताभावः प्रतियोगिसमानाधिकरण इति न तमादायाव्याप्तिः । एवं आत्मा कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववान् आत्मत्वादित्यत्र साध्याभावः आकाशाभावः हेत्वधिकरणे स्वरूपसंबन्धेन वर्तत इति तत्प्रतियोगित्वमेव साध्ये आकाशाभावनिष्ठकालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावेऽस्तीत्यव्याप्तिः । तद्वारणाय अभावे प्रतियोगिवैयधिकरण्यं निवेशनीयम् । तथा च व्याप्यवृत्तिसाध्यकस्थले प्रतिवैयधिकरण्या घटिता व्याप्तिः इति कथं संगच्छते इति शङ्कायामाह– **व्याप्यवृत्तिसाध्यकत्वं चेति** । प्रकृते व्याप्यवृत्तिसाध्यकत्वं नानवच्छिन्नवृत्तिकसाध्यकत्वम् । अपितु स्वाधिकरणवृत्त्यभावाप्रतियोगिसाध्यकत्वं तत् । सत्तावान् द्रव्यत्वात् इत्यत्र हेत्वधिकरणे काले सत्ताभावः कालिकसंबन्धेन वर्तते, तथा तत्प्रतियोगिसत्तापि तत्र समवायसंबन्धेन वर्तते इति तत्रत्यहेतुः स्वाधिकरणवृत्त्यभावप्रतियोगिसाध्यकः, न तदप्रतियोगिसाध्यकः । एवं कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभाववान् आत्मत्वात् इत्यत्र हेत्वधिकरणे आत्मनि आकाशाभावरूपः साध्यभावः, तत्प्रतियोगी कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावश्च स्वरूपसंबन्धेन वर्तत इति तत्रत्यहेतुः स्वप्रतिसामानाधिकरणाभावप्रतियोगिसाध्यकः न तदप्रतियोगिसाध्यक इति स्थलद्वयेऽपि हेत्वोः उक्तव्याप्यवृत्तिसाध्यकत्वाभावात् तत्र अभावे प्रतियोगिवैयधिकरण्यघटितैव व्याप्तिः संभवतीति नोपादेयमित्युक्तिः संगच्छत इति भावः ।।

**स्वसमानाधिकरणेति** । स्वं = हेतुसमानाधिकरणाभावः । **न तथा** = हेतुः न व्याप्यवृत्तिसाध्यकः । **न दोषः** = नोपादेयमित्युक्तिः न संगच्छते इत्यापादनरूपो दोषो न प्रसजति ।।

## गादाधरी

**केचित्तु**– व्याप्यवृत्तिसाध्यकत्वं **यथाश्रुतमेव,** हेतुमति अभावस्य दैशिकविशेषणतया वृत्तिर्विवक्षणीया । अतो हेतुमति कालादौ कालिकविशेषणतादिना साध्याभावसत्त्वेऽपि नाव्याप्तिः । भावस्याप्यभावत्वेन दैशिकविशेषणतया वृत्तिः प्रामाणिकी । अतो नाभावसाध्यकव्यभिचारिणि अतिव्याप्तिः ।।

**यादृश**प्रतियोगितानिरूपकाभावत्वविशिष्टस्य दैशिकविशेषणतया हेतुमति वृत्तिः तादृशप्रतियोगितानवच्छेदकत्वविवक्षया कालिकसंबन्धावच्छिन्नप्रतियोगिता-काकाशाभावाभाववान् आत्मत्वात् इत्यादौ अव्याप्तेः निरासः । तत्राकाशाभावस्य आकाशाभावत्वेनैव दैशिक विशेषणतया आत्मनि वृत्तिः, **न तु उक्त**साध्यता-वच्छेदकावच्छिन्न प्रतियोगिताकत्वेन । आत्मनि **तादृशाभावा**भावो नास्तीत्य-प्रतीतेः ।।

अव्याप्यवृत्तिसाध्यकेऽपि संयोगाभाववान् नित्यगुणत्वात् इत्यादौ अनुमित्यौ-पयिकद्विविधव्याप्तेः संभवात् सर्वथैवेत्युक्तम् । तावतापि अव्याप्यवृत्तिसाध्यकेऽपि क्वचित् तदघटितव्याप्तेः संभव इति सूचितमिति आहुः ।।

## व्याख्या

अवच्छिन्नवृत्तिकान्यत्वरूपं व्याप्यवृत्तित्वमेव स्वीकृत्य यथाश्रुतरीत्या मूलं व्याचक्षाणानां मतमाह– **केचित्तु** इति । **यथाश्रुतमेवेति** । निरवच्छिन्नवृत्तिकत्वं वा अवच्छिन्नवृत्तिकान्यत्वं वा व्याप्यवृत्तित्वम् । अभावे हेतुमद्वृत्तित्वं यत् विशेषणं तत्र वृत्तित्वे स्वरूपसंबन्धावच्छिन्नत्वं निवेश्यते । एवं च हेतुमन्निरूपित-स्वरूपसंबन्धावच्छिन्नवृत्तित्वाश्रयाभाव प्रतियोगितानवच्छेदकसाध्यतावच्छेदका-वच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । सत्तावान् द्रव्यत्वात् इत्यत्र द्रव्यत्वरूप-हेत्वधिकरणे काले कालिकसंबन्धेन सत्ताभावस्य सत्त्वेऽपि स्वरूपसंबन्धेन



वृत्तित्वाभावात् सत्ताभावो न लक्षणघटकः । अपि तु घटाद्यभावः तदप्रतियोगित्वं सत्तायामस्तीति नाव्याप्तिः ।।

नन्वेवमपि अभावसाध्यकव्यभिचारिणि घटत्वाभाववान् मेयत्वादित्यत्र हेतुमति घटे साध्याभावस्य घटत्वाभावाभावस्य घटत्वरूपस्य स्वरूपसंबन्धेन वृत्तित्वाभावात् अभावान्तरमादाय तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके घटत्वाभावत्वेऽस्तीति अतिव्याप्तिः स्यादित्याशङ्क्य भावरूपस्यापि घटत्वरूपस्यापि घटत्वाभावाभावस्य घटत्वाभावाभावत्वेन स्वरूपसंबन्धेन वृत्तिः प्रामाणिकी । अतस्तस्यापि लक्षणघटकतया तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं घटत्वा भावत्वमिति नातिव्याप्तिः ।।

नन्वेवमपि कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववान् आत्मत्वात् इत्यत्र साध्याभावस्य आकाशाभावरूपस्य केवलान्वयितया स्वरूप-संबन्धेन आत्मन्यपि सत्त्वात् अव्याप्तिरित्यत आह–**यादृशेति** । यादृशप्रतियोगिता-निरूपकाभावत्वविशिष्टस्य स्वरूपसंबन्धेन हेतुमति वृत्तिः तादृशप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति विवक्ष्यते । उक्तस्थले साध्याभावः आकाशाभावनिष्ठकालिकसंबन्धावच्छिन्न । प्रतियोगिताकाभावाभावः, आकाशाभावस्वरूपः । तन्निरूपिता प्रतियोगिता द्वयी एका गगननिष्ठा । अन्या कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावा-भावनिष्ठा । तत्र यादृशप्रतियोगिता इत्यनेन यदि आकाशनिष्ठा प्रतियोगिता गृह्येत तदा तन्निरूपकाभावस्य आकाशाभावस्य स्वरूपसंबन्धेन वृत्तितया अव्याप्तिः स्यादपि । परंतु साध्यनिष्ठा = कालिकसंबन्धावच्छिन्नप्रतियोगिताका-काशाभावाभावनिष्ठा प्रतियोगिता यादृशप्रतियोगिता इत्यनेन गृह्यते तन्निरूपका-भावत्वेन सः अभावः स्वरूपसंबन्धेन आत्मनि नास्ति । आत्मनि आकाशाभाव-

निष्ठकालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावो नास्तीति प्रतीत्यभावात् । तथा च साध्याभावः उक्तरूपेण, स्वरूपसंबन्धेन आत्मनि नास्तीति साध्याभावः न लक्षणघटकः हेतुमद्वृत्तिः अभावः, अपि तु अभावान्तरमेव । तदप्रतियोगित्वं साध्ये वर्तत इति नाव्याप्तिरिति भावः । **न तु उक्तेति** । उक्तं यत् साध्यतावच्छेदकं आकाशाभावनिष्ठकालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वं तदवच्छिन्नप्रतियो-गिताकाभावत्वेनेत्यर्थः । **तादृशाभावः** = कालिकसंबन्धावच्छिन्न प्रतियोगिताका-काशाभावाभावो नास्तीत्यप्रतीतेः इत्यर्थः ।।

एवं च व्याप्यवृत्तिसाध्यके नोपादेयमित्युक्तौ अव्याप्यवृत्तिसाध्यके सर्वत्र उपादेयमिति प्रतीयेत, बाधकाभावात् । सर्वथा इत्युक्तौ तु अव्याप्यवृत्तिसाध्यके क्वचित् उपादेयम् क्वचित् नोपादेयमित्यर्थो लभ्येत । तथा च अव्याप्यवृत्तिसाध्यके द्विविधव्याप्तिसत्त्वं प्रतीयेत । तच्च आवश्यकम् । अयं संयोगाभाववान् नित्यगुणत्वात् । परममहत्त्वादिरूपः नित्यगुणः पक्षः । तत्र संयोगो नास्ति । गुणे गुणानङ्गीकारात् । अतोऽयं सद्धेतुः । साध्यः संयोगाभावश्च अव्याप्यवृत्तिः । अत्र हेतुमति नित्यगुणे साध्याभावः संयोगाभावाभावः संयोगरूपः नास्ति । गुणे गुणानङ्गीकारात् । अतोऽभावान्तरमादाय लक्षणसमन्वयसंभवात् अव्याप्तिविरहेण प्रतियोगिवै-यधिकरण्याघटितव्याप्तेरपि संभवात् । अतः सर्वथा इत्युक्तम् । तथा च अव्याप्य-वृत्तिसाध्यके प्रतियोगिवैयधिकरण्योपादानानियमसूचनात् मूलोक्तविशेषणेनैवोपपत्तौ हेत्वधिकरणवृत्तौ संबन्धविशेषनिवेशः व्यर्थ इत्यस्वरसः **आहुः** इत्यनेन सूचितः ।।

## गादाधरी

**यत्तु**– "**व्याप्यवृत्तिसाध्यके** = अव्याप्यवृत्तित्वग्रहाविषयसाध्यके सर्वथैवासमानाधिकरणान्तस्य अनुपादेयता । तत्र **लाघवेन** प्रतियोग्यसामानाधि-करण्याघटितव्याप्तेरेवानुमानाङ्गतास्वीकारात्" इति व्याख्यानम्;



**तदसत्** । तत्रापि शब्दादिना प्रतियोग्यसामानाधिकरण्यघटितव्याप्तेरेव यदा ग्रहः, तदा अनुमितेः उत्पादाय तादृशव्याप्तेरनुमानाङ्गत्वस्योपगन्त-व्यत्वात् । **अन्यथा यादृशव्यतिरेकिसाध्ये** न केवलान्वयित्वभ्रमः तादृशसाध्यके लाघवेन साध्याभाववदवृत्तित्वमात्रस्यैव व्याप्तित्वोपगमप्रसङ्गात्, **केवलान्वयिनो** यस्य साध्यस्य न व्यतिरेकित्वभ्रमविषयता तत्साध्यके हेतुसामानाधिकरण्य **विशेषण**परित्यागस्यापि प्रसङ्गाच्च ।।

## व्याख्या

अन्ये तु साध्ये अव्याप्यवृत्तित्वाग्रहदशायां प्रतियोगिवैयधिकरण्य-घटितव्याप्तेरनुमित्यनङ्गत्वं वदन्ति । तन्मतमाह– **यत्तु** इत्यादिना । **दीधितिस्थस्य व्याप्यवृत्तिसाध्यके** इत्यस्य तात्पर्यवशात् अव्याप्यवृत्तित्वग्रहाविषयसाध्यके इत्यर्थः । **लाघवेनेति** । प्रतियोगिवैयधिकरण्योपस्थित्यकल्पनरूपलाघ-वेनेत्यर्थः । एवं च एतन्मते वस्तुतः अनुमानं व्याप्यवृत्तिसाध्यकं वा अव्याप्य-वृत्तिसाध्यकं वा भवतु । तत्र साध्यस्य अव्याप्यवृत्तित्वज्ञानाभावे प्रतियोगिवै-यधिकरण्याघटितव्याप्तिज्ञानमेव कारणम् । तदा हेत्वधिकरणे साध्याभावसत्त्वज्ञाना-भावात् अभावान्तरमादायैव साध्ये हेतुव्यापकत्व ज्ञानसंभवात् = हेत्वधिकरण-वृत्त्यत्यन्ताभावाप्रतियोगित्वज्ञानसंभवात् इति भावः ।।

तन्मतं दूषयति– **तदसदिति** । यदा साध्ये अव्याप्यवृत्तित्वग्रहो नास्ति, तदानीं केनचित् प्रतियोगिवैयधिकरण्यघटिततत्स्थलीयव्याप्तिबोधकं शब्दं कश्चित् प्रयुङ्क्ते चेत् तच्छ्रवणजन्यतादृशव्याप्तिज्ञानात् अनुमितिर्जायते । तन्निर्वाहाय तादृशस्थलेऽपि प्रतियोगिवैयधिकरण्यघटितव्याप्तेरेवानुमानाङ्गत्वावश्यकत्वात् इति भावः ।।

ननु शब्दाधीनप्रतियोगिवैयधिकरण्यघटितव्याप्तिग्रहो यस्य भवति, तस्य "अधिकं तु प्रविष्टं चेत् न तत् हान्यै" इति न्यायेन यत् व्याप्तिज्ञानमस्ति तस्मिन् प्रतियोगिवैयधिकरण्यविषयकत्वसत्त्वेऽपि तादृशविषयतायाः परामर्शनिष्ठ-कारणतावच्छेदकत्वं नाङ्गीक्रियते इति नोक्तदूषणमित्यत्राह– **अन्यथेति** । तादृशस्थले प्रतियोग्यसामानाधिकरण्यं विनापि हेतुसमानाधिकरणेत्यादिव्याप्तेः अनुमितिप्रयोजकत्वं स्वीकृत्य लाघवमात्रानुसारेण क्वचित् यदि प्रतियोग्यसामानाधिकरण्यरूप-विशेषणत्यागः, तदा सिद्धान्तविरोध इत्याशयेनाह– **यादृशव्यतिरेकिसाध्य** इति । यत्र व्यतिरेकिणः अत्यन्ताभावप्रतियोगिनः साध्यस्य वह्न्यादेः अत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वभ्रमः तत्र साध्याभाववदवृत्तित्व-रूपव्याप्तिज्ञानासंभव इति हि हेतुसमानाधिकरणेत्यादिव्याप्तिस्वीकारः । यदि यत्र साध्ये अव्याप्यवृत्तित्वज्ञानं न जातं तत्र लाघवात् प्रतियोग्यसामानाधि-करण्याघटित– हेतु समानाधिकरणेत्यादिव्याप्तिज्ञानस्य हेतुत्वमुच्यते, तदा तुल्ययुक्त्या यत्र व्यतिरेकिसाध्यके न केवलान्वयित्वभ्रमः, तत्र लाघवात् साध्याभाववद-वृत्तित्वरूपव्याप्तिज्ञानस्यैव कारणत्वं, न तु हेतुसमानाधिकरणेत्यादिसिद्धान्त-व्याप्तिज्ञानस्य इत्यपि वक्तुं शक्यत्वात् सर्वत्र सिद्धान्तव्याप्तिस्वीकारविलयप्रसङ्ग इति भावः ।।

अपि च व्यतिरेकिसाध्यके वह्निमान् धूमात् इत्यादाविव केवलान्वयिसाध्यके इदं वाच्यं ज्ञेयत्वात् इत्यादौ क्वचित् सिद्धान्तव्याप्तिज्ञानस्य कारणत्वं न संभवतीत्याह– **केवलान्वयिन** इति । यस्य केवलान्वयिनः वाच्यत्वादेः अत्यन्ता-भावप्रतियोगित्वरूपव्यतिरेकित्वभ्रमविषयत्वं नास्ति तत्र लाघवेन हेतुसामानाधि-करण्यांशमपि विहाय अत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमेव व्याप्तिः स्यात् ।।



न च साध्यादिभेदेन व्याप्तेः भेदात् इष्टमेवैतत् इति वाच्यम् । तथा सति सर्वसाधारण्याय उक्तव्याप्तिः इति **दीधिति**ग्रन्थविरोधात् ।।

## गादाधरी

**यत्तु** – प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोगिपदं स्वप्रतियोगिपरमवश्यं वाच्यम् । अन्यथा प्रतियोगित्वस्य सामान्यरूपेण केवलान्वयितया प्रतियोग्य-समानाधिकरण्यस्यैव दुर्लभत्वापत्तेः । तथा च स्वपदस्य तत्तदभावपरतया तत्तदभाव-प्रतियोग्यसामानाधिकरण्यविशिष्टत्वेन हेतुमद्वृत्तीनां तत्तदभावव्यक्तीनां प्रतियोगिता-वच्छेदकत्वाभावकूटज्ञानमनुमितिकारणं वाच्यम् । तादृशं च ज्ञानम् असर्वज्ञस्य दुर्घटम् । अतः प्रतियोगिपदस्य प्रकृते साध्यार्थकतया साध्याभावनिष्ठसाध्यसामानाधि-करण्याभावविशिष्टः सन् हेतुमद्वृत्तिरभाव एव अनुगतरूपेण निवेश्यः ।।

सद्धेतौ सर्वेषामेव हेतुसमानाधिकरणाभावानां सर्वत्र हेत्वधिकरणे साध्यसमानाधिकरणतया साध्यसामानाधिकरण्याभावविशिष्टस्य हेतुमद्वृत्तित्वं न प्रसिध्यतीति साध्याभावनिष्ठत्वं साध्यसामानाधिकरण्ये विशेषणम् । सद्धेतौ सर्वत्र साध्याभावभिन्नाभावे तत्प्रसिद्धिसंभवः । व्यभिचारिणि च व्यभिचारनिरूपकाधिकरण एव साध्याभावे साध्यसामानाधिकरण्याभावविशिष्टतया हेतुमद्वृत्तित्वमिति साध्याभावस्यापि लक्षणघटकतया नातिव्याप्तिः ।।

संयोगेन प्रमेयसामान्यसाध्यकसद्धेतौ साध्याभावातिरिक्ताभावाप्रसिद्ध्या हेतुमति साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टाभावाप्रसिद्धिरिति साध्यतावच्छेदकावच्छिन्नाभावनिष्ठसाध्यसामानाधिकरण्यस्याभावः निवेशनीयः ।।

एवं च व्याप्यवृत्तिसाध्यके साध्यतावच्छेदकावच्छिन्नसाध्याभावनिष्ठसाध्य-सामानाधिकरण्याप्रसिद्ध्या ईदृशव्याप्तिर्न प्रसिध्यतीति तत्साध्यके प्रतियोग्यसामा-नाधिकरण्याघटितैव व्याप्तिरित्युक्तं **नोपादेयं चेत्यादिनेति** ।।

## व्याख्या

**नोपादेयं च** इत्यादिदीधितिग्रन्थं प्रकारान्तरेण व्याचक्षाणानां मतमनुवदति– **यत्तु** इत्यादिना । अयमत्र समुदायार्थः– हेतुसमानाधिकरणाभावे प्रतियोग्यसमानाधिकरणेति यत् विशेषणं मूलकारेण दत्तं तत्र प्रतियोगिपदं लक्षणघटकाभावप्रतियोगिपरमिति अवश्यं वक्तव्यम् । अन्यथा सर्वेषामेव पदार्थानां यत्किंचिदभावप्रतियोगित्वमस्ति । वाच्यत्वादेरपि वाच्यत्वघटोभयाभावप्रतियोगितया प्रतियोगित्वं केवलान्वयीति कृत्वा प्रतियोग्यसमानाधिकरणाभाव एव दुर्लभः । घटाद्यभावस्यापि प्रतियोगित्वाश्रयवाच्यत्वाधिकरणपर्वतवृत्तित्वात् । अतश्च प्रतियोग्यसमानाधिकरणेत्यस्य प्रतियोग्यधिकरणावृत्तीति नार्थः । अपि तु स्वप्रतियोगिपरं प्रतियोगिपदम् इति वक्तव्यम् । स्वपदमपि हेत्वाधिकरणवृत्तितत्तदभावपरम् । तथा च तत्तदभावप्रतियोग्यसामानाधिकरण्यविशिष्टाः सन्तः ये हेत्वधिकरणवृत्तयोऽभावाः तत्तन्निरूपितप्रतियोगितावच्छेदकत्वाभावकूटवत् यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति पर्यवस्यति । तत्र घटकस्य अवच्छेदकत्वाभावकूटस्य असर्वज्ञदुर्ज्ञेयतया तद्घटितव्याप्तिरपि असर्वज्ञदुर्ज्ञेया भवति । तथा च तादृशव्याप्तिज्ञानमेव असर्वज्ञस्य दुर्घटम् । एतद्दोषवारणाय प्रकृते प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोगिपदं साध्यार्थकम् । तथा च साध्यसामानाधिकरण्याभावविशिष्टः सन् हेतुमद्वृत्तिः यः अभावः तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पर्यवस्यति । एवं सत्यपि सद्धेतौ वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणानां सर्वेषामपि घटपटाद्यभावानां साध्यवह्न्यधिकरणवृत्तितया साध्यसामानाधिकरण्याभावविशिष्टस्य हेतुसमानाधिकरणाभावस्य अप्रसिद्ध्या असंभवः स्यात् । तद्वारणाय साध्यसामानाधिकरण्ये साध्याभावनिष्ठेति विशेषणं देयम् ।।



तथा च साध्याभावनिष्ठं यत् साध्यसामानाधिकरण्यं तदभावविशिष्टः सन् हेतुमद्वृत्तिर्योऽभावः तदनवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः । पर्वतो वह्निमान् धूमात् इत्यादौ वह्नेरप्यव्याप्यवृत्तित्वस्य पूर्वं साधितया साध्याभावे वह्न्यभावे शिखरावच्छेदेन पर्वतवृत्तित्वं, वह्नेः नितम्बावच्छेदेन पर्वतवृत्तित्वं च साधितमिति वह्न्यभावनिष्ठं वह्निसामानाधिकरण्यं प्रसिद्धम् । तदभावविशिष्टः हेतुमद्वृत्तिः अभावः घटाद्यभाव एव । तत्प्रतियोगितानवच्छेदकत्वं वह्नित्वे अस्तीति लक्षणसमन्वयः । धूमवान् वह्नेः इत्यादौ व्यभिचारिणि धूमाभावनिष्ठं यत् धूमसामानाधिकरण्यं व्यभिचारनिरूपकायोगोलकावच्छेदेन तस्याभावो वर्तते । अयोगोलके धूमाभावे न धूमसामानाधिकरण्यमिति प्रतीतेः । तथा च धूमाभावनिष्ठं यत् धूमसामानाधिकरण्यं तदभावविशिष्टः सन् धूमाभावः हेत्वधिकरणेऽयोगोलके वर्तते । तत्प्रतियोगितावच्छेदकमेव धूमत्वमिति नातिव्याप्तिः ।।

सर्वत्र सद्धेतौ साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टः सन् हेतुमद्वृतिरभावः साध्याभावभिन्नः घटाद्यभाव एवेति लक्षणसमन्वयः ।।

व्यभिचारिणि धूमवान् वह्नेः इत्यादौ साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टः सन् हेतुमद्वृत्तिः अभावः साध्याभावोऽपि = धूमाभावोऽपि भवतीति नातिव्याप्तिः ।।

संयोगसंबन्धेन प्रमेयसामान्यसाध्यकसद्धेतौ सर्वेषामेव घटाद्यभावानां प्रमेयप्रतियोगिकतया साध्याभावरूपतया साध्याभावातिरिक्ताभावस्यैवाप्रसिद्ध्या अव्याप्तिरिति साध्यतावच्छेदकावच्छिन्नाभावनिष्ठसाध्यसामानाधिकरण्याभावो हेतुमद्वृत्त्यभावे विशेषणतया निवेशनीयः । तथा सति घटाद्यभावानां प्रमेयत्वरूपसाध्यतावच्छेदकावच्छिन्न प्रतियोगिताकत्वाभावात् तादृशप्रतियोगिताकाभाव-

## व्याख्या

**नोपादेयं च** इत्यादिदीधितिग्रन्थं प्रकारान्तरेण व्याचक्षाणानां मतमनुवदति– **यत्तु** इत्यादिना । अयमत्र समुदायार्थः– हेतुसमानाधिकरणाभावे प्रतियोग्यसमानाधिकरणेति यत् विशेषणं मूलकारेण दत्तं तत्र प्रतियोगिपदं लक्षणघटकाभावप्रतियोगिपरमिति अवश्यं वक्तव्यम् । अन्यथा सर्वेषामेव पदार्थानां यत्किंचिदभावप्रतियोगित्वमस्ति । वाच्यत्वादेरपि वाच्यत्वघटोभयाभावप्रतियोगितया प्रतियोगित्वं केवलान्वयीति कृत्वा प्रतियोग्यसमानाधिकरणाभाव एव दुर्लभः । घटाद्यभावस्यापि प्रतियोगित्वाश्रयवाच्यत्वाधिकरणपर्वतवृत्तित्वात् । अतश्च प्रतियोग्यसमानाधिकरणेत्यस्य प्रतियोग्यधिकरणावृत्तीति नार्थः । अपि तु स्वप्रतियोगिपरं प्रतियोगिपदम् इति वक्तव्यम् । स्वपदमपि हेत्वाधिकरणवृत्तितत्तदभावपरम् । तथा च तत्तदभावप्रतियोग्यसामानाधिकरण्यविशिष्टाः सन्तः ये हेत्वधिकरणवृत्तयोऽभावाः तत्तन्निरूपितप्रतियोगितावच्छेदकत्वाभावकूटवत् यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति पर्यवस्यति । तत्र घटकस्य अवच्छेदकत्वाभावकूटस्य असर्वज्ञदुर्ज्ञेयतया तद्घटितव्याप्तिरपि असर्वज्ञदुर्ज्ञेया भवति । तथा च तादृशव्याप्तिज्ञानमेव असर्वज्ञस्य दुर्घटम् । एतद्दोषवारणाय प्रकृते प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोगिपदं साध्यार्थकम् । तथा च साध्यसामानाधिकरण्याभावविशिष्टः सन् हेतुमद्वृत्तिः यः अभावः तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पर्यवस्यति । एवं सत्यपि सद्धेतौ वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणानां सर्वेषामपि घटपटाद्यभावानां साध्यवह्न्यधिकरणवृत्तितया साध्यसामानाधिकरण्याभावविशिष्टस्य हेतुसमानाधिकरणाभावस्य अप्रसिद्ध्या असंभवः स्यात् । तद्वारणाय साध्यसामानाधिकरण्ये साध्याभावनिष्ठेति विशेषणं देयम् ।।



तथा च साध्याभावनिष्ठं यत् साध्यसामानाधिकरण्यं तदभावविशिष्टः सन् हेतुमद्वृत्तिर्योऽभावः तदनवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः । पर्वतो वह्निमान् धूमात् इत्यादौ वह्नेरप्यव्याप्यवृत्तित्वस्य पूर्वं साधितया साध्याभावे वह्न्यभावे शिखरावच्छेदेन पर्वतवृत्तित्वं, वह्नेः नितम्बावच्छेदेन पर्वतवृत्तित्वं च साधितमिति वह्न्यभावनिष्ठं वह्निसामानाधिकरण्यं प्रसिद्धम् । तदभावविशिष्टः हेतुमद्वृत्तिः अभावः घटाद्यभाव एव । तत्प्रतियोगितानवच्छेदकत्वं वह्नित्वे अस्तीति लक्षणसमन्वयः । धूमवान् वह्नेः इत्यादौ व्यभिचारिणि धूमाभावनिष्ठं यत् धूमसामानाधिकरण्यं व्यभिचारनिरूपकायोगोलकावच्छेदेन तस्याभावो वर्तते । अयोगोलके धूमाभावे न धूमसामानाधिकरण्यमिति प्रतीतेः । तथा च धूमाभावनिष्ठं यत् धूमसामानाधिकरण्यं तदभावविशिष्टः सन् धूमाभावः हेत्वधिकरणेऽयोगोलके वर्तते । तत्प्रतियोगितावच्छेदकमेव धूमत्वमिति नातिव्याप्तिः ।।

सर्वत्र सद्धेतौ साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टः सन् हेतुमद्वृतिरभावः साध्याभावभिन्नः घटाद्यभाव एवेति लक्षणसमन्वयः ।।

व्यभिचारिणि धूमवान् वह्नेः इत्यादौ साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टः सन् हेतुमद्वृत्तिः अभावः साध्याभावोऽपि = धूमाभावोऽपि भवतीति नातिव्याप्तिः ।।

संयोगसंबन्धेन प्रमेयसामान्यसाध्यकसद्धेतौ सर्वेषामेव घटाद्यभावानां प्रमेयप्रतियोगिकतया साध्याभावरूपतया साध्याभावातिरिक्ताभावस्यैवाप्रसिद्ध्या अव्याप्तिरिति साध्यतावच्छेदकावच्छिन्नाभावनिष्ठसाध्यसामानाधिकरण्याभावो हेतुमद्वृत्त्यभावे विशेषणतया निवेशनीयः । तथा सति घटाद्यभावानां प्रमेयत्वरूपसाध्यतावच्छेदकावच्छिन्न प्रतियोगिताकत्वाभावात् तादृशप्रतियोगिताकाभाव-

निष्ठं यत् साध्यसामानाधिकरण्यं तदभावविशिष्टत्वमस्तीति न तादृशविशिष्टः अभावः अप्रसिद्ध इति भावः ।।

एवं च अव्याप्यवृत्तिसाध्यकस्थले प्रतियोगिव्यधिकरणाभावाप्रसिद्धिवारणाय उक्तरीत्या परिष्कारे कृते सति व्याप्यवृत्तिसाध्यके सत्तावान् जातेः इत्यादौ सत्ताभावरूपे साध्याभावे साध्यसामानाधिकरण्याप्रसिद्ध्या तद्घटिता व्याप्तिः न संभवतीति शङ्कायां तत्परिहाराय– **नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके तत्** इत्युक्तमिति भावः । तादृशस्थले ईदृशप्रतियोगिवैयधिकरण्याघटितैव व्याप्तिः इति भावः ।।

इत्थमुपपादितं **यत्तुकार**मतं खण्डयति– **गादाधर्यां– तदपि नेति** ।

## गादाधरी

**तदपि न** । साध्यसामानाधिकरण्य विशेषणीभूतसाध्याभावे साध्यतावच्छेदक-संबन्धावच्छिन्न प्रतियोगिताकत्वनिवेशे प्रयोजनाभावत् अव्याप्यवृत्तिसाध्यकेऽपि संबन्धान्तरावच्छिन्नसाध्याभाव एव साध्यसामानाधिकरण्यप्रसिद्ध्या तत्राप्युक्तव्याप्तिप्रसिद्धेः ।।

## व्याख्या

**यत्तुकारमते** प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोगिपदं साध्यपरमिति स्वीकृत्य साध्यसामानाधिकरण्याभावः प्रतियोग्यसामानाधिकरण्यम् । तच्च हेतुमद्वृत्त्यभावे विशेषणम् इति आदौ कथितम् । तदुपरि हेतुसमानाधिकरणाभावानां साध्यसमानाधिकरणतया साध्यासमानाधिकरणाः हेतुसमानाधिकरणाः अभावाः अप्रसिद्धा इत्याशङ्क्य साध्यतावच्छेदकावच्छिन्नसाध्यासामानाधिकरण्यं प्रयोजन-विशेषार्थं विवक्षणीयम् । तदुपरि च साध्यतावच्छेदकावच्छिन्नाभावनिष्ठत्वं साध्यसामानाधिकरण्ये निवेशनीयम् । तथा च साध्यतावच्छेदकावच्छिन्नप्रतियोगिताका-भावनिष्ठं यत् साध्यसामानाधिकरण्यं तदभावविशिष्टत्वं हेतुमद्वृत्त्यभावे विशेषणम् इति परिष्कृत्य सत्तावान् जातेरित्यादिव्याप्यवृत्तिसाध्यके सत्तात्वावच्छिन्न-प्रतियोगिताकाभावनिष्ठस्य सत्तासामानाधिकरण्यस्याप्रसिद्ध्या तादृशव्याप्तिर्न प्रसिद्ध्यतीत्याशङ्क्य **नोपादेयं च व्याप्यवृत्तिसाध्यके तत्** इत्युक्तं **दीधितौ** इति निगमनं कृतम् ।।



तन्मतं न युक्तम् । अन्ते यदुक्तं अप्रसिद्धिरूपं तत् न प्रसजति । साध्यतावच्छेदकावच्छिन्न प्रतियोगिताकाभावनिष्ठत्वशरीरे साध्यतावच्छेदकसंबन्धा-वच्छिन्नत्वं न निवेश्यते प्रयोजनाभावात् । तथा च सत्तायाः यः संबन्धः समवायः तदितरः यः संयोगसंबन्धः तदवच्छिन्नसत्तानिष्ठप्रतियोगिताकाभावः साध्यता-वच्छेदकावच्छिन्नाभाव इत्यनेन ग्राह्यः । तन्निष्ठं सत्तारूप साध्यसामानाधिकरण्यं प्रसिद्धमेव । सत्तावति द्रव्यादौ संयोगसंबन्धावच्छिन्नसत्तात्वावच्छिन्नाभावसत्त्वात् । तथा च संयोगसंबन्धावच्छिन्नसत्ताभाव-निष्ठं यत् सत्तासामानाधिकरण्यं तद्वन्तः हेतुमद्वृत्तयः अभावाः संयोगसंबन्धावच्छिन्नसत्ताद्यभावाः प्रसिद्धा एव । अतः एवमवतरणं न युक्तमिति भावः ।।

ननु साध्यतावच्छेदकसंबन्धानिवेशे अन्यसंबन्धावच्छिन्नसत्ताभावनिष्ठं यत् साध्यसामानाधिकरण्यं तदभावविशिष्टः साध्यतावच्छेदकसमवायसंबन्धावच्छिन्न-सत्तात्वावच्छिन्नाभावः तत्प्रतियोगितावच्छेदकत्वमेव सत्तात्वे अस्तीत्यव्याप्तिः स्यादिति वाच्यम् । तादृशाभावस्य हेतुमद्वृत्तित्वाभावादेव वारणात् इत्याकूतम् ।।

## गादाधरी

परे तु– ननु प्रतियोग्यसामानाधिकरण्यगर्भव्याप्तेः अनुमितिप्रयोजकत्वे प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशायां तदसामानाधिकरण्याविषयकादेव

हेतुसमानाधिकरणाभावाप्रतियोगित्वज्ञानात् अनुमितिरुपेयते इत्यनुपपन्नमित्यत आह– **नोपादेयं चेति** । **व्याप्यवृत्तिसाध्यके** = अनुमितिपूर्वमव्याप्यवृत्तित्वज्ञाना-विषयसाध्यके । सर्वत्रैव प्रतियोगिवैयधिकरण्यं नोपादेयम् । अनुमितिप्रयोजकव्याप्ति-शरीरे न निवेशनीयम् । तत्र तदघटिताव्याप्तिज्ञानमेव हेतुः । सर्वथैवेत्यनेन यत्साध्यके कदाचित् अनुमितेः पूर्वं साध्ये हेतुमति अव्याप्यवृत्तित्वज्ञानं तत्र तदनुमितिनिर्वाहाय प्रतियोग्यसामानाधिकरण्यमुपादायापि व्याप्तेरनुमिति-प्रयोजकत्वमुपेयम् । वक्ष्यमाणरीत्या व्याप्तेरनुगमान्न व्यभिचार इति सूचितम् । साध्यभेदेनेत्युपलक्षणम् । प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशाभेदेन एकसाध्यकेऽपि अनुमितिप्रयोजकव्याप्तिभेदोपगमोऽपि बोद्धव्य इति व्याचकुः ।।

स्पष्टत्वात् न व्याख्यायते ।।

## गादाधरी

व्याप्यवृत्तिसाध्यके द्विविधा व्याप्तिः, न तु अव्याप्यवृत्तिसाध्यक इति साध्यादिभेदेन व्याप्तिभेदाभावो न संभवतीत्यत आह– **साध्यादिभेदेनेति** । साध्यतावच्छेदकादेर्विशिष्य व्याप्तिघटकतया तद्भेदे तद्भेदस्यावश्यकत्वा-दित्यर्थः ।।

स्पष्टत्वान्न व्याख्यायते ।।

## दीधितिः

प्रतियोग्यसामानाधिकरण्यं च स्वप्रतियोगितावच्छेदकावच्छिन्नासामानाधि-करण्यम् । तेन ''अयं गुणकर्मान्यत्वे सति सत्तावान् जातेः'' ''भूतत्वमूर्तत्वो-भयवान् मूर्तत्वात्'' इत्यादौ **नातिप्रसङ्गः** ।।



## व्याख्या

''अयं कपिसंयोगी एतद्वृक्षत्वात्'' इत्यादौ अव्याप्यवृत्तिसाध्यकसद्धेतौ अव्याप्तिवारणाय अभावे प्रतियोग्यसामानाधिकरण्यं निवेशनीयमिति पूर्वमुक्तम् । तत्प्रसङ्गात् प्रसक्ताः आक्षेपाः समाहिताः । यथाश्रुत**मणिग्रन्थस्थ**स्य प्रतियोग्य-समानाधिकरणेत्यस्य प्रतियोग्यधिकरणावृत्तिरित्यर्थः । एवं सति स्थलद्वयेऽति-व्याप्तिर्भवति । तथा हि– अयं (घटादिः) गुणकर्मान्यत्वे सति सत्ताबान् = गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः । अयं व्यभिचारी हेतुः । गुणकर्मान्यत्व-विशिष्टसत्ता द्रव्ये वर्तते । तदभावः गुणे कर्मणि च । तयोः सत्तायाः सत्त्वेऽपि गुणकर्मान्यत्वरूपविशेषणाभावात् गुणकर्मान्यत्वविशिष्टसत्ता नास्तीति । तथा च साध्याभाववति गुणे कर्मणि च हेतोः जातेः गुणत्वस्य कर्मत्वस्य च सत्त्वात् इति अत्र व्याप्तिलक्षणस्य अतिव्याप्तिः । जात्यधिकरणे गुणे कर्मणि च साध्याभावस्य गुणकर्मान्यविशिष्टसत्ताभावस्य सत्त्वेऽपि स प्रतियोग्यसमानाधिकरणो न भवति । विशिष्टसत्तारूपप्रतियोगी विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन शुद्धसत्तापि तदधिकरणं गुणः कर्म च तद्वृत्तित्वात् अयमभावः प्रतियोगिसमानाकरणः । अतः प्रतियोग्यसमानाधिकरणः हेत्वधिकरणवृत्तिः अभावः न विशिष्टसत्ताभावः, घटाद्यभाव एव तदप्रतियोगित्वं गुणकर्मान्यत्वविशिष्टसत्तारूपे साध्ये अस्तीत्यतिव्याप्तिः । तद्वारणाय प्रतियोग्यसमानाधिकरण इत्यस्य प्रतियोगिता-वच्छेदकविशिष्टाधिकरणावृत्तिः इत्यर्थः विवक्षणीयः । तथा सति सत्तारूपप्रतियोगिनः गुणे कर्मणि च सत्त्वेऽपि प्रतियोगितावच्छेदकं यत् गुणकर्मान्यत्वविशिष्टसत्तात्वं तदवच्छिन्नाधिकरणं द्रव्यमेव न गुणः कर्म वा । गुणकर्मान्यत्वविशिष्टसत्ताभावस्तु हेत्वधिकरणगुणवृत्तिः प्रतियोगितावच्छेदकविशिष्टाधिकरणद्रव्यावृत्तिश्चेति अयं लक्षणघटकः तत्प्रतियोगित्वं साध्येऽस्ति न तदप्रतियोगित्वमिति नातिव्याप्तिः ।।

एवं यथाश्रुते ''अयं भूतत्वमूर्तत्वोभयवान् मूर्तत्वात्'' इत्यत्रातिव्याप्तिः। भूतत्वमूर्तत्वोभयाभाववति मनसि मूर्तत्वसत्त्वात् अयं व्यभिचारी । अत्र हेत्वधिकरणवृत्तिः अभाव इत्यनेन भूतत्वमूर्तत्वोभयाभावग्रहण एव तदप्रतियोगित्वं साध्ये उभयस्मिन् नास्तीत्यतिव्याप्तिर्वारयितुं शक्यते । परं तु मनसि हेत्वधिकरणे वर्तमानः भूतत्वमूर्तत्वोभयाभावः मूर्तत्वरूपप्रतियोग्यधिकरणे मनसि वर्तमानतया प्रतियोग्यसमानाधिकरणो न भवति अतोऽभावान्तरं घटाद्यभाव एव प्रतियोग्यसमानाधिकरणः सन् हेत्वधिकरणवृत्तिः इति तदप्रतियोगित्वस्य साध्ये भूतत्वमूर्तत्वोभयस्मिन् सत्त्वात् इति अतिव्याप्तिः । प्रतियोग्यसमानाधिकरण इत्यस्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरणावृत्तिरिति अर्थे तु मूर्तत्वभूतत्वोभयत्वावच्छिन्नाधिकरणावृत्तिः भूतत्वमूर्तत्वोभयाभावोऽपि भवति । हेत्वधिकरणे मनसि उभयस्य प्रत्येकानतिरिक्तत्वात् उभयसत्त्वेऽपि उभयत्वावच्छिन्नं नास्ति । एकसत्त्वेऽपि द्वयं नास्तीति न्यायात् । तथा च तत्प्रतियोगित्वमेव उभयरूपे साध्येऽस्तीति नातिव्याप्तिः इति यथाश्रुत**दीधिति**ग्रन्थार्थः ।।

## गादाधरी

**यद्यपि** जात्यादौ गुणकर्मान्यत्वादिसामानाधिकरण्योपलक्षितस्य सत्त्वादेः व्याप्तिरस्त्येव, गुणादौ तदुपलक्षितसत्त्वाद्यनुमितेः प्रमात्वात्; **तथापि** गुणादौ गुणान्यत्वादिसामानाधिकरण्यविशिष्टसत्तादिप्रतियोगिकवैशिष्ट्यावगाहिन्याः अनुमितेः भ्रमत्वात् तत्र तादृशानुमित्यौपयिकव्याप्तिस्वीकारे सल्लिङ्गकपरामर्शादपि भ्रमः स्यादिति तादृशानुमित्यौपयिकव्याप्तिः गुणादिवृत्तिहेतोः न स्वीकर्तुं शक्यते । अतः साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तिशरीरे प्रतियोगितावच्छेदकविशिष्टवैयधिकरण्यपर्यन्तं निवेश्य तत्र तादृशातिव्याप्तिं वारयति– **प्रतियोग्यसामानाधिकरण्यं चेति** ।।



## व्याख्या

प्रतियोग्यसामानाधिकरण्यमिति मूलस्य प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमित्यर्थः **दीधितिकृता** उच्यते । तस्यायमाशयः– अनुमितिः द्विविधा साध्यतावच्छेदकोपलक्षितसाध्यावगाहिनी, साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिनी चेति । सर्वसाधारणव्याप्तिशरीरे प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यनिवेशे साध्यतावच्छेदकोपलक्षितसाध्यवैशिष्ट्यावगाह्यनुमित्यौपयिकव्याप्तावपि तन्निवेशः प्रतीयेत । तथा सति दोषमाशङ्क्य विवक्षितमर्थमाह– **यद्यपीत्यादिना** । गुणकर्मान्यत्वसामानाधिकरण्यविशिष्टसत्ताया एव गुणाद्यवृत्तित्वेन गुणकर्मान्यत्वसामानाधिकरण्योपलक्षितसत्तायाः गुणादावपि सत्त्वेन जात्यादौ तादृशसत्तानिरूपितव्याप्त्युपगमे वाधकाभावात् तादृशव्याप्तिरिष्टैव । बाधकं च सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्वरूपम् । गुणादौ तादृशानुमितेः गुणकर्मान्यत्वसामानाधिकरण्योपलक्षितसत्ताविषयकानुमितेः प्रमात्वात् प्रकृते तत् बाधकं न संभवति ।।

उक्तशङ्कां समाधत्ते– **तथापीति** । गुणकर्मान्यत्वविशिष्टसाध्यकसत्तारूपहेतौ च उपलक्षितसत्तानिरूपितव्याप्तिः न स्वीकरणीया । तथा सति तादृशव्याप्तिविशिष्टजातिलिङ्गकपरामर्शस्य सल्लिङ्गकपरामर्शत्वेन प्रमात्वात् तदधीनानुमितेश्च गुणादिपक्षे भ्रमत्वात् सल्लिङ्गपरामर्शस्यापि भ्रमानुमितिजनकत्वं स्यात् । यथाश्रुतव्याप्तेः तत्रापि सत्त्वात् । तथाच गुणकर्मान्यत्वविशिष्टसत्तावैशिष्ट्यविषयकानुमितावेव प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं निवेश्य तत्रातिव्याप्तिर्वारणीयेत्याशयः ग्रन्थकारस्येति भावः ।।

## गादाधरी

**न च** तत्रापि व्याप्तिस्वीकारे क्षतिविरहः, गुणो गुणान्यत्वविशिष्टसत्तावान् जातेः इत्यादौ तादृशव्याप्तिसत्त्वेऽपि बाधेनैव हेतोः दुष्टत्वोपपत्तेः ।

**द्रव्यपक्षक**तादृशसाध्यकजात्यादिहेतोश्च समीचीनताया एवोपगमे क्षतिविरहात्। बाधावतारदशायां च गुणादौ जात्यादिलिङ्गकविशिष्टसत्तावैशिष्ट्यानुमितिः भ्रमरूपा प्रमात्मकलिङ्गपरामर्शादपि स्वीक्रियते । **अत एव** गन्धप्रागभाववच्छिन्नघटो गन्धवान् पृथिवीत्वात् इत्यादौ **बाधानवतारदशायां** प्रमात्मकपरामर्शात् विशिष्टानुयोगिकवैशिष्ट्यावगाहिनी भ्रमानुमितिः **मणिकारेणो**पगम्यते इति वाच्यम् ।।

**भ्रमानुमिति**जनकपरामर्शस्य भ्रमत्वसंभवे तदुपपादनमावश्यकमित्याशयात् ।।

## व्याख्या

अत्राप्यनुपपत्तिं शङ्कते– **नचेति** । गुणः गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र व्याप्तिस्वीकारे हेतोः दुष्टत्वं न स्यात् इति खलु अनिष्टं प्रसज्यते। तन्न संभवति । तादृशस्थले गुणरूपपक्षे गुणकर्मान्यत्वरूपविशेषणाभावात् गुणकर्मान्यत्वविशिष्टसत्ताभावात् साध्याभाववत्पक्षरूपबाधेनैव हेतोः जातेः दुष्टत्वसंभवात् ।।

ननु गुणो गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र गुणरूपपक्षे साध्याभावेन तत्साध्यकहेतोः बाधितत्वसंभवेऽपि द्रव्यपक्षकतादृशसाध्यकहेतोः बाधरूपदोषवत्त्वं न संभवति, द्रव्ये गुणकर्मान्यत्वविशिष्टसत्तायाः साध्यस्य सत्त्वेन साध्याभावरूपबाधविरहात् इति शङ्कायामाह– **द्रव्यपक्षकेति** । द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तावत् जातेः इत्यत्र जातिरूपहेतोः सद्धेतुत्वमेव स्वीक्रियते, द्रव्ये जातिरूपहेत्वधीनसाध्यानुमितेः प्रमात्वात् । एवं च गुणो गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र व्याप्तिसत्त्वेऽपि बाधकाभावात् । हेतोस्तु बाधेनैव दुष्टत्वसंभवात् । तथा च प्रतियोगितावच्छेदकेति विशेषणं प्रतियोगिवैयधिकरण्यशरीरे व्यर्थमिति भावः ।।



ननु गुणो गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र हेतौ साध्यव्याप्तिमङ्गीकृत्य पक्षे साध्याभावात् बाधरूपदोषेण दुष्टत्वाङ्गीकारे तत्र बाधज्ञानाभावदशायां व्याप्तिविशिष्टहेतुप्रकारकपरामर्शस्य सल्लिङ्गकत्वेन प्रमात्वात् सल्लिङ्गकपरामर्शादपि भ्रमानुमितिः स्यात् । प्रतिबन्धकस्य बाधज्ञानस्य अभावादित्याशङ्क्य तत्र इष्टापत्तिमाह– **बाधानवतारदशायां चेति** । उक्तविषये **मणिकार**संमतिमाह– **अत एवे**त्यादिना । एवंविधस्थले व्याप्तेरिष्टत्वादेवेत्यर्थः । असिद्धिव्यभिचारासंकीर्णबाधोदाहरणतया प्रदर्शिते गन्धप्रागभाववच्छिन्नघटो गन्धवान् पृथिवीत्वात् इत्यत्र बाध एव दोषः नासिद्धिः, पक्षे घटे पृथिवीत्वसत्त्वात् । नापि व्यभिचारः । पृथिवीत्वे गन्धनिरूपितव्याप्तिसत्त्वात् । बाधस्तु भवति । घटे गन्धरूपसाध्यस्य उत्पत्तिकालावच्छेदेन अभावात् । उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति न्यायात् । तथा च तत्र बाधस्याज्ञानदशायां गन्धव्याप्यपृथिवीत्ववान् घट इत्याकारकसल्लिङ्गक-(व्याप्तिविशिष्टहेतुविषयक) परामर्शादपि भ्रमात्मकानुमितिरिष्टैवेति **बाधग्रन्थे मणिकारो** वक्ष्यति । एवं च प्रकृत**दीधितिग्रन्थः** कथं संगमनीय इति प्रश्नः अवशिष्यते ।।

तत्र समाधानमाह– **भ्रमानुमितीति** । भ्रमानुमितिजनकपरामर्शस्य भ्रमत्वसंभवे तदुपपादनमावश्यकमिति **दीधितेः** भावः । एतदुक्तं भवति– गुणो गुणान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोगिनि प्रतियोगितावच्छेदकावच्छिन्नेति विशेषणं प्रक्षिप्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यसमानाधिकरण्यघटितव्याप्तेरभावेन गुणो गुणकर्मान्यत्वनिष्टसत्ताव्याप्यजातिमान् इति परामर्शस्य भ्रमत्वसंपादनेन तत्र भ्रमात्मकपरामर्शादेव भ्रमात्मकानुमितिः इति **दीधितिग्रन्थः** संगमनीय इति भावः ।।

## गादाधरी

**गन्धप्रागभावावच्छिन्नो** घटो गन्धवान् पृथिवीत्वात् इत्यादौ परामर्शस्य कथंचिदपि भ्रमत्वासंभवात् अगत्या तत्र प्रमात्मकपरामर्शात् भ्रमानुमितिस्वीकारात् । **गुणो विशिष्टसत्तावान्** जातिमत्त्वात् इत्यादिविशिष्टप्रतियोगिकवैशिष्ट्यविषयकानुमितिस्थलमुपेक्ष्य ''गन्धप्रागभाववान् घटो गन्धवान् इत्यादिविशिष्टानुयोगिकवैशिष्ट्यविषयकानुमितिस्थलम् असिद्धिव्यभिचारासंकीर्णबाधोदाहरणत्वेनाभिहितवतो **मणिकृतो**ऽपि उक्तस्थले व्याप्तिर्नास्तीत्याशयः उन्नीयते ।।

## व्याख्या

गन्धप्रागभाववान् घटो गन्धवान् पृथिवीत्वात् इत्यत्रापि उक्तरीतिः कुतो न स्यात् इत्यत्राह– **गन्धप्रागभावेति** । तत्र उक्तस्थल इव व्याप्त्यभावो न संभवति । पृथिवीत्वव्यापकगन्धसामानाधिकरण्यरूपव्याप्तेः पृथिवीत्वे सत्त्वात् तत्र परामर्शस्य पृथिवीत्वव्यापकगन्धसमानाधिकरणपृथिवीत्ववान् घटः इति परामर्शस्य सर्वथा भ्रमत्वासंभवात् तत्र उक्तरीतिः न संभवतीति भावः ।।

एवं च सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्वम् इति नियमशरीरे बाधादिदोषासहकृतसल्लिङ्गकपरामर्शस्य इति निवेशनीयम् । तावता बाधावतारदशायां गन्धप्रागभाववान् घटो गन्धवान् पृथिवीत्वात् इत्यत्र बाधसत्त्वात् सल्लिङ्गपरामर्शस्य भ्रमानुमितिजनकत्वम् । गुणो गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र बाधसत्त्वात् सल्लिङ्गकपरामर्शस्य भ्रमानुमितिजनकत्वं प्राप्तम् । तद्वारणाय प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकावच्छिन्नेति विशेषणं दत्त्वा तद्घटितव्याप्तेरसंभवात् परामर्शोऽपि भ्रमरूपः अनुमितिरपि भ्रमरूपेति नानुपपत्तिः कापि । **मणिकारा**भिप्रायोऽप्येवमेवेत्याह– **गुणो विशिष्टसत्तावान्** इत्यादिना । यद्यत्र व्याप्तिः **मणिकारा**भिमता स्यात् तदा एतत्स्थलमेव असिद्धिव्यभिचारासंकीर्णबाधो-



दाहरणतया प्रदर्श्येत तैः । यतो न प्रदर्शितवान् **मणिकारः**, अतोऽत्र व्याप्त्यभाव एवाभिमतः । व्याप्त्यभावश्च प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनिवेशादेव निर्वहतीति भावः । सर्वमिदं सावधानं मनसि ध्येयम् । **''तर्कश्रमो न तनुते कमिहोपकारम्''** ।।

## गादाधरी

**अथ विशिष्टनिरूपित** एव समवायादिः **विशेष्याविरोधिनो** विशिष्टाभावस्य प्रतियोगितावच्छेदकसंबन्धः । **शुद्धसमवायादेः तथात्वे** दण्डाद्युपलक्षितपुरुषादिमत्त्वविरोधितादृशपुरुषाद्यभावात् तदविरोधितद्विशिष्टपुरुषाद्यभाववैलक्षण्यानिर्वाहात् ।।

**न च** तदुपलक्षितपुरुषाद्यभावस्य स धर्मो न प्रतियोगितावच्छेदकः, अपि तु प्रतियोगितासमानाधिकरण एव । **प्रतियोगितावच्छेदकस्यैव** प्रतियोगिविशेषणत्वात् **अतादृशस्यैव**ोपलक्षणत्वात् इति तादृशाभावयोर्विशेष इति वाच्यम् । **उपलक्षणेन दण्डादिना** व्यावृत्त प्रतियोगिनिष्ठप्रतियोगितायां पुरुषत्वादेरतिप्रसक्ततया तन्मात्रे तदवच्छेदकतायाः पर्याप्त्यसंभवेन दण्डादेरपि तदवच्छेदक कोटाववश्यमन्तर्भावात् ।।

## व्याख्या

पूर्वं अयं गुणकर्मान्यत्वे सति सत्तावान् जातेः इत्यत्रातिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यसमानाधिकरण्यं प्रतियोग्यसामानाधिकरण्यपदेन विवक्षितमिति **दीधितिकारेणो**क्तम् । इदानीं प्रतियोगितावच्छेदकावच्छिन्नेति विशेषणं व्यर्थम्, तदभावेऽपि पूर्वोक्तातिव्याप्तिर्वारयितुं शक्यते इति शङ्कते **गादाधर्याम्– अथ विशिष्टनिरूपिते**त्यादिना । अयमाशयः– प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यसामानाधिकरण्यं ज्ञानवान् द्रव्यत्वात् इत्यादावतिव्याप्ति-

वारणाय विवक्षणीयमिति **दीधितौ** वक्ष्यति । तेनैव प्रकृतस्थलेऽपि अतिव्याप्ति-वारणसंभवात् प्रतियोगितावच्छेदकावच्छिन्नेति विशेषणं व्यर्थमिति शङ्का । विशिष्टाभावस्य प्रतियोगितावच्छेदकसंबन्धः विशिष्टनिरूपितः समवायादिः । प्रकृते हेत्वधिकरणगुणकर्मवृत्तिः अभावः गुणकर्मान्यत्वविशिष्टसत्ताभावः । तत्प्रतियोगितावच्छेदकः संबन्धः गुणकर्मान्यत्वविशिष्टनिरूपितः समवायः, तेन संबन्धेन प्रतियोगिनः गुणकर्मान्यत्वविशिष्टसत्तायाः अधिकरणं द्रव्यमेव । तदवृत्तिरेव अयमभावः । द्रव्ये गुणकर्मान्यत्वविशिष्टसत्तायाः सत्त्वेन तदभावस्य असत्त्वात् । तथा च विशिष्टसत्ताभावः प्रतियोग्यधिकरणावृत्तिः जातिरूप हेत्वधिकरण-गुणकर्मवृत्तिश्चेति तत्प्रतियोगित्वस्यैव विशिष्टसत्तारूपे साध्ये सत्त्वेन नातिव्याप्तिः। अतः प्रतियोगितावच्छेदकाविच्छिन्नेति विशेषणं व्यर्थम् इति शङ्का । एतदर्थं विशिष्टाभावप्रतियोगितावच्छेदकसंबन्धः विशिष्टनिरूपित एव समवायादिः इति निरूपयति– गादाधर्याम् **अथेत्यादिना** । तथा हि– विशिष्टाभावप्रतियोगिता-वच्छेदकसंबन्धः विशिष्टनिरूपितसमवायादिः । गुणे विद्यमानः गुणकर्मान्यत्व-विशिष्टसत्ताभावः विशिष्टनिरूपितसमवायसंबन्धेन विशिष्टसत्तारूप प्रतियोग्यनधि-करणगुणादिवृत्तिरेव तत्प्रतियोगितावच्छेदकं साध्यतावच्छेदकं विशिष्टसत्तात्वमिति अतिव्याप्त्यप्रसक्तिरिति भावः । **विशेष्याविरोधिन** इति विशेष्यभूतसत्तावति वृत्तेरित्यर्थः । इदं विशिष्टाभावस्य विशेषणम् ।।

शुद्धसमवायादेः विशिष्टाभावप्रतियोगितावच्छेदकसंबन्धत्वे दोषमाह– **शुद्धसमवायादेरिति** । **तथात्वे** = विशिष्टाभावनिरूपित प्रतियोगितावच्छेदक-संबन्धत्वे इत्यर्थः । दण्डोपलक्षितपुरुषाभावापेक्षया दण्डविशिष्टपुरुषाभावस्य वैलक्षण्यं वक्तव्यम्। उपलक्षितपुरुषाभावः केवलपुरुषवत्यपि नेष्टः । विशिष्टपुरुषाभावस्तु तत्रेष्टः । उभयोरभावयोः अवैलक्षण्ये एवं व्यवस्था न स्यात् । तथा च



विशिष्टाभावस्यापि यदि शुद्धसंबन्धः प्रतियोगितावच्छेदकः, तदा उपलक्षिता-भावस्यापि स एव तथेति उभयोरभावयोः वैलक्षण्यं न स्यात् इति भावः ।।

ननु दण्डोपलक्षितपुरुषाभावस्य दण्डः न प्रतियोगितावच्छेदकः, दण्डविशिष्टपुरुषाभावस्य तु दण्डः प्रतियोगितावच्छेदक इति प्रतियोगितावच्छेदक-धर्मवैलक्षण्यादेव उपलक्षिताभावविशिष्टाभावयोः वैलक्षण्यं निर्वहतीति शङ्कते– **न चेति** । तत्र युक्तिमाह– **प्रतियोगितावच्छेदकस्यैवेति** । यत् प्रतियोगितावच्छेदकं तदेव प्रतियोगिविशेषणम् । **अतादृशस्य** = प्रतियोगितानवच्छेदकस्यैव प्रतियोग्युपलक्षणत्वमिति । तथा च विशेष्यभूतप्रतियोगिवृत्तिधर्मस्य विशेषणत्वो-पलक्षणत्वाभ्यां विशिष्टाभावोपलक्षिताभावयोर्वैलक्षण्यम्, न तु संबन्धवैलक्षण्यादिति शङ्का शिष्यते । तत्र समाधानमाह– **उपलक्षणेन दण्डादिनेति** । दण्डोपलक्षित-पुरुषाभावेऽपि उपलक्षितपुरुषनिष्ठप्रतियोगितायामुपलक्षणमप्यवच्छेदकमेव । केवल-पुरुषत्वमात्रस्य दण्डोपलक्षितपुरुषाभावप्रतियोगितावच्छेदकत्वं न संभवति । प्रतियोगितानतिप्रसक्तधर्मस्यैव प्रतियोगितावच्छेदकत्वात्, पुरुषत्वस्य च दण्डोपलक्षितपुरुषाभावीयप्रतियोगिताशून्ये सर्वदा दण्डशून्ये पुरुषेऽपि सत्त्वात् इति दण्डस्यापि अवच्छेदकत्वमावश्यकम् । तथा चोपलक्षिताभावविशिष्टाभावयोः प्रतियोगिवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वतदभावाभ्यां वैलक्षण्यं न संभवति । अपि तु प्रतियोगितावच्छेदकसंबन्धवैलक्षण्यादेवेति भावः ।।

## गादाधरी

**अत एव** पुरुषादिमात्रेण न दण्डाद्युपलक्षितपुरुषाद्यभावस्य विरोधः । **तदवच्छिन्नाभावमात्रस्यैव** तद्विशिष्टाभावत्वे ''सत्तान्यपृथिवीसमवेतशून्यं वायुत्वात्'' इत्यादौ **ग्रन्थकृता कूटघटितलक्षणा**तिव्याप्तिदानं विरुध्यते । पृथिवी-समवेतत्वविशिष्टाभावस्य वाय्वादौ सत्त्वेन वायुत्वादेस्तत्र साध्ये सद्धेतुत्वात् ।।

तथा च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यविवक्षायामपि नातिव्याप्तिः । प्रतियोगितावच्छेदकसंबन्धेन गुणादेः विशिष्टसत्तानधिकरणत्वात् इति चेत्–

## व्याख्या

अत्रैव युक्त्यन्तरमप्याह– **अत एवेति** । विशेषणस्येव उपलक्षणस्याप्य-वच्छेदकत्वादेवेत्यर्थः । सर्वदा दण्डशून्यो यः पुरुषः तद्वति देशे कदाचित् दण्डयुक्तो यः पुरुषः तदभावः इष्टः । दण्डोपलक्षितपुरुषाभाव इति यावत् । यद्यत्र दण्डः अवच्छेदको न स्यात् तदा दण्डोपलक्षितपुरुषाभावस्य पुरुषत्वमात्रं प्रतियोगितावच्छेदकमिति प्रतियोगितावच्छेदकीभूतपुरुषत्वविशिष्टपुरुषाधिकरणदेशे दण्डोपलक्षितपुरुषाभावासत्त्वप्रसङ्गात्, प्रतियोगितावच्छेदकविशिष्टप्रतियोगिना सह तदवच्छिन्नप्रतियोगिताकाभावस्य विरोधात् इति भावः ।।

उपलक्षिताभावस्य उपलक्षणीभूतधर्मोऽपि प्रतियोगितावच्छेदक इत्यत्र **दीधितिकार**संमतिमप्याह– **तदवच्छिन्नाभावमात्रस्यैवे**त्यादिना ।।

तद्धर्मावच्छिन्नाभाव एव तद्विशिष्टाभावः इत्युक्तौ ''सत्तान्यपृथिवीसमवेत-शून्यं वायुत्वा''दित्यत्र **कूटघटितलक्षणस्य**–

''वृत्तिमद्धत्तयो यावन्तः साध्यतावच्छेदकसमनियतप्रतियोगिताकाभाव-कूटाधिकरणवृत्तित्वाभावाः तद्धत्त्वम्'' इत्यस्य, सत्तान्यपृथिवीसमवेतद्रव्यत्व-घटिततादृशाभाववति वायौ वायुत्वस्य वृत्तावपि प्रकारान्तरेणातिव्याप्तिरुक्ता । तद्धर्मावच्छिन्नाभावस्यैव तद्विशिष्टाभावत्वे पृथिवीसमवेतत्वविशिष्टाभावस्य वायौ सत्त्वात् साध्याभाववत्त्वविरहेण वायोः, तत्साध्यकवायुत्वादेः सद्धेतुत्वेन लक्ष्यत्वात् तत्रातिव्याप्तिकथनं न संगच्छेत । विशिष्टनिरूपितसंबन्धावच्छिन्नाभावस्यैव विशिष्टाभावत्वे च उक्तरीत्या तत्संगतेः । शिष्टं तत्रैव द्रष्टव्यम् ।।



एवं च विशिष्टाभावस्य प्रतियोगितावच्छेदकसंबन्धः विशिष्टनिरूपितसम-वायादिरेवेति प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यपर्यन्तमनिवेश्य प्रतियोगि-तावच्छेदकसंबन्धेन प्रतियोग्यसामानाधिकरण्यनिवेशेऽपि विशिष्टनिरूपितसमवाय-संबन्धेन गुणादावसत्त्वात् साध्याभावस्य गुणकर्मान्यत्वविशिष्टसत्ताभावस्य प्रतियोग्यसामानाधिकरण्यमस्तीति लक्षणघटकतया अतिव्याप्त्यभावात् प्रतियोगिवैय-धिकरण्यशरीरे प्रतियोगितावच्छेदकावच्छिन्नत्वं न निवेशनीयमित्याक्षेपः स्थितः ।।

## गादाधरी

न । **विशिष्ट**निरूपितसंबन्धस्य विशिष्टाभावप्रतियोगितावच्छेदकत्वं सर्वत्र न संभवतीति प्रागुक्तत्वात् अगत्या विशिष्टाभावप्रतियोगिता विशेषणान्तर्भावेण पर्याप्ता । उपलक्षिताभावप्रतियोगिता तु दण्डादिरूपावच्छेदकोपलक्षितविशेष्य एव पर्याप्तेत्युपगम्य तयोर्विशेषस्योपपादनीयत्वात् ।।

विशिष्टस्यातिरिक्ततामते विशिष्टसत्ताभावः सहजत एव प्रतियोग्यसमानाधि-करण इति उभयसाध्यकानुसरणम् । **नातिप्रसङ्ग** इति । हेतुमति विशिष्टाभावादेः शुद्धप्रतियोगिसामानाधिकरण्येऽपि विशिष्टप्रतियोगिसामानाधिकरण्यविरहेण न **भ्रमानु-मितिजनकपरामर्शस्य प्रमात्वप्रसङ्ग** इत्यर्थः । व्याप्यवृत्तिसाध्यकेऽपि प्रतियोगि-वैयधिकरण्यावगाहिपरामर्शस्य अनुमितिहेतुतया **उक्तसाध्यस्य** व्याप्यवृत्तित्वेऽपि नातिप्रसङ्गाप्रसक्तिः ।।

## व्याख्या

अत्र समाधानं ब्रूते– **विशिष्टेति** । विशिष्टनिरूपितसंबन्धस्य विशिष्टा-भावप्रतियोगितावच्छेदकत्वं न संभवतीति ''दण्ड्यादौ साध्ये परंपरासंबद्धदण्डत्वादि-कमेव साध्यतावच्छेदकम्'' इति **दीधिति**व्याख्यानावसरे उक्तम् । तथा हि– एकत्वप्रागभावविशिष्टघटस्य संयोगेन साध्यतास्थले विशिष्टाभावप्रतियोगितावच्छेद-

कसंबन्धः न एकत्वप्रागभावविशिष्टघटप्रतियोगिकसंयोगः भवितुमर्हति । आद्यक्षणावच्छेदेन घटे संयोगरूपगुणाभावात् तादृशविशिष्टप्रतियोगिकसंयोगस्याप्रसिद्धेः इति युक्त्या विशिष्टाभावीयप्रतियोगिता विशेष्यविशेषणोभयपर्याप्ता, उपलक्षिताभावीयप्रतियोगिता तु शुद्धविशेष्यपर्याप्ता इति प्रतियोगितावैलक्षण्येनैव अभावद्वयविशेषः स्वीकार्यः ।।

एवं च ''गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः'' इत्यत्र तादृशविशिष्टाभावप्रतियोगितावच्छेदकसंबन्धः शुद्धसमवाय एवेति हेतुमन्निष्ठस्य गुणकर्मान्यत्वविशिष्टसत्ताभावस्य समवायसंबन्धेन सत्तारूपप्रतियोग्यधिकरणगुणादिवृत्तित्वेन प्रतियोग्यधिकरणवृत्तित्वेन प्रतियोग्यसामानाधिकरण्याभावेन अभावान्तरमादायातिव्याप्तिरिति तद्वारणाय प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यपर्यन्तं निवेशनीयम् । तन्निवेशे च गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणं द्रव्यं तदवृत्तिः हेत्वधिकरणगुणवृत्तिश्च गुणकर्मान्यत्वविशिष्टसत्ताभावो भवति इति तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं गुणकर्मान्यत्वविशिष्टसत्तात्वमिति अयं गुणकर्मान्यत्वे सति सत्तावान् जातेरित्यत्र नातिव्याप्तिरिति भावः । **न भ्रमानुमितिजनकपरामर्शस्य प्रमात्वप्रसङ्ग** इति । नातिव्याप्तिः इत्यनुक्त्वा नातिप्रसङ्ग इत्युक्तेः विवक्षितोऽर्थोऽयम् । यदि व्याप्तिलक्षणस्य व्यभिचारिण्यपि सत्त्वं तदा साध्यव्याप्यहेतुमान् पक्ष इति परामर्शस्य प्रमात्वात् अयं (गुणः) गुणकर्मान्यत्वविशिष्टसत्तावान् इति अनुमितेः भ्रमतया प्रमात्मकपरामर्शस्य भ्रमानुमित्यजनकत्वनियमभङ्गः, अथवा प्रमात्मकपरामर्शात् भ्रमानुमिति प्रसङ्गः । एतद्वारणाय हेतौ व्याप्यसत्त्वमुपपादनीयम् । तदर्थं प्रतियोग्यसामानाधिकरण्यं = प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यम् इति वक्तव्यमिति **गभीरोऽयं भावः दीधितिकारस्य** ।।



व्याप्यवृत्तिसाध्यकेऽपीति । सत्तावान् जातेः इत्यादिव्याप्यवृत्तिसाध्यकस्थलेऽपि साध्यस्य अव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्याविशेषितव्याप्तिज्ञानासंभवात् तत्रापि तद्विशेषणस्यावश्यकतया **उक्तसाध्यस्य** गुणकर्मान्यत्वविशिष्टसत्तारूपसाध्यस्य व्याप्यवृत्तित्वेऽपि नातिप्रसङ्गासगतिः Lएतदुक्तं भवति-पूर्वं नोपादेयं च व्याप्यवृत्तिसाध्यके तत्'' इत्युक्ततया ''अयं(गुणः) गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः'' इत्यस्यानुमानस्य व्याप्यवृत्तिसाध्यकतया हेतुसमानाधिकरणाभावे प्रतियोग्यसामानाधिकरण्यविशेषणमेव नास्तीति तत्र प्रतियोग्यसामानाधिकरण्याघटितलक्षणस्याभावादेव अतिप्रसङ्गासंभवात् किमर्थ इयान् प्रयास इति शङ्का स्यादपि । तदर्थमियान् प्रयासः इति । तथा च प्रतियोग्यसामानाधिकरण्यविशेषणस्य आवश्यकतया नोक्तस्थले व्यावृत्तिदानस्य असंगतिः । यावच्छक्ति अहं भावं स्पष्टीकृतवान् । अतश्च **नातिप्रसङ्गाप्रसक्तिः** इत्यस्य प्रमात्मक परामर्शस्य भ्रमानुमितिजनकत्वप्रसङ्गरूपो योऽतिप्रसङ्गः तस्य अयुक्तत्वं न, अपि तु युक्तत्वमेवेति तात्पर्यम् ।।

## दीधितिः

**न च** उभयत्वमेकविशिष्टापरत्वम्, विशिष्टं च केवलादन्यदिति तदभावो मनसि सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम् । उभयत्वं हि न विशिष्टत्वात् अनतिरिक्तम् ।।

## गादाधरी

ननु मूर्तत्वादिहेतौ भूतत्वविशिष्टमूर्तत्वत्वरूपतदुभयत्वावच्छिन्नस्यैव न व्याप्तिः, न तु तदुभयवृत्तिबुद्धिविशेषविषयत्वरूपतदुभयत्वावच्छिन्नस्य । तथा च विशिष्टातिरिक्ततामते विशिष्टसत्तादिसाध्यकजात्यादिहेताविव उक्तोभयसाध्यकमूर्तत्वादिहेतावपि यथाश्रुत प्रतियोग्यसामानाधिकरण्यनिवेशपक्षे नातिव्याप्ति-

रित्यभिमानं निराकरोति– **न चेति** । **सहजत एव – प्रतियोगिपदस्य तत्त्वावच्छेदकविशिष्टपरत्वं विनैव** ।।

### व्याख्या

पूर्वं **दीधितौ** प्रतियोग्यसामानाधिकरण्यं न यथाश्रुतम्, अपितु प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यम् इत्युक्त्वा तस्य स्थलद्वये प्रयोजनमुक्तम् । तत्र द्वितीयं स्थलं भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इति । भूतत्वमूर्तत्वोभयाभाववति मनसि मूर्तत्वसत्वात् अयं हेतुर्व्यभिचारीत्याशयेन तत्र प्रयोजनमुक्तम् । तच्च पूर्वं विवृतमेव । इदानीं तत्र साध्यतावच्छेदकं भूतत्वमूर्तत्वोभयत्वं किंरूपमिति कृत्वा प्रयोजनमुच्यते इति पृच्छति । उभयत्वं हि द्विविधम् - एकविशिष्टापरत्वं, अयमेकः अयमेकः इत्याकारकबुद्धिविशेषविषयत्वरूपमिति । तत्र प्रथमपक्षे नातिव्याप्तिः । विशिष्टं विशेष्यविशेषणाभ्यामतिरिक्तमिति मते भूतत्वविशिष्टमूर्तत्वस्य भूतत्वमूर्तत्वोभयाधिकरण एव सत्त्वात् मूर्तत्वमात्रवति मनसि निरुक्तोभयं न संभवति इति मनसि निरुक्तसाध्याभावः = भूतत्वविशिष्टमूर्तत्वाभावः वर्तते । स च भूतत्वविशिष्टमूर्तत्वरूपप्रतियोग्यनधिकरणमनोवृत्तिरिति साध्ये तत्प्रतियोगित्वमेवास्तीति अतिव्याप्तेर्न प्रसक्तिः । उभयत्वं बुद्धिविशेषविषयत्वरूपमिति द्वितीयपक्षे च केवलमूर्तत्वस्यापि उभयाभावप्रतियोगितया मनसि उक्तोभयत्ववदभावस्य केवलमूर्तत्वरूप प्रतियोगिसमानाधिकरणतया प्रतियोग्यसामानाधिकरण्याभावात् व्याप्त्यभाव इष्ट एव । एवं च उभयत्वमेकविशिष्टापरत्वमिति पक्ष एव अतिव्याप्तिरापादनीया । सा च पूर्वोक्तरीत्या न संभवतीति **न च** इत्यादिदी**धितिग्रन्थस्या**शयः।।

तत्र दृष्टान्तः विशिष्टातिरिक्ततामते अयं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र नातिव्याप्तिः तथा इति । अनेन पूर्वं तत्र यथाश्रुते अतिव्याप्तिकथनमपि विशिष्टानतिरिक्तत्वपक्षे इति सूचितम् ।।



**सहजत एव** इत्यस्य प्रकृते विवक्षितार्थमाह– **प्रतियोगिपदस्येति** । प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोगिपदस्य तत्त्वावच्छेदकविशिष्टपरतां विनैवेत्यर्थः। प्रतियोगितावच्छेदकविशिष्टपरतां विनैवेति यावत् । ''उभयत्वं न विशिष्टत्वादनतिरिक्तम्'' इति वाक्यात् यथाश्रुतात् उभयत्वे विशिष्टत्वानतिरिक्तत्वाभावः बोध्यते ।।

### गादाधरी

उभयत्वम् – उभयव्यवहारविषयतावच्छेदकम् । **न विशिष्टत्वात्** – एकविशिष्टापरत्वात् **न अनतिरिक्तम्** अभिन्नम् न । **अतिरिक्तमित्यनुक्त्वा** नानतिरिक्तम् इत्यभिधानम् उभयपदार्थतावच्छेदकत्वावच्छेदेन अतिरिक्तत्वलाभाय । नञ्पदस्य अनुयोगितावच्छेदकावच्छेदेनाभावबोधकत्वव्युत्पत्तेः । **तावता** एकविशिष्टापरत्वमुभयनिष्ठव्यासज्यवृत्तिधर्मश्च उभयपदार्थतावच्छेदकमस्तु, न तावन्मात्रम् । वक्ष्यमाणानुपपत्तेः । प्रकृते च उभयत्वविशिष्टापरत्वमेवेति शङ्काव्युदासः ।।

अत्र हेतुः **वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोः उभयत्वस्य प्रत्यक्षसिद्धत्वादिति** । घटत्वपटत्वयोः सामानाधिकरण्यविरहेऽपि तत्रोभयव्यवहारविषयता-वच्छेदकस्य प्रत्यक्षसिद्धत्वादित्यर्थः । अन्यथा तत्रोभयव्यवहारानुपपत्तेरिति भावः ।।

### व्याख्या

इदं वाक्यं परार्थानुमानघटकप्रतिज्ञारूपम् । उभयत्वमिति पक्षवाचकपदम् । न विशिष्टत्वादनतिरिक्तम् इति साध्यवाचकम् । वैशिष्ट्यभिन्नमिति तदर्थः । पूर्वम् उभयत्वं द्विविधम् एकविशिष्टापरत्वं बुद्धिविशेषविषयत्वं चेति इत्युक्तम् ।

तत्र आद्यस्य ग्रहणे बाधः । द्वितीयस्य ग्रहणे सिद्धसाधनमित्यभिप्रेत्य **उभयत्वं**-उभयव्यवहारविषयतावच्छेदकमित्युक्तम् ।।

न अनतिरिक्तम् इति नञ्द्वयनिवेशस्य प्रयोजनमाह– **अतिरिक्तमित्यनुक्त्वेति** । उभयपदार्थतावच्छेदकत्वावच्छेदेन एकविशिष्टापरत्वभेदलाभे क्वापि उभयत्वम् एकविशिष्टापरत्वरूपं न भवतीत्यर्थलाभात् । तल्लाभस्य प्रयोजनमाह– **तावतेति** । यद्युभयत्वम् एकविशिष्टापरत्वादतिरिक्तमित्युच्यते तदा उभयपदार्थतावच्छेदकत्वावच्छेदेन तादृशभेदालाभात् यत्किंचिदुभयत्वे तादृशभेदबोधकत्वस्यापि संभवात् । तथा च एकविशिष्टापरत्वं बुद्धिविशेषविषयत्वरूपव्यासज्यवृत्तिधर्मश्च उभयपदार्थतावच्छेदकमस्तु, प्रकृते तु उभयत्वम् एकविशिष्टापरत्वमेवेति शङ्का स्यात् सा इदनीं परास्ता भवति । तथा च उभयत्वम् एकविशिष्टापरत्वं न इति प्रतिज्ञा । वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्य प्रत्यक्षसिद्धत्वादिति हेतुः । वैशिष्ट्यं सामानाधिकरण्यम् । भूतले विद्यमानयोः घटपटयोः चक्षुस्संनिकर्षे सति घटत्वपटत्वोभयमिति प्रत्यक्षं जायते । यदि उभयत्वं एकाधिकरणवृत्तित्वरूपसामानाधिकरण्यरूपं स्यात् तदा घटत्वपटत्वयोः एकाधिकरणवृत्तित्वाभावात् घटत्वपटत्वोभयमिति प्रत्यक्षानुपपत्तिः इति भावः । तथा च सामानाधिकरण्यसंबन्धेन घटत्वविशिष्टपटत्वस्य अप्रसिद्ध्या तादृशप्रत्यक्षस्य एकविशिष्टापरविषयकत्वासंभवात् उभयत्वम् एकविशिष्टापरत्वात् अन्यदेवेति भावः ।।

## गादाधरी

**यद्यपि** घटत्वपटत्वोभयमिति प्रतीतौ कालिकसंबन्धघटितसामानाधिकरण्यरूपवैशिष्ट्यस्य विषयता संभवति, **तथापि** वाच्यत्वघटत्वोभयं समवेतमिति प्रतीतिव्यवहारविरहेण उभयं समवेतमिति प्रतीतिव्यवहारयोः समवायिसमवेतत्वरूप-



वैशिष्ट्यविषयतायाः अभ्युपगन्तव्यतया घटत्वपटत्वोभयं समवेतमित्यादौ तादृशवैशिष्ट्याप्रसिद्ध्या व्यासज्यवृत्तिधर्म एव विषय इति भावः ।।

तथा च तदनुरोधेन व्यासज्यवृत्तिधर्म विशेषस्य उभयव्यवहार विषयताया आवश्यकत्वे एकविशिष्टापरत्वस्य तद्व्यवहारविषयत्वमप्रामाणिकमिति न ''भूतत्वमूर्तत्वोभयवान्मूर्तत्वात् इत्यादौ एकविशिष्टापरत्वस्य साध्यतावच्छेदकत्वप्रसक्तिः । तथा सति अनुमितेः उभयवान् इत्याकारकतानुपपत्तेः इति निर्व्यूढम् ।।

## व्याख्या

उभयत्वम् एकविशिष्टापरत्वरूपमिति स्वीकारे घटत्वपटत्वोभयमिति प्रतीतेः अनुपपत्तिः । वैशिष्ट्यं यदि सामानाधिकरण्यरूपं तदा घटत्वपटत्वयोः एकाधिकरणवृत्तित्वरूपसामानाधिकरण्याभावात् घटत्वपटत्वोभयमिति प्रत्यक्षानुपपत्तिः इत्युक्तम् । तत्र शङ्कते– **यद्यपीति** । घटत्वपटत्वयोः यद्यपि समवायसंबन्धेन एकाधिकरणवृत्तित्वं न संभवति, तथापि कालिकसंबन्धेन कालरूपैकाधिकरणवृत्तित्वं संभवत्येव । तथा च घटत्वपटत्वोभयमिति प्रतीतेर्नानुपपत्तिरिति शङ्का । समाधत्ते-**तथापीति** । वाच्यत्वघटत्वयोः कालिकसंबन्धेन कालरूपैकाधिकरणवृत्तित्वेऽपि वाच्यत्वघटत्वोभयं समवेतम् इति प्रतीतिः व्यवहारो वा न भवति । अतः तादृशप्रतीतौ उभयं समवेतमिति व्यवहारो वा न भवति । अतः तादृशप्रतीतौ उभयं समवेतमिति प्रतीतौ व्यवहारे च स्वसमवायिसमवेतत्वरूपं वैशिष्ट्यं विषयः इति अङ्गीकरणीयम् । वाच्यत्वस्य स्वरूपं संबन्ध इति वाच्यत्वसमवायाप्रसिद्ध्या वाच्यत्वसमवायिसमवेतत्वसंबन्धेन वाच्यत्ववैशिष्ट्यं घटे नास्तीति वाच्यत्वघटत्वोभयं समवेतमिति प्रतीतिव्यवहारयोः नापत्तिः । परं तु ''घटत्वपटत्वोभयं समवेतम्'' इति प्रतीतिव्यवहारौ प्रामाणिकौ । तत्र स्वसमवायिसमवेतत्वरूपवैशिष्ट्यं बाधितम् । घटत्वपटत्वयोः एकत्र समवायसंबन्धेन असत्त्वात् घटत्वसमवायिसम-

वेतत्वरूपस्य घटत्ववैशिष्ट्यस्य पटत्वे बाधात् । तस्मात् उभयत्वं न एकविशिष्टापरत्वरूपम् । किंतु उभयत्वं व्यासज्यवृत्तिधर्मरूपम् । व्यासज्यवृत्तित्वं च अयमेकः अयमेकः इत्याकारकबुद्धिविशेषविषयत्वमिति भावः ।।

अपि च उभयत्वं यदि एकविशिष्टापरत्वरूपं स्यात् तदा अनुमितिः ''अयं भूतत्वविशिष्टमूर्तत्ववान्'' इत्याकारा स्यात्, नतु 'अयं भूतत्वमूर्तत्वोभयवान्'' इत्याकारेत्याह– **तथा सति अनुमितेरुभयवानित्याकारकतानुपपत्तेरिति** ।।

## दीधितिः

**न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावात्** । वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरूभयत्वस्य उभयत्वेन तदभावस्य प्रत्यक्षसिद्धत्वात् ।।

## गादाधरी

**ननु मूर्तत्वाधिकरणे** मनसि भूतत्वमूर्तत्वोभयं नास्तीति बुद्धेः एकविशिष्टापराभावावलम्बनेनैवोपपत्तिः । मनसि प्रतियोगिसत्त्वेन उभयवृत्तिधर्मावच्छिन्नाभावासत्त्वादिति क्वचिदेकविशिष्टापरत्वस्याप्युभयव्यवहारविषयतावच्छेदकत्वमावश्यकमित्यत आह– **न वेति** । **तदवच्छिन्नाभावः** – प्रत्येकाधिकरणवृत्तिः उभयव्यवहारविषयतावच्छेदकावच्छिन्नाभावः । **तदवच्छिन्नाभावात्** – एकविशिष्टापरत्वावच्छिन्नाभावात् । ''अनतिरिक्तः'' इति विपरिणतेन संबन्धः । प्रतियोगितावच्छेदकविशिष्टेनैव प्रतियोगिना अभावस्य विरोधात् एकस्य अधिकरणेऽपि व्यासज्यवृत्तिधर्मावच्छिन्नाभावसत्त्वे बाधकाभावादिति भावः ।।

**एतेन** मूर्तत्वस्य व्यासज्यवृत्त्युभयत्वावच्छिन्नव्यभिचारितापि व्यवस्थापिता । **आवश्यकश्च** एकाधिकरणे व्यासज्यवृत्तिधर्मावच्छिन्नतदभावः । अन्यथा



समवायघटितसामानाधिकरण्येन घटत्वादिविशिष्टपटत्वाद्यप्रसिद्ध्या घटादौ समवायेन घटत्व पटत्वोभयं नास्तीति प्रतीतेरनुपपत्तेः । तत्र समवायिसमवेतत्वरूपवैशिष्ट्यावच्छिन्नाभावस्यैव विषयतायाः स्वीकरणीयत्वात् । अन्यथा एककालीनत्वादिरूपवैशिष्ट्यावच्छिन्नस्य घटत्वादेः सत्त्वेन तादृशप्रतीत्यनिर्वाहादित्याह– **वैशिष्ट्यविरहेऽपि घटत्वपटत्वोभयत्वेनाभावस्य प्रत्यक्षसिद्धत्वादिति** ।।

## व्याख्या

**न वा** इति ग्रन्थमवतारयति– **ननु मूर्तत्वाधिकरणे इति** । पूर्वं उभयत्वं द्विविधम् एकविशिष्टापरत्वं, अयमेकः अयमेकः इत्याकारकापेक्षाबुद्धिविषयत्वरूपं चेति । तत्र आद्यं निराकृतम् । तदुपरि शङ्का जायते । उभयत्वस्य यदि एकविशिष्टापररूपत्वं नाङ्गीक्रियते, तदा मनसि भूतत्वमूर्तत्वोभयं नास्तीति प्रतीतेः अनुपपत्तिः । मनसि उभयरूपप्रतियोगिनः प्रत्येकानतिरेकात् मूर्तत्वरूपप्रतियोगिसत्त्वेन भूतत्वमूर्तत्वोभयाभावस्यासंभवात् । प्रतियोगिना साकमभावस्य विरोधात् । अतः उभयत्वं न व्यासज्यवृत्तिधर्मरूपम् । अपि तु भूतत्वविशिष्टमूर्तत्वरूपम् । तथा च भूतत्वमूर्तत्वोभयं नास्तीत्यस्य भूतविशिष्टमूर्तत्वं नास्ति इत्यर्थः । मनसि मूर्तत्वसत्त्वेऽपि भूतत्वमूर्तत्वोभयस्य भूतत्वविशिष्टमूर्तत्वस्य अभावात् तादृशप्रतीतेरुपपत्तिः । तथा च एकविशिष्टापररूपत्वमपि उभयत्वस्याङ्गीकरणीयमिति शङ्कायां तद्वारणाय **न वा तदवच्छिन्नाभावः तदवच्छिन्नाभावात्** इत्युक्तमिति भावः । उभयत्वं यथा क्वचिदपि एकविशिष्टापरत्वरूपं न भवति तथा उभयत्वावच्छिन्नाभावोऽपि एकविशिष्टापरत्वावच्छिन्नाभावरूपो न भवतीत्यर्थः । तर्हि मनसि व्यासज्यवृत्तिधर्मरूपोभयत्वाश्रयमूर्तत्वरूपप्रतियोगिमिति विरोधेन भूतत्व - मूर्तत्वोभयत्वावच्छिन्नाभावस्य कथं सत्त्वमिति चेत्– प्रतियोगितावच्छेदकविशिष्टप्रतियोगिना साकमेव अभावस्य विरोधः, न तु

प्रतियोगिताश्रयेणापि । मनसि भूतत्वमूर्तत्वोभयत्वविशिष्टनिरूपिताधिकरणत्वासत्त्वात् भूतत्वमूर्तत्वोभयाभावसत्त्वं निष्प्रत्यूहमिति भावः ।।

एतदुपपादनस्य प्रकृतोपयोगमाह– **एतेनेति** । मनसि भूतत्वमूर्तत्वोभयत्वावच्छिन्नाभावसत्त्वोपपादनेन तादृशोभयत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववति मनसि मूर्तत्वस्य सत्त्वेन मूर्तत्वस्य व्यभिचारित्वमुपपादितं भवतीत्यर्थः ।।

**वैशिष्ट्यविरहेऽपि** इत्यादिदीधितिमतमवतारयति– **आवश्यकश्चेति** । भूतत्वमूर्तत्वोभयत्वाश्रयमूर्तत्वाधिकरणे मनसि व्यासज्यवृत्तितादृशोभयत्वावच्छिन्नप्रतियोगिताकाभावः अवश्यं स्वीकरणीयः । अन्यथा घटादौ घटत्वपटत्वोभयं समवायेन नास्तीति प्रतीतेरनुपपत्तिः । यदि एकविशिष्टापरत्वावच्छिन्नाभावः (घटत्वविशिष्टपटत्वाभावः) तद्विषयः, तदा समवायिसमवेतत्वरूपसामानाधिकरण्येन घटत्वविशिष्टपटत्वस्य अप्रसिद्धतया तद्भावविषयकतादृशप्रतीतेरनुपपत्तेः । उक्तप्रतीतौ च समवायिसमवेतत्वरूपवैशिष्ट्यावच्छिन्नाभावस्यैव विषयत्वं वाच्यम् । न तु संबन्धान्तरघटितवैशिष्ट्यावच्छिन्नाभावस्य । तथा सति एककालीनत्वरूपवैशिष्ट्यस्य घटत्वे पटत्वे च उभयत्र अबाधितया तादृशवैशिष्ट्यावच्छिन्नस्य घटत्वस्य समवायेन घटे सत्त्वात् "घटे घटत्वपटत्वोभयं नास्तीति" प्रतीतेः अनिर्वाहात् इत्यभिप्रायेणाह– **दीधितौ वैशिष्ट्यविरहेऽपीति** इति भावः । एतदुक्तं भवति– घटत्वपटत्वोभयाभावः प्रत्यक्षसिद्धः । तत्र च उक्तयुक्त्या समवायिसमवेतत्वरूपवैशिष्ट्यविषयकत्वस्य आवश्यकत्वात् तस्य चाप्रसिद्धत्वात् । उक्तप्रतीतेः व्यासज्यवृत्तिधर्मरूपोभयत्वावच्छिन्नाभावविषयकत्वे तु बुद्धिविशेषविषयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नस्य उभयस्य घटे असत्त्वेन घटे घटत्वपटत्वोभयं नास्तीति प्रतीतेरुपपत्तिरिति । **सावधानं पठन्तु जिज्ञासवः** ।।



## दीधितिः

**न च तत्र व्याप्तिरेव,** उभयत्वाधिकरणस्य मूर्तत्वस्य मनसि सत्त्वादिति वाच्यम् । तथात्वेऽपि **उभयत्वेन** रूपेण तत्रासत्त्वात् । **नात्रोभयम् इति प्रतीतेः दुर्वारत्वात्** ।।

## गादाधरी

**ननु तथापि** व्यासज्यवृत्तिनिरुक्तोभयत्वेन साध्यत्वे न मूर्तत्वस्य व्यभिचारिता संभवति । एकप्रतियोगिमत्यपि अभावस्य प्रतियोगिसमानाधिकरणतया मूर्तत्वाधिकरणे मनस्युभयाभावस्य प्रतियोगिव्यधिकरणत्वाभावात् हेतुमति प्रतियोगिव्यधिकरणस्यैव साध्याभावस्य व्यभिचारत्वात् प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्तस्यानिवेशात् इत्याशङ्कां निरस्यति– **न च तत्रेति** । **व्याप्तिरेव** - व्याप्तिरिष्टैव । **तथात्वेऽपीति** मूर्तत्वस्य मनसि सत्त्वेऽपीत्यर्थः । **उभयत्वेनेति** । उभयत्वविशिष्टवत्तायाः मनस्यसत्त्वात् इत्यर्थः ।।

**तथा च** तत्रोभयत्वविशिष्टवैशिष्ट्यविषयकानुमितेः भ्रमतया तत्प्रयोजकहेतोः न सद्धेतुत्वस्वीकारसंभवः । अत एव व्यभिचारलक्षणेऽपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्तमेव निवेश्यम् इति भावः । एकाधिकरणे उभयत्वविशिष्टासत्त्वे प्रमाणमाह– **नात्रोभयमिति** । **अत्रोभयमिति** प्रतीत्यभावो हेतुतया नोक्तः । उभयत्वेन एकस्य सत्त्वोपगमे उभयत्राधिकरणवृत्तितायाः तादृशप्रतीतिविषयतया एकस्मिन् अधिकरणवृत्तित्वाभावेन तादृशप्रतीतेः भ्रमत्वस्यावश्यकत्वात् तादृशप्रमाविरहोपपत्तेः ।।

## व्याख्या

**न च तत्र** इत्यादिमूलमवतारयति– **ननु तथापीति** । **तथापि** - उभयत्वं न एकविशिष्टापरत्वरूपम्, अपि तु अयमेकः अयमेकः इति प्रतीति-

विषयत्वरूपं व्यासज्यवृत्तिधर्मरूपम् । तत्तु प्रत्येकमपि वर्तते इति स्वीकारेऽपि भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इत्यत्र मूर्तत्वहेतोः व्यभिचारित्वं न संभवति । हेत्वधिकरणवृत्तिः प्रतियोगिव्यधिकरणः साध्याभावो हि व्यभिचारः । मूर्तत्वरूपहेतुमति मनसि भूतत्वमूर्तत्वोभयाभावस्य सत्त्वेऽपि तस्य मूर्तत्वरूप-प्रतियोग्यधिकरणमनोवृत्तितया प्रतियोगिसमानाधिकरणत्वेन प्रतियोगि-व्यधिकरणत्वाभावात् अभावान्तरमादाय तदप्रतियोगित्वात् साध्यस्य तत्समानाधिकरणमूर्तत्वस्य सद्धेतुत्वात् । तत्र व्याप्तेरिष्टत्वात् । व्यभिचारलक्षणेऽपि व्याप्तिलक्षणे इव अभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्तानिवेशात् । तथा च **दीधितिकारेण** तस्य व्यभिचारित्वं मत्वा तत्रातिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नपर्यन्त – निवेशनमित्युक्तं न संगच्छते इति शङ्कां **दीधितिकार** एव निराकरोतीति भावः । **दीधितौ तत्रेति** । **तत्र** मूर्तत्वरूपहेतौ **व्याप्तिरेव** = व्याप्तिरिष्टैव । मूर्तत्वस्य भूतत्वमूर्तत्वोभयाभाव प्रतियोगित्वमुप-पादयति– उभयत्वाधिकरणस्य मूर्तत्वस्येति । उभयाभावस्य हि उभयत्वाश्रयः प्रतियोगी । उभयत्वाश्रयश्च मूर्तत्वमपि । तथा च मूर्तत्वरूपप्रतियोग्यधिकरणमनो-वृत्तितया भूतत्वमूर्तत्वोभयाभावस्य प्रतियोग्यधिकरणावृत्तित्वरूपं प्रतियोग्यसामाना-धिकरण्यं नास्तीति प्रतियोग्यधिकरणावृत्तिः सन् हेत्वधिकरणमनोवृत्तिरभावः अन्य एव अभावः तदप्रतियोगित्वं साध्येऽस्तीति तादृशसाध्यसामानाधिकरण्यस्य हेतौ मूर्तत्वे सत्त्वात् तत्र व्याप्तिरिष्टैव शङ्कितुराशयः । तत्र समाधानं **तथात्वेऽपीत्यादिना** उक्तम् । **तथात्वेऽपि** = मूर्तत्वस्य मनसि सत्त्वेऽपि । उभयत्वेन रूपेण मूर्तत्वस्य मनस्यसत्त्वादित्यर्थः । एतावता व्याप्तिरिष्टैवेति शङ्कायाः किं समाधानमुक्तं भवतीति शङ्कायामाह– **गादाधर्याम्– तथा चेत्यादिना** । उभयत्वरूपसाध्यता-वच्छेदकविशिष्टसाध्य – (मूर्तत्वभूतत्वोभय) विषयकानुमितेः मनसि, मनो



भूतत्वमूर्तत्वोभयवत् इत्याकारकानुमितेः भ्रमतया तत्प्रयोजकहेतोः तादृशानुमितिजनकज्ञानविषयस्य हेतोः मूर्तत्वस्य सद्धेतुत्वं साध्यव्याप्तिविशिष्टहेतुत्वं न स्वीकरणीयम् । तथा सति सल्लिङ्गकपरामर्शस्य भ्रमानुमिति जनकत्वप्रसङ्गादिति भावः । तथा च एतदनुरोधेनैव मूर्तत्वहेतोः भूतत्वमूर्तत्वोभयत्वावच्छिन्नव्यभिचारित्वं वक्तव्यमिति व्यभिचारलक्षणेऽपि अभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं निवेशनीयम् इति भावः ।।

उभयत्वाश्रयस्य एकस्याधिकरणे उभयत्वविशिष्टाश्रयत्वस्वीकारे किं बाधकमिति शङ्कायां बाधकप्रमाणं दर्शयति **दीधितिकारः नात्रोभयमिति प्रतीतेर्दुर्वारत्वादिति** । मनसि भूतत्वमूर्तत्वोभयं नास्तीति प्रतीतिः सर्व-संमता । यदि मनसि भूतत्वमूर्तत्वोभयत्वविशिष्टाधिकरणत्वमिष्येत तादृशोभयत्वा-वच्छिन्नाभावः तत्र नैव स्यादिति नात्रोभयमिति प्रतीतिर्नोपपद्येत ।।

उभयत्वविशिष्टस्य मनसि सत्त्वे ''मनसि भूतत्वमूर्तत्वोभयमस्ति'' इति प्रतीतिप्रसङ्गस्यैव स्वरसतो वक्तव्यतया तदुपेक्ष्य नात्रोभयमित्युक्तेः भावमाह– **अत्रोभयमितीति** । अत्रोभयमिति प्रतीतौ उभयत्वविशिष्टव्यक्तिद्वये अधिकरण-वृत्तित्वभानात् एकत्र तादृशाधिकरणवृत्तित्वसत्त्वेऽपि अपरत्र तदभावादेव तादृश-प्रतीत्यापत्तिर्न संभवतीति उच्यते चेत् नैतावता उभयत्वविशिष्टैकसत्त्वं बाध्येत इति भावः ।।

## दीधितिः

**अत्यन्तपदं च अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधि-करण्यस्य अत्यन्ताभावत्वनिरूपकप्रतियोगितायाश्च लाभाय । अन्यथा सर्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वात्** तद्भेदस्य च स्वस्वरूपानतिरिक्ततया **प्रतियोग्यसामानाधिकरण्यस्यैव** दुर्लभत्वापत्तेः ।।

सर्वेषामेव अभावानां हेतुसमानाधिकरणात्यन्ताभावत्वनिरुपकप्रतियोग्य-समानाधिकरणाभावान्तरात्मकस्य स्वभेदस्य प्रतियोगित्वात् अभावसाध्यकाव्याप्तेश्च इति संप्रदायविदः ।।

## गादाधरी

**ननु** प्रतियोग्यसामानाधिकरण्यस्य **अभावविशेषणत्वे** लक्षणेऽत्यन्तपद-वैयर्थ्यम् । धूमाद्यधिकरणनिष्ठवह्न्यादिभेदस्य प्रतियोगिसमानाधिकरणत्वेनैव साध्यतावच्छेदकस्य तत्प्रतियोगितावच्छेदकतायाः अकिञ्चित्करत्वात् इत्याशङ्कायां सांप्रदायिकोपदर्शितमत्यन्त पदप्रयोजनमाह– **अत्यन्तपदं चेति** । **अत्यन्ता-भावत्वनिरूपक प्रतियोग्यसामानाधिकरण्यस्येति** । **लाभाय** इत्यग्रिमेणा-न्वयः । स्वं यस्य प्रतियोगिनोऽत्यन्ताभावः तादृक्प्रतियोग्यसामानाधिकरण्यपर्यन्तस्य अभावविशेषणत्वलाभायेत्यर्थः । **अत्यन्ताभावत्वनिरूपकप्रतियोगिताया** इति । प्रतियोगितावच्छेदकेत्यत्र या प्रतियोगिता निविष्टा तत्रात्यन्ताभावत्वरूपानु-योगितानिरूपकत्वविशेषणलाभायेत्यर्थः । क्रमेण व्यावृत्तिमाह– **अन्यथेति** । **सर्वस्यैवाभावस्येति** । हेतुसमानाधिकरणाभावत्वेनोपादेयस्य सर्वस्य गोत्वाद्यभावस्येत्यर्थः । **स्वसमानाधिकरणाभावान्तरभिन्नत्वात्** । स्वं यस्य समानाधिकरणं तादृशघटत्वाभावभेदवत्त्वात् इत्यर्थः । **स्वरूपानतिरिक्तत्वात्** गोत्वाद्यभावरूपाधिकरणस्वरूपत्वात् । अभावाधिकरणकाभावप्रतियोगिकाभावस्य अधिकरणीभूताभावस्वरूपतेति सिद्धान्तादिति भावः । **प्रतियोग्यसमानाधि-करण्यस्यैव दुर्लभत्वापत्तेरिति** । **गोत्वाद्यभावानाम्** अत्यन्ताभावत्वनिरूपक-गोत्वादिरूपप्रतियोग्यसमानाधिकरणत्वेऽपि स्वनिष्ठभेदत्वनिरूपकघटत्वाद्यभाव-रूपप्रतियोग्यसमानाधिकरणत्वादिति भावः ।।

**न च भावस्वरूपस्यैव** अभावस्य तादृशत्वं सुलभमिति वाच्यम् । तस्यापि स्वसमानाधिकरणभेदभिन्नत्वेन तद्दोषतादवस्थ्यात् । भेदभेदस्यानवस्थाभयेन



अधिकरणस्वरूपत्वाङ्गीकारात् । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यसामाना-धिकरण्यनिवेशे सर्वत्र न तादृशाभावप्रसिद्धिः । **किं तु विशेषणताविशेषेण** साध्यतास्थले ।।

## व्याख्या

**नन्विति** । **मणौ** व्याप्तिलक्षणघटकाभावविशेषणतया अत्यन्तपदं दृश्यते । तदनुक्तौ हेतुसमानाधिकरणाभाव इत्यनेन हेत्वधिकरणपर्वतादिनिष्ठं साध्यभेदं वह्न्यादिभेदमादाय तत्प्रतियोगित्वमेव साध्ये वह्न्यादावस्तीत्य-व्याप्तिर्वक्तव्या । अभावे प्रतियोग्यसमानाधिकरणेति विशेषणसत्त्वात् वह्निभेदस्य प्रतियोगी यो वह्निः तदधिकरणपर्वतवृत्तितया प्रतियोग्यधिकरणावृत्तित्वरूपं प्रतियोग्यसामानाधिकरण्यं नास्तीत्यत एव साध्यभेदस्य व्यावृत्तिसंभवात् अत्यन्त-पदं व्यर्थमित्यर्थः । प्रतियोग्यसामानाधिकरण्यरूपविशेषणाभावपक्षे अव्याप्तिवारण-रूपप्रयोजनं संभवतीति **अभावविशेषणत्वे** इत्युक्तम् । स्वं घटाद्यभावः यस्य प्रतियोगिनः अत्यन्ताभावो भवति – घटादेः अत्यन्ताभावो भवति तादृशघटादिरूप प्रतियोग्यसामानाधिकरण्यपर्यन्तस्य लाभायेत्यर्थः । स्वनिष्ठात्यन्ताभावत्वनिरूपक-प्रतिगोग्यसामानाधिकरण्यलाभायेत्यर्थः । एवं प्रतियोगितानवच्छेदकेत्यत्र प्रतियोगितापदेनापि अत्यन्ताभावत्वनिरूपकप्रतियोगिता विवक्षिता । उभयत्र स्वपदेन हेतुसमानाधिकरणाभावः विवक्षितः । सिद्धान्ते अभावत्वस्य अनुयोगिता-विशेषरूपत्वस्वीकारात् अत्यन्ताभावत्वरूपानुयोगितेत्युक्तम् ।।

तथा च स्वनिष्ठात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणो हेतुसमा-नाधिकरणो योऽभावः तन्निष्ठात्यन्ताभावत्वतिरूपकप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति पर्यवसन्नम् । पर्वतो वह्निमान् धूमादित्यादौ स्वं घटाद्यत्यन्ताभावः तन्निष्ठस्यात्यन्ताभावत्वस्य

निरूपकः प्रतियोगी घटादिः तदसमानाधिकरणः हेतुसमानाधिकरणः अभावः घटाद्यभावः एव । तन्निष्ठात्यन्ताभावत्वनिरूपकप्रतियोगिता घटादिनिष्ठा तदनवच्छेदकं वह्नित्वरूपं साध्यतावच्छेदकं भवतीति लक्षणसमन्वयः ।।

पर्वतो धूमवान् वह्नेः इत्यादौ स्वपदेन धूमाभावः ग्राह्यः तन्निष्ठात्यन्ताभावत्वनिरूपकप्रतियोगी धूमः तदसमानाधिकरणः हेत्वधिकरणायोगोलकवृत्तिः अभावः धूमाभावोऽपि तन्निष्ठात्यन्ताभावत्वनिरूपकधूमनिष्ठप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं धूमत्वमिति नातिव्याप्तिः । क्रमेण व्यावृत्तिमाह– **अन्यथेतीति** । प्रथमविशेषणानुपादाने पर्वतो वह्निमान् धूमात् इत्यादौ हेतुसमानाधिकरणोऽभावः गोत्वाभावः स च घटत्वाभावात् भिन्नः इति गोत्वाभावे घटत्वाभावभेदो वर्तते इति गोत्वाभावाधिकरणकस्य घटत्वाभावभेदस्य गोत्वाभावस्वरूपत्वम्– अभावाधिकरणकाभावस्य अधिकरणीभूताभावस्वरूपत्वात् । ततश्च गोत्वाभावः घटत्वाभावभेदस्वरूप इति तन्निष्ठभेदत्वनिरूपकप्रतियोगी घटत्वाभावः तदधिकरणपटादिवृत्तित्वात् गोत्वाभावस्य एवमभावान्तराणामपि भेदत्वनिरूपकप्रतियोगिसमानाधिकरणत्वात् प्रतियोग्यसमानाधिकरणाभाव एवाप्रसिद्ध इति असंभवः स्यात् । तद्वारणाय अत्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणेत्युक्तम् । तदुक्तौ च गोत्वाभावनिष्ठात्यन्ताभावत्वनिरूपकः प्रतियोगी गोत्वमेव तदधिकरणावृत्तिः गोत्वाभाव एव प्रसिद्धः गोत्वाधिकरणे गवि गोत्वाभावस्यासत्त्वादिति नासंभवः । एतदेवोपपादयति– **गोत्वाद्यभावानामित्यादिना** ।।

ननु हेतुसमानाधिकरणाभावः इत्यनेन भावस्वरूपः वह्निस्वरूपः वह्न्यभावाभावो गृह्यते, तत्प्रतियोगी वह्न्यभावः तदसामानाधिकरणत्वं वह्निरूपे वह्न्यभावाभावे एव प्रसिद्धमिति शङ्कां वारयति– **न च भावस्वरूपस्यैवेति** ।



भावात्मकः उक्ताभावः यत्र वर्तते तत्र कश्चित् भेदोऽपि वर्तते । उक्ताभावश्च तादृशभेदात् भिन्न इति तत्र तादृशभेदभेदः वर्तते । स चाधिकरणीभूततादृशाभावस्वरूप एव । अतिरिक्तत्वे अनवस्थाप्रसङ्गात् । तथा च तस्यापि स्वप्रतियोगितादृशभेदसामानाधिकरण्यात् अप्रसिद्धिरेवेति भावः ।।

प्रतियोग्यसमानाधिकरण्यशरीरे संबन्धविशेषः अवश्यं निवेशनीयः । तत्र स्वप्रतियोगितावच्छेदकसंबन्धनिवेशपक्षे सर्वत्र न तादृशाभावाप्रसिद्धिः । वह्निमान् धूमात् इत्यादौ गोत्वाभावनिष्ठघटत्वाभावभेदोपादाने गोत्वाभावप्रतियोगितावच्छेदकसमवायसंबन्धेन गोत्वाभावरूप प्रतियोग्यधिकरणस्यैवाप्रसिद्ध्या तदुपादानासंभवेन गोत्वरूपप्रतियोगिन एव ग्राह्यतया तदसामानाधिकरण्यस्य च गोत्वाभावेऽक्षतत्वादिति भावः ।।

**किं तु विशेषणताविशेषेणेति** । दैशिकविशेषणताविशेषेण स्वरूपसंबन्धेनेत्यर्थः । तथा च घटत्वाभाववान् पटत्वात् इत्यादावप्रसिद्धिः । तथा हि– तत्र हेतुसमानाधिकरणाभावः पटत्वाभावाभावः । तत्र च गोत्वाभावभेदो वर्तते । स च उक्तयुक्त्या अधिकरणस्वरूप इति, तदीय भेदत्वनिरूपकप्रतियोगिनः गोत्वाभावस्य स्वप्रतियोगितावच्छेदकीभूतदैशिकविशेषणतासंबन्धेन अधिकरणप्रसिद्ध्या तत्समानाधिकरणत्वादिति क्रमेण प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धिरिति भावः ।।

## गादाधरी

**तन्मते** अभावे साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वस्य निवेश्यत्वात् । **साध्यतावच्छेदक**संबन्धस्य तत्र निवेशेऽपि तत्रैव तदप्रसिद्धिः द्रष्टव्या । **अत्यन्ता**भावत्वनिरूपक प्रतियोग्यसामानाधिकरण्य निवेशेऽपि सर्वेषा-

मेवाभावानां विशिष्टस्वाभावादिरूपात्यन्ताभावत्व निरूपकप्रतियोगिसामानाधिकरण्य नियमात् तदसमानाधिकरणाभावाप्रसिद्धेः । **यादृशप्रतियोगिते**त्यादिना वक्ष्यमाणरीतेरनुसरणे प्रतियोगिनि अत्यन्ताभावत्वनिरूपकत्वनिवेशवैयर्थ्यमत्रास्वरसबीजमेव ।।

**हेतुसमानाधिकरणेति** । हेतुसमानाधिकरणस्य भेदत्वनिरूपकाभावान्तररूप प्रतियोगिसमानाधिकरणत्वेऽपि विवक्षितात्यन्ताभावत्वनिरूपक प्रतियोग्यसामानाधिकरण्यवान् गोत्वाभावादिः, घटत्वाभावदिरूपसाध्यस्य तन्निष्ठस्वभेदात्मकस्य तस्य प्रतियोगित्वात् इत्यर्थः ।।

### व्याख्या

तन्मते प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यधिकरणावृत्तित्व निवेशमते पर्वतो वह्निमान् धूमान् इत्यादौ हेतुसमानाधिकरणः गोत्वाभावः प्रतियोगितावच्छेदकसमवायसंबन्धेन गोत्वरूपप्रतियोग्यधिकरणे गवि अवर्तमानः प्रसिद्ध एवेत्याशङ्क्याह– **तन्मत** इति । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यसामानाधिकरण्यनिवेशमते इत्यर्थः ।।

अभावे हेतुसमानाधिकरणाभावे साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताक इति विशेषणं देयम् । अन्यथा वह्निमान् धूमात् इत्यादौ हेतुमति पर्वते योऽभावः समवायसंबन्धावच्छिन्नप्रतियोगिताकः वह्न्यभावः सः प्रतियोगितावच्छेदकसमवायसंबन्धेन प्रतियोग्यधिकरणवह्न्यवयवावृत्तिः इति तमभावमादाय तत्प्रतियोगितावच्छेदकमेव वह्नित्वम् इत्यव्याप्तिः स्यात् । अभावे साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वनिवेशे तु समवायसंबन्धावच्छिन्नाभावः न ग्रहीतुं शक्यते । संयोगसंबन्धावच्छिन्नवह्न्यभावस्तु हेत्वधिकरणपर्वतवृत्तिर्न भवतीति संयोगसंबन्धावच्छिन्नघटाद्यभावमादाय समन्वयः कार्यः । इत्थं च गोत्वाभावः वह्निमान् धूमात् इत्यादौ प्रतियोगितावच्छेदकसमवायसंबन्धेन प्रतियोगिगवाधिकरणा-



वृत्तिः इति वक्तुं न शक्यते । तस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वाभावात् । एवमभावसाध्यकस्थलेऽपि घटत्वाभाववान् पटत्वात् इत्यादौ गोत्वाभावः न लक्षणघटकः । तत्र हि साध्यतावच्छेदकसंबन्धः दैशिकविशेषणता, तदवच्छिन्नप्रतियोगिताकत्वाभावात् गोत्वाभावस्य । अतः पूर्वोक्तरीत्यैव अप्रसिद्धिः वक्तव्येति भावः ।।

एवं साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसामानाधिकरण्यनिवेशकल्पेऽपि घटत्वाभाववान् पटत्वात् इत्यत्रैव अप्रसिद्धिः इत्याह– **साध्यतावच्छेदकेति** ।।

इतः परं संप्रदायविदां मते अस्वारस्यं वक्तुमारभते ।।

अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यनिवेशेऽपि हेतुसमानाधिकरणत्वेन ग्राह्याणां सर्वेषामेवाभावानां गोत्वाद्यभावानां पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकात्यन्ताभावत्वनिरूपकप्रतियोगिसमानाधिकरणतया अप्रसिद्धितादवस्थ्यमेवेत्याह– **अत्यन्तेति** । तथा हि– हेतुसमानाधिकरणो यो गोत्वाद्यभावः तस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपः गोत्वाभावनिष्ठस्य अत्यन्ताभावत्वस्य निरूपकः प्रतियोगी पूर्वक्षणवृत्तित्वविशिष्टगोत्वाभावाभावरूपतादृशप्रतियोग्यधिकरणवृत्तितया तदवृत्तिरभाव एवाप्रसिद्धः । किंचित् स्पष्टीक्रियते– धूमादिरूपहेत्वधिकरणवृत्तिः यो गोत्वाभावः, सः पूर्वक्षणवृत्तित्वविशिष्टगोत्वाभावाभावाभावरूपः । तृतीयाभावस्य प्रथमाभावरूपत्वात् तस्य च विशिष्टगोत्वाभावस्य शुद्धगोत्वाभावानतिरिक्तत्वात् । तस्य च गोत्वाभावस्य द्वौ प्रतियोगिनौ । एकः गोत्वरूपः, अन्यश्च पूर्वक्षणवृत्तित्वविशिष्टगोत्वाभावाभावः । तस्य केवलान्वयितया, दैशिकविशेषणतासंबन्धेन तादृशप्रतियोगिसामानाधिकरण्यस्य सर्वेष्वभावेषु सत्त्वात् तदसामानाधिकरणाभावाप्रसिद्धिः ।।

ननु उक्तदोषपरिहाराय यादृशप्रतियोगिताश्रयानधिकरणत्वं हेतुमतः तादृश-प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदकस्येति **दीधितिकृता** वक्ष्यमाणरीतेरनुसारेण अत्यन्ताभावत्वनिरूपकत्वस्यैव वैयर्थ्यम् । तथाहि– हेतुसमानाधिकरणाभावः गोत्वाभावः तन्निरूपितयादृशप्रतियोगिता गोत्वनिष्ठप्रतियोगिता तदाश्रयगोत्वानधि-करणत्वं हेतुमतः पर्वतस्य, न तु पूर्वक्षणवृत्तित्वविशिष्टगोत्वाभावाभावनिष्ठा प्रतियोगिता तादाश्रयाधिकरणत्वात् हेतुमतः तादृशगोत्वनिष्ठप्रतियोगितानवच्छेद-कत्वस्य साध्यतावच्छेदके वह्नित्वादौ सत्त्वात् दोषाभावात् ।।

एवं सति अत्यन्ताभावत्वनिरूपकेत्याद्यनिवेशेऽपि हेतुसमानाधिकरण-गोत्वाद्यभावनिष्ठ घटत्वाद्यभावभेदमादाय न दोषः । गोत्वाभावीययादृशप्रतियोगिते-त्यनेन घटत्वाभावनिष्ठप्रतियोगितायाः उपादाने तदाश्रयाधिकरणत्वात् हेतुमतः तदनधिकरणत्वासंभवेनैव तद्वारणात् गोत्वनिष्ठ प्रतियोगिताया एवोपादेयत्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात् दोषाभावादिति भावः ।।

एवमुत्तरत्र प्रतियोगितावच्छेदकमित्यत्रापि प्रतियोगितायामत्यन्ताभावत्व-निरूपकत्वं न निवेशनीयम् । तस्य प्रयोजनं हि घटत्वाभाववान् पटत्वात् इत्यादावव्याप्तिवारणम् । तथा हि– अत्र हेतुसमानाधिकरणः गोत्वाभावः स च स्वनिष्ठात्यन्ताभावत्वनिरूपकप्रतियोगिभूतगोत्वासमानाधिकरणः, तत्र गोत्वाभावे घटत्वाभावरूपप्रकृतसाध्यभेदः वर्तते । स च अभावाधिकरणकाभावप्रतियोगिका-भावः अधिकरणीभूताभावस्वरूप इति न्यायेन गोत्वाभावरूपः । तत्प्रतियोगित्वात् घटत्वाभावरूपसाध्यस्य तदप्रतियोगित्वं नास्तीत्यव्याप्तिः । अत्यन्ताभावत्व-निरूपकप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके निवेशे तु उक्तस्थले गोत्वा-भावनिष्ठं घटत्वाभावभेदमादाय न दोषः । तदीयभेदत्वनिरूपकप्रतियोगितावच्छे-दकत्वेऽपि घटत्वाभावत्वरूपस्य साध्यतावच्छेदकस्य, तदीयात्यन्ताभावत्व-



निरूपकप्रतियोगितायाः गोत्व एव सत्त्वेन गोत्वत्वस्यैव तादृशप्रतियोगिता-वच्छेदकत्वेन घटत्वाभावत्वस्य तदनवच्छेदकत्वात्– नाव्याप्तिरिति एतद्विशेषण-स्यापि वैयर्थ्यम् इत्याह– **अभावसाध्यकेतीत्यादिना** ।।

## गादाधरी

**अभावसाध्यकेति** । घटत्वाभावादिसाध्यकपटत्वादिसाधनाव्याप्ते-रित्यर्थः । **अत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशेऽपि** संबन्धान्तरा-वच्छिन्नसाध्यात्यन्ताभावप्रतियोगितावारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नत्व-निवेशध्रौव्ये एतद्विशेषणमनर्थकम् । साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसामानाधि-करण्यं निवेश्य संबन्धान्तरावच्छिन्नाभाववारणेऽपि सर्वेष्वेवाभावेषु उक्तरीत्या अत्यन्ताभाव-त्वनिरूपकप्रतियोगिसामानाधिकरण्यस्यापि सत्त्वेन प्रकृतप्रतियोगिता-वदसामानाधिकरण्यस्यैव निवेशनीयतया साध्यनिष्ठप्रतियोगिताश्रयासामानाधिकरण्यस्य सद्धेत्वधिकरणवृत्तित्वविशिष्टाभावे असत्त्वेन अव्याप्त्यप्रसक्तिरित्यस्वरसबीजम् ।।

## व्याख्या

उत्तरत्र प्रतियोगितायामपि अत्यन्ताभावत्वनिरूपकेति विशेषणं व्यर्थमित्याह– **अत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशेऽपीति** । पर्वतो वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणं समवायसंबन्धावच्छिन्न प्रतियोगिताकं वह्न्यभावमादाय तत्प्रतियोगितावच्छेदकत्वमेव वह्नित्वेऽस्तीत्येवं प्रसक्तायाः अव्याप्तेर्वारणाय साध्यतावच्छेदकसंबन्धावच्छिन्न प्रतियोगितानिवेशस्य आवश्यकत्वे पूर्वोक्तरीत्या वह्नि भेदप्रतियोगितायाः तादात्म्यसंबन्धावच्छिन्नत्वेन साध्यतावच्छेद-कसंयोगसंबन्धावच्छिन्नत्वं नास्तीति वारणसंभवेन अत्यन्ताभावत्वनिरूपक-प्रतियोगितानिवेशो व्यर्थः ।।

साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसमानाधिकरणत्वं निवेश्य समवाय-संबन्धावच्छिन्नवह्न्यभावस्य साध्यतावच्छेदकसंयोगसंबन्धेन स्वप्रतियोगिवह्न्यधि-

करणपर्वतवृत्तितयैव वारणसंभवे प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं न निवेश्यम् ।।

तथा सति वह्न्यादिभेदप्रतियोगितामादायाव्याप्तिवारणाय अत्यन्ताभावत्वनिरूपकेति प्रतियोगिताविशेषणमावश्यकमिति चेत्– तन्निवेशेऽपि हेतुसमानाधिकरणानां सर्वेषामेवाभावानां अत्यन्ताभावत्वनिरूपकपूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया तदसमानाधिकरणाभावाप्रसिद्धिवारणाय साध्यनिष्ठप्रतियोगितावदसमानाधिकरणत्वस्यैव निवेशः कार्यः । तथा सति सद्धेत्वधिकरणनिष्ठानां सर्वेषामेव अभावानां घटाद्यभावानां साध्यनिष्ठप्रतियोगिताश्रयसाध्यसामानाधिकरण्यनियमात् वह्निभेदस्यापि साध्यनिष्ठप्रतियोगितावद्वह्न्यधिकरणपर्वतवृत्तितया तदवृत्तित्वरूपप्रतियोग्यसामानाधिकरण्यविरहेण लक्षणाघटकतया तत्प्रतियोगितावच्छेदकत्वमादाय अव्याप्तेरप्रसक्त्या प्रतियोगितायामत्यन्ताभावत्वनिरूपकत्वम् अनावश्यकम् इति भावः । **सूक्ष्मोऽयं विषयः बहुवारमालोच्य लिखितः** । विद्वांसः प्रमाणम् ।।

### दीधितिः

**अथ यदा गोत्वं** तदा गौरित्यत्रातिव्याप्तिः । **प्रलयस्य** गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात् ।।

### गादाधरी

संप्रदायानुमतात्यन्ताभावत्वनिरूपक प्रतियोगितानिवेशपक्षेऽतिव्याप्तिमाशङ्कते– **अथेत्यादिना** । **यदा गोत्वमिति** । **कालिकसंबन्धेन** गोगोत्वयोः हेतुसाध्यत्वलाभाय गोमान् अयं गोत्वात् इति प्रतिज्ञाहेतू अनभिधाय कालिकसंबन्धावच्छिन्नवृत्तिबोधक **''दा''** प्रत्ययघटितोदाहरणाभिधानम् । एवमग्रेऽपि । **प्रलयस्येति** । व्यभिचारनिरूपकहेत्वधिकरणस्येत्यादिः । ध्वंसवत्त्वेनात्यन्ताभावा-



नधिकरणत्वात् इति प्राचामनुमतं ध्वंसप्रागभावयोः अत्यन्ताभावविरोधित्वमादृत्य । **एतदेव** अग्रे निराकृत्य समाधेयम् ।

### व्याख्या

उक्तरीत्या अत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशपक्षे स्वयं दोषं शङ्कते– **अथेति** । अयं गोमान् गोत्वात् इत्यादाविति वक्तव्ये **यदा तदा** इत्युक्तेः आशयमाह– **कालिकसंबन्धेनेति** । कालिकसंबन्धेन गोशून्ये प्रलये गोत्वस्य कालिकसंबन्धेन वृत्तित्वात् अयं हेतुः व्यभिचारी । अत्र हि प्रलये विद्यमानस्य हेतुगोत्वसमानाधिकरणस्य गवात्यन्ताभावस्य प्रतियोगित्वात् गोः अप्रतियोगित्वं नास्तीति अतिव्याप्तिवारणं कर्तव्यम् । तच्च न संभवति । प्रलयस्य गोध्वंसाधिकरणत्वात् तदत्यन्ताभावानधिकरणत्वात् । ध्वंसप्रागभावयोः अत्यन्ताभावविरोधित्वात् । एतदेवानुपपन्नम् इत्यग्रे समाधास्यतीत्याह– **एतदेवेति** ।।

### गादाधरी

**अथ** कालिकसंबन्धेन ध्वंसादिमति काले अत्यन्ताभाववृत्तौ अविरोधः । महाकालादौ समवायादिसंबन्धेन गवात्यन्ताभावस्य सर्वानुमतत्वात् ।।

**न च कालिकसंबन्धावच्छिन्न**गवात्यन्ताभावस्य **तत्संबन्धावच्छिन्नगोध्वंसात्यन्ताभावरूपतया** अत्यन्ताभावस्य **त्रितयप्रतियोगिकत्व**मङ्गीकुर्वाणैः प्राचीनैरुपगमात् कालिकसंबन्धरूपप्रतियोगितावच्छेदकसंबन्धेन गोध्वंसवति तत्संबन्धावच्छिन्नगवाभाववृत्तिर्न तेषामनुमतेति वाच्यम् ।।

**एवमपि** कालिकसंबन्धेन प्रतियोगिमत्यपि तेन संबन्धेनात्यन्ताभावस्य कालिकसंबन्धेन वृत्तावविरोधात् तेन संबन्धेन प्रलये वर्तमानमत्यन्ताभावमादायातिव्याप्तिवारणसंभवात् । अभावस्य संबन्धविशेषनिवेशे प्रयोजनाभावात् ।।

### व्याख्या

**दीधितिकारो**क्तावनुपपत्तिं शङ्कते– **अथेत्यादिना** । महाकालः सर्वाधार इति सर्वसंमतत्वात् ध्वंसवत्यपि महाकाले गवात्यन्ताभाववत्त्वमावश्यकम् । तथा महाकालवृत्तेः गवात्यन्ताभावस्य महाकालोपाधौ प्रलयेऽपि सत्त्वमावश्यकम् । अन्यथा रूपध्वंसवति रूपात्यन्ताभावः कथं वर्तेत । रूपध्वंसस्य अत्यन्ताभावविरोधित्वात् ।।

ननु अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वं प्राचीनैरिष्यते । तथाहि– गवात्यन्ताभावस्य गौः गोध्वंसः गोप्रागभावश्च प्रतियोगिनः । कथमिति चेत्– यत्र यत्र गोरत्यन्ताभावः तत्र सर्वत्र गोध्वंसात्यन्ताभावः गोप्रागभावात्यन्ताभावश्च वर्तते इति त्रयाणां समनियतत्वात् समनियतानामभावानामैक्येन तत्संभवात् । ततश्च कालिकसंबन्धरूप प्रतियोगितावच्छेदकसंबन्धेन गोरूपप्रतियोगिनोऽनधिकरणेऽपि प्रलये गोध्वंसरूपप्रतियोग्यधिकरणतया तेन संबन्धेन प्रतियोगिमति विरोधेन तेन संबन्धेन गवात्यन्ताभावस्य वृत्त्यसंभवात् अभावान्तरमादाय तदप्रतियोगित्वस्य साध्ये गवि सत्त्वेन अतिव्याप्तिकथनं संगच्छते इत्याशङ्कते– **न च कालिकसंबन्धावच्छिन्नेत्यादिना** । गोनिष्ठकालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः । **तत्संबन्धावच्छिन्नगोध्वंसात्यन्ताभावरूपतायाः** – गोध्वंसनिष्ठकालिकसंबन्धावच्छिन्न प्रतियोगिताकाभावरूपतायाः । द्वयोरभावयोः समनियततया ऐक्यादिति शेषः । **त्रितयप्रतियोगिकत्वम्** – गोगोध्वंस-गोप्रागभाव-एतत्त्रितय प्रतियोगिकत्वम् ।।

समाधत्ते– **एवमपी**त्यादिना । उक्तरीत्या अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वेऽपि प्रतियोग्यभावयोः विरोधः कालिकसंबन्धातिरिक्तसंबन्धेनैव । कालिकसंबन्धेन प्रतियोगिमत्यपि काले कालोपाधौ वा कालिकसंबन्धावच्छिन्नप्रतियोगिनिष्ठप्रतियोगिताकाभावस्य कालिकसंबन्धेन वृत्तौ बाधकं नास्ति । अन्यथा कालस्य कालिकसंबन्धेन सर्वाधारत्वानुपपत्तेः । अयमाशयः– यदा काले किंचिद्देशविच्छेदेन गौर्वर्तते, तदानीमेव गोशून्यदेशान्तरावच्छेदेन गवात्यन्ताभावोऽपि वर्तते । एवं कालस्य नित्यतया खण्डकालभेदेन तयोः प्रतियोगितदभावयोः सत्त्वमुपपद्यते । एवं च हेतुमति काले कालिकसंबन्धेन वर्तमानो यो गवात्यन्ताभावः तत्प्रतियोगित्वमेव साध्ये गव्यस्तीति नातिव्याप्तिः । अभाववृत्तौ स्वरूप संबन्धविशेषानिवेशादिति भावः ।।



### गादाधरी

**न च** – प्रतियोग्यसामानाधिकरण्येनाघटितापि व्याप्तिः अनुमित्यौपयिकी, तद्विशेषणानुपस्थितिदशायामपि अनुमितेः आनुभाविकतायाः वक्ष्यमाणत्वात्, तत्र चाभावस्य संबन्धविशेषोऽवश्यमेव प्रवेश्यः; अन्यथा हेतुमति कालिकसंबन्धेन वर्तमानं साध्याभावमादायाव्याप्तेरिति तादृशव्याप्तावेवोक्तस्थले **प्रमात्वप्रसङ्गपरः** अयं ग्रन्थ इति – वाच्यम् ।।

**यत्र हेतुमति** साध्याभावः कालिकसंबन्धेन वर्तते, तत्र प्रतियोग्यसामानाधिकरण्यघटितव्याप्त्यैव सद्धेतुतानिर्वाहात् प्रतियोग्यसामानाधिकरण्यागर्भव्याप्तिग्रहस्य तत्र भ्रमत्वोपगमे क्षतिविरहात्, तादृशव्याप्तावपि अभावस्य संबन्धविशेषाप्रवेशात् ।।

### व्याख्या

ननु प्रतियोग्यसामानाधिकरण्याघटितापि हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यरूपा व्याप्तिः काचित् स्वीकार्या । साध्यस्य अव्याप्यवृत्तित्वग्रहदशायां प्रतियोग्यसामानाधिकरण्याघटितव्याप्तिग्रहासंभवेऽपि साध्यस्य व्याप्यवृत्तित्वग्रहदशायां तद्विशेषणाघटितव्याप्तेरेव ग्रहसंभवात् तदानीमप्य-

नुमितेः आनुभाविकतायाः इष्टत्वात् । तदघटितव्याप्तेरपि अनुमितिजनकज्ञान-विषयत्वमिति पक्षे हेत्वधिकरणवृत्तित्वमभावस्य स्वरूपादिसंबन्धविशेषेण वाच्यम् । अन्यथा हेतुमति पर्वते कालिकसंबन्धेन विद्यमानं वह्न्यभावमादाय अव्याप्तिप्रसङ्गात् ।।

प्रतियोग्यसामानाधिकरण्यनिवेशपक्षे तु पर्वते कालिकसंबन्धेन विद्यमानस्य वह्न्यभावस्य साध्यतावच्छेदकसंयोगसंबन्धेन वह्न्यधिकरणे पर्वते वर्तमानतया प्रतियोग्यसामानाधिकरण्यविरहात् अभावान्तरमादाय व्याप्तिलक्षणसमन्वयात् अभाववृत्तौ संबन्धविशेषनिवेशः नावश्यकः । तथा च एवं फलितम्– प्रतियोग्य-समानाधिकरण्यघटितव्याप्तौ हेत्वधिकरणवृत्तित्वे स्वरूपसंबन्धावच्छिन्नत्वं न निवेशनीयम् । तदघटितव्याप्तौ तु हेत्वधिकरणवृत्तित्वे स्वरूपसंबन्धावच्छिन्नत्वं निवेशनीयमिति ।।

एवं च प्रकृते कालिकसंबन्धेन गोमान् कालिकसंबन्धेन गोत्वात् इत्यत्र प्रतियोग्यसामानाधिकरण्याघटितव्याप्त्यभिप्रायेण **दीधितिकारः** अतिव्याप्तिमुवाच । तादृशव्याप्तौ हेत्वधिकरणवृत्तित्वे स्वरूपसंबन्धावच्छिन्नत्वं निवेश्यम् । ततश्च हेतुमति काले साध्याभावस्य गवात्यन्ताभावस्य कालिकसंबन्धेन सत्त्वेऽपि स्वरूपसंबन्धेन अवृत्त्या अभावान्तरमादाय तदप्रतियोगित्वं साध्ये गव्यस्तीति अतिव्याप्तिः संभवतीति **न चेत्यादिना** शङ्कते– **गादाधर्याम्** ।।

**प्रमात्वप्रसङ्गपरः** इति । तत्र हेतौ व्याप्तेः सत्त्वात् व्याप्तिज्ञानं प्रमात्मकं भवति, महाकालो गोमान् इत्यनुमितिस्तु भ्रमरूपा । तथाच प्रमात्मकव्याप्तिज्ञानस्य भ्रमात्मकानुमितिजनकत्वप्रसङ्गः इति तात्पर्यम् ।।

उक्तशङ्कां समाधत्ते– **यत्र हेतुमतीत्यादिना** । यत्र हेत्वधिकरणे साध्याभावः कालिकसंबन्धेन वर्तते तत्र प्रतियोग्यसामानाधिकरण्यघटितैव व्याप्तिर्वक्तव्या ।



तत्र साध्यस्य स्वात्यन्ताभावसमानाधिकरणत्वेन अव्याप्यवृत्तित्वात् । तत्र प्रतियोग्यसामानाधिकरण्यघटितव्याप्तेः अवश्यंभावात् । तादृशव्याप्तिः गोमान् गोत्वात् इत्यत्र अस्तीत्याशयेन **दीधितौ** अतिव्याप्तिरुक्ता । परंतु प्रतियोग्यसामानाधि-करण्याघटितव्याप्तिः तत्र न संभवतीति तादृशव्याप्तिज्ञानस्य तत्र भ्रमत्वमेव । तादृशव्याप्तौ अभावे हेत्वधिकरणवृत्तौ संबन्धविशेषानिवेशादिति गोमान् गोत्वात् इत्यत्र अतिव्याप्तिर्न भवतीति **गदाधरीया**क्षेयस्य सारांशः ।।

### गादाधरी

**मैवम्** । प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशायां ''सत्तावान् द्रव्यत्वात्'' इत्यादावपि अभ्रान्तस्य अनुमितिरनुभवसिद्धा । तदनुरोधेन भावसाध्यके दैशिक-विशेषणताविशेषेण हेतुमद्वृत्तित्वगर्भाया अपि व्याप्तेः अनुमितिप्रयोजकता वाच्या । तथा सति तादृशव्याप्तिप्रमामादाय उक्तस्थले अनुमितिप्रसङ्गपरतया एतद्ग्रन्थस्य सामञ्जस्यात् ।।

**न च** – प्रतियोग्यसामानाधिकरण्यगर्भव्याप्तौ अभावस्य संबन्धविशेषानिवेशात् अभावीयसंबन्धविशेषागर्भप्रतियोग्यसामानाधिकरण्यगर्भव्यभिचारग्रहविरोधित्वेन प्रतियोग्यसामानाधिकरण्यगर्भतदगर्भव्याप्ती अनुगमय्य तयोरेवानुमित्यौपयिकतायाः वक्तव्यतया अभावीयसंबन्धविशेषघटितव्याप्तिग्रहस्य तादृशव्यभिचारग्रहाप्रतिबन्ध-कतया तादृशव्याप्तेः नानुमित्युपयोगितानिर्वाह इति – वाच्यम् ।।

**तादृशव्याप्तिसंग्रहायैव** अभावीयसंबन्धविशेषघटितप्रतियोग्यसामानाधि-करण्यघटितव्यभिचारग्रहविरोधित्वेन व्याप्तीनामनुगमनीयत्वात् । तावताप्यभावीय-संबन्धविशेषघटितप्रतियोग्यसामानाधिकरण्यघटितव्याप्तेः संग्रहसंभवात् ।।

**एवं सति** अव्यावर्तकाभावीयसंबन्धघटितप्रतियोग्यसामानाधिकरण्य-घटितव्याप्तिज्ञानादपि अनुमितिः स्यादिति चेत्– इष्टमेवैतत् ।।

एवं सति प्रतियोग्यसामानाधिकरण्यगर्भाभावीयसंबन्धविशेषघटितव्याप्ति-प्रमातोऽप्युक्तस्थले अनुमितिप्रसङ्गो दुर्वार इति चेत्– का क्षतिरस्माकम् ।।

### व्याख्या

तत्र समाधानमाह– **मैवमित्यादिना** । सत्तावान् द्रव्यत्वात् इत्यादौ व्याप्यवृत्तिसाध्यकस्थले द्विविधा व्याप्तिः संभवति– (१) दैशिकविशेषणतया हेतुमद्वृत्तित्वगर्भ– हेत्वधिकरणनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तिताकाभाव-निरूपितप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपा, (२) प्रतियोग्यसामानाधिकरण्यगर्भा च– प्रतियोग्यसमानाधिकरणहेतुसमानाधि-करणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधि-करण्यरूपा चेति ।।

कालिकसंबन्धेन सत्ताभावस्य हेतुमति काले सत्त्वेऽपि स्वरूपसंबन्धेन अभावात् अभावान्तरमादाय आद्या व्याप्तिः तत्र भवति ।।

एवम् तत्र हेतुमति काले कालिकसंबन्धेन वर्तमानस्य सत्ताभावस्य प्रतियोगितावच्छेदकसमवायसंबन्धेन सत्तारूप प्रतियोग्यधिकरणकालवृत्तितया तदवृत्तित्वरूप प्रतियोग्यसमानाधिकरण्यं नास्तीति अभावान्तरमादाय द्वितीयापि व्याप्तिस्तत्र भवति ।।

तत्र तत्र प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशायामप्यनुमितेरानुभावि-कतया तन्निर्वाहाय दैशिकविशेषणतासंबन्धेन हेतुमद्वृत्तित्वगर्भाया अपि व्याप्तेः अनुमितिप्रयोजकता वाच्या । एवं सति तादृशव्याप्तिमादाय गोमान् गोत्वात् इत्यत्र अतिव्याप्तिपरतया **दीधितिग्रन्थः** समन्वेतव्यः । तथाहि कालिकसंबन्धेन हेतुमति गोत्ववति महाकाले साध्याभावस्य गवाभावस्य कालिकसंबन्धेन सत्त्वेऽपि



स्वरूपसंबन्धेन सः नास्ति । पूर्वोक्तरीत्या गोध्वंसवति तत्र स्वरूपसंबन्धेन गवात्यन्ताभावो न संभवति । ध्वंसप्रागभावाभ्यामत्यन्ताभावस्य विरोधात् । अपि तु ध्वंसप्रागभावायोग्यस्य आत्ममन - आदेरभाव एव भवति । तदप्रतियोगित्वं साध्ये गव्यस्तीति कृत्वा अतिव्याप्तेः संगतिः ।।

नन्वेवं स्थलभेदेन प्रतियोग्यसामानाधिकरण्यघटित संबन्धविशेषाघटितव्याप्तेः प्रतियोग्यसामानाधिकरण्याघटितसंबन्धविशेषघटितव्याप्तेश्च अनुगतरूपेण अनुमिति-प्रयोजकत्वं वक्तव्यम् । तच्च व्यभिचारग्रहविरोधित्वमेव – व्यभिचारज्ञानप्रति-बन्धकज्ञानविषयत्वमिति यावत् । व्यभिचारज्ञानस्य आकारः – प्रतियोग्यसमानाधि-करणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकम् इति । ईदृशं व्यभिचारज्ञानं प्रति हेत्वधिकरणनिरूपितस्वरूपसंबन्धावच्छिन्न-वृत्तिमदभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकम् इत्याकारकव्याप्तिज्ञानं, प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभाव प्रतियोगितानवच्छेदकं साध्यता-वच्छेदकं इत्याकारकव्याप्तिज्ञानं च प्रतिबन्धकम् इति वक्तव्यम् । तत्तु न संभवति । तत्र प्राथमिकव्याप्तिज्ञानस्य यद्यपि उक्तव्यभिचारज्ञानं प्रति प्रतिबन्धकत्वं वर्तते– प्रतिबध्ये व्यभिचारज्ञाने अधिकस्य प्रतियोग्यसामानाधिकरण्यस्य विषयत्वेऽपि ''नीलघटवत् भूतलं'' इति ज्ञानं प्रति ''घटसामान्याभाववत् भूतलम्'' इत्याकारक-ज्ञानस्येव प्रतिबन्धकत्वसंभवात् इत्यभिमानः । परं तु द्वितीयव्याप्तिज्ञाने स्वरूपसंबन्धावच्छिन्नत्वस्याधिकस्य विषयत्वात् तदविषयकव्यभिचारज्ञानं प्रति प्रतिबन्धकत्वं न संभवति । अतः तादृशव्याप्तेर्नानुमित्युपयोगित्वमिति शङ्कते– **न चेत्यादिना** ।।

तत्र समाधानमाह– **तादृशव्याप्तिसंग्रहाय** इत्यादिना । अभावीयसंबन्ध-विशेषघटितव्याप्तिसंग्रहायैवेत्यर्थः । उक्तदोषपरिहारायैव प्रतियोग्यसामानाधिकरण्य-

घटित - अभावीयसंबन्धविशेष (स्वरूपसंबन्ध) घटितव्यभिचारग्रहविरोधित्वेन व्याप्तीनां संग्रहः अनुगमः ।।

तथाहि– अभावीयसंबन्धविशेषघटितव्याप्तिज्ञानस्य अधिकं त्विति न्यायेन प्रतियोग्यसामानाधिकरण्य - अभावीयविशेषणत्वोभयघटितव्यभिचारज्ञानं प्रतिबन्धकम् । अभावीयसंबन्धविशेषाघटितव्याप्तिज्ञानस्य च प्रतियोग्यसमानाधिकरण्य - संबन्धविशेषोभयघटितव्यभिचारज्ञानं प्रति च सामान्याभावावगाहितया प्रतिबन्धकत्वमिति ।।

नन्वेवं सति अभावीयसंबन्धविशेषप्रतियोग्यसामानाधिकरण्योभयघटितव्याप्तिज्ञानस्यापि कारणत्वमायाति । तत्र व्यर्थविशेषणत्वमिति चेत्– इष्टमेव । व्यभिचारग्रहप्रतिबन्धकतावच्छेदकविषयताशालित्वेन हेतुत्वात् । उक्तस्यापि तथात्वात् ।।

**एवं सतीति** । उभयविशेषणघटितव्याप्तेः अनुमितिप्रयोजकत्वे सतीत्यर्थः । उभयघटितव्याप्तिमादायापि गोमान् गोत्वात् इत्यादावतिव्याप्तिः भवतीति चेत् - भवतु नाम । का क्षतिरस्माकम् । **दीधितिग्रन्थ**समर्थनमस्माकमुद्देश्यम् । तत्तूभयथापि भवतीति भावः । **इदं प्रकरणं सावधानं चिन्तनीयम्** ।।

## गादाधरी

**वस्तुतस्तु दीधितिकृता** स्वयं निष्कर्षणीयहेतुमति प्रतियोग्यनधिकरणत्वनिवेशकल्पे प्रतियोगिव्यधिकरणत्वघटितव्याप्तौ अभावीयसंबन्धविशेषनिवेशस्य निष्प्रयोजनत्वेऽपि प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य हेतुमद्वृत्तित्वगर्भयथाश्रुतव्याप्तौ तदीयसंबन्धविशेषनिवेशनमावश्यकम् । अन्यथा ''संयोगि द्रव्यत्वात्'' इत्यादौ प्रतियोग्यनधिकरणगुणादिवृत्तित्वविशिष्टस्यापि संयोगाद्यभावस्य कालिकसंबन्धेन हेत्वधिकरणकालवृत्तितया अव्याप्तिप्रसङ्गात् ।।



**एकसंबन्धेन एकाधिकरणवृत्तित्वविशिष्टस्यापि अन्यसंबन्धेन अधिकरणान्तरवृत्तित्वात्** प्रतियोगिसामानाधिकरण्याभाव निवेशकल्पेऽपि गुणादौ तद्विशिष्टस्य संयोगाद्यभावस्य कालिकसंबन्धेन कालवृत्तित्वात् तत्कल्पेऽप्यव्याप्तेरावश्यकत्वात् ।।

## व्याख्या

पूर्वं सत्तावान् द्रव्यत्वात् इत्यादौ प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशायामपि अनुमितेरानुभाविकतया तन्निर्वाहाय दैशिकविशेषणतया हेतुमद्वृत्तित्वघटिताया अपि व्याप्तेरनुमितिप्रयोजकता वाच्येत्युक्तम् ।।

इदानीं सत्तावान् द्रव्यत्वात् इत्यादौ स्वमते **दीधितिकारमते** प्रतियोग्यसमानाधिकरण्यानुपस्थितिदशायां अनुमितिलोप इष्ट एव । तत्र तदगर्भव्याप्तिज्ञानासंभवात् । तथाहि – द्रव्यत्वाधिकरणे काले सत्तावति सत्ताभावस्य कालिकसंबन्धेन सत्त्वात् तत्प्रतियोगित्वस्यैव सत्तायां सत्त्वात् व्याप्तेरभावात् इति पूर्वमुक्तत्वात् इत्याशयेनाह **वस्तुतस्त्विति** । यद्यपि प्रतियोग्यनधिकरणीभूतहेतुमद्वृत्तीत्यादिक्रमेण **दीधितिकृता** वक्ष्यमाणकल्पे अभावनिष्ठहेत्वधिकरणवृत्तितायां स्वरूपसंबन्धावच्छिन्नत्वनिवेशनं निष्फलम् । कालिकसंबन्धेन वर्तमानस्य सत्ताभावस्य स्वप्रतियोगिसत्ताधिकरणवृत्तित्वेन स्वप्रतियोग्यनधिकरणहेत्वधिकरणवृत्तित्वाभावेन लक्षणाघटकतया अभावान्तरमादाय लक्षणसमन्वयसंभवात् । तथापि यथाश्रुतमूलार्थे स्वप्रतियोग्यनधिकरणवृत्तित्वविशिष्टेऽभावे हेत्वधिकरणवृत्तित्वघटिते लक्षणे अभावे संबन्धविशेषः दैशिकविशेषणतारूपः निवेशनीय एव । अन्यथा संयोगि द्रव्यत्वात् इत्यादौ सद्धेतौ संयोगाभावस्य प्रतियोग्यनधिकरणगुणादि - वृत्तित्वविशिष्टस्यापि हेत्वधिकरणकाले कालिकसंबन्धेन सत्त्वात् अव्याप्तिप्रसङ्गात् इति भावः ।।

ननु प्रतियोग्यसमानाधिकरणेति मूलस्य प्रतियोग्यनधिकरणवृत्तित्वमिव प्रतियोग्यधिकरणवृत्तित्वाभावोऽपि अर्थः संभवति । तस्मिन् कल्पे प्रतियोगिसामानाधिकरण्याभावविशिष्टः सन् हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः । ततश्च संयोगि द्रव्यत्वात् इत्यत्र साध्याभावस्य संयोगाभावस्य अव्याप्यवृत्तितया प्रतियोगिसामानाधिकरण्यनियमेन प्रतियोग्यसामानाधिकरण्यविशिष्टत्वाभावात् संयोगाभावो न लक्षणघटकः, अपि तु अभावान्तरमेवेति तदप्रतियोगित्वस्य च संयोगे सत्त्वात् नाव्याप्तिरिति शङ्कां निरस्यति– **एकसंबन्धेनेति** । **एकसंबन्धेन** – प्रकृते दैशिकविशेषणतासंबन्धेन **एकाधिकरणवृत्तित्वविशिष्टस्यापि** – गुणादिवृत्तित्वविशिष्टस्यापि संयोगाभावस्य **अन्यसंबन्धेन** – कालिकसंबन्धेन **अधिकरणान्तरवृत्तित्वात्** – कालवृत्तित्वात् । तथा च स्वरूपसंबन्धेन गुणवृत्तिः प्रतियोग्यसामानाधिकरण्यविशिष्ट एव संयोगाभावः कालिकसंबन्धेन काले विशिष्टरूपेणापि वर्तते इति संयोगाभावस्यापि लक्षणघटकतया अव्याप्तिर्दुर्वारेति भावः ।।

## गादाधरी

**न च – प्रतियोगि**सामानाधिकरण्यविशिष्टस्य तस्य **कालवृत्तित्वे** प्रतियोगिसामानाधिकरण्याभावविशिष्टस्य न तद्वृत्तित्वसंभवः । **भावाभावविशिष्टस्य** एकाधिकरणवृत्तित्वे प्रतियोगिसामानाधिकरण्याभावविशिष्ट संयोगाभावस्य दैशिकविशेषणतयापि द्रव्यवृत्तित्वप्रसङ्गात् इति – वाच्यम् । **विरोधिनोः** भावाभावयोः कालिकसंबन्धेन एकाधिकरणवृत्तितावत् भावाभावविशिष्टस्यापि कालिसंबन्धेन एकत्र वृत्तौ विरोधाभावात् ।।

## व्याख्या

ननु काले संयोगाभावः कालिकसंबन्धेन वर्ततां नाम । तथापि प्रतियोग्यसामानाधिकरण्यविशिष्टः संयोगाभावः कथं वर्तेत । काले प्रतियोगिनः संयोगस्यापि



सत्त्वेन तद्वृत्तिः संयोगाभावः संयोगरूपप्रतियोगिसमानाधिकरण इति कृत्वा प्रतियोगिसामानाधिकरण्यविशिष्ट एव संयोगाभाव एव तत्र भवितुमर्हति, न तु प्रतियोग्यसामानाधिकरण्यविशिष्टः संयोगाभाव इत्याशयेन शङ्कते– **न च प्रतियोगीति** । **कालवृत्तित्वे** सतीति शेषः । **भावाभावविशिष्टस्य** - भावः अभावः इति विरुद्धधर्मद्वयविशिष्टस्य एकत्र सत्ताङ्गीकारे प्रतियोगिसामानाधिकरण्याभावविशिष्टस्य संयोगाभावस्य दैशिकविशेषणतासंबन्धेनापि एकत्र द्रव्ये वृत्तिसंभवेन तत्संबन्धनिवेशेऽप्यव्याप्तितादवस्थ्यात् इति भावः ।।

समाधत्ते– **विरोधिनोरिति** । सामान्यतः प्रतियोग्यभावयोः एकाधिकरणवृत्तित्वाभावरूपविरोधसत्त्वेऽपि कालिकसंबन्धेन प्रतियोगितदभावयोरुभयोरपि कालवृत्तित्वमिष्यते । तथा भावविशिष्टाभावविशिष्टयोरपि उभयोः कालवृत्तित्वमिष्यते । काले भावाभावयोः कालिकसंबन्धेन सत्ता अङ्गीक्रियते ।।

## गादाधरी

**यद्यपि** अभावस्य दैशिकविशेषणतासंबन्धनिवेशे अभावसाध्यके व्यभिचारिणि भावस्य दैशिकविशेषणतानभ्युपगमे अतिव्याप्त्या साध्यनिरूपित प्रतियोगितावच्छेदकसंबन्धनिवेशे समवायसंबन्धावच्छिन्नजात्यभावसाध्यके जातित्वादिहेतावतिव्याप्तिः, जातित्वादिरूपहेतुमति तादृशसमवायसंबन्धेन वृत्तेरप्रसिद्धेः; **तथापि** साध्यनिरूपितप्रतियोगितावच्छेदकसंबन्धातिरिक्तसंबन्धेन या साध्याभावस्य वृत्तिः तदन्यहेतुमद्वृत्तेः, **प्रकृतप्रतियोगिता**निरूपितानुयोगितावच्छेदकसंबन्धेन हेतुमति वृत्तेर्वा अभावविशेषणत्वोपगमान्न दोषः । **उक्तस्थले** हेतुमति काले कालविशेषवृत्तित्वविशिष्ट**नित्यस्य** अत्यन्ताभावप्रसिद्ध्या अतिव्याप्तिसङ्गतिः ।।

## व्याख्या

हेत्वधिकरणनिरूपितवृत्तितायां स्वरूपसंबन्धावच्छिन्नत्वनिवेशपक्षमाश्रित्य कालो गोमान् गोत्वात् इत्यादावतिव्याप्तिः **दीधितिकारेण** उक्ता इति संदर्भः स्मर्तव्यः । तत्र शङ्कते– **यद्यपीत्यादिना** । अयं भावः– भावसाध्यकस्थल इव अभावसाध्यकस्थलेऽपि अभावनिष्ठवृत्तौ दैशिकविशेषणतासंबन्धावच्छिन्नत्वनिवेशे अभावसाध्यकव्यभिचारिणि पटः घटत्वाभाववान् प्रमेयत्वात् इत्यत्र साध्याभावस्य घटत्वाभावाभावस्य घटत्वरूपस्य स्वरूपसंबन्धेन, हेतुमति घटे वृत्तित्वं नास्ति । भावानां स्वरूपसंबन्धेन वृत्त्यानङ्गीकारात् इति अभावान्तरमादाय अतिव्याप्तिः प्रसजति । दैशिकविशेषणतासंबन्धं त्यक्त्वा साध्यनिरूपितप्रतियोगितावच्छेदक-संबन्धेन हेतुमद्वृत्तित्वस्य अभावे निवेशे घटत्वाभावसाध्यके उक्तव्यभिचारिणि घटत्वाभावरूपसाध्यनिरूपित घटत्वनिष्ठप्रतियोगितावच्छेदकसंबन्धः समवायसंबन्धः तेन संबन्धेन हेत्वधिकरणघटवृत्तिं घटत्वात्मकं घटत्वाभावाभावं गृहीत्वा तत्प्रतियोगितावच्छेदकमेव घटत्वाभावत्वरूपं साध्यतावच्छेदकमिति अतिव्याप्तिः वारणीया । एवं सत्यपि समवायसंबन्धावच्छिन्नजात्यभावसाध्यके जातित्वरूपहेता-वतिव्याप्तिः । जात्यभावरूपसाध्यनिरूपितजातिनिष्ठप्रतियोगितावच्छेदकसमवाय-संबन्धेन जातित्वरूपहेत्वधिकरणजातौ वृत्तेरप्रसिद्धेः । जातौ समवायेन कस्याप्यवृत्त्या जातिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्धेरिति यावत् । उक्तरीत्या यद्यपीत्यादिना आशङ्क्य समाधत्ते– **तथापीति** । अयमाशयः–

साध्यात्मकाभाव (साध्य) निरूपित प्रतियोगितावच्छेदकसंबन्धातिरिक्त-संबन्धेन या साध्याभावस्य वृत्तिः तदन्या या हेतुमन्निरूपिता वृत्तिः (आधेयता) तदाश्रयत्वमभावे विशेषणम् । पर्वतो वह्निमान् धूमात् इत्यादौ साध्यात्मकाभावः वह्न्यभावाभावः तन्निरूपितप्रतियोगितावच्छेदकसंबन्धः दैशिकविशेषणता



तदतिरिक्तसंबन्धः कालिकसंबन्धादिः तदवच्छिन्ना या वह्न्यभाववृत्तिः (वह्न्यभाव-निष्ठाधेयता) तदन्या हेतुमद्वृत्तिः दैशिकविशेषणतासंबन्धावच्छिन्ना तदाश्रयः घटाद्यभावः तत्प्रतियोगितानवच्छेदकत्वं वह्नित्वे साध्यतावच्छेदकेऽस्तीति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ धूमाभावमादायातिव्याप्तिवारणं कार्यम् । तथाहि– साध्यात्मकाभावः धूमाभावाभावः तन्निरूपितप्रतियोगितावच्छेदकसंबन्धः दैशिकविशेषणता तदतिरिक्तसंबन्धः कालिकादिः तदवच्छिन्ना या धूमाभावनिष्ठा आधेयता, तदन्या या स्वरूपसंबन्धावच्छिन्ना हेतुमद्वृत्तिः तदाश्रयः धूमाभावोऽपि तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं धूमत्वम् इति नातिव्याप्तिः ।।

घटत्वाभाववान्मेयत्वादित्यादौ साध्यनिरूपितप्रतियोगितावच्छेदकसंबन्धः समवायः तदतिरिक्तसंबन्धः कालिकसंबन्धादिः तदवच्छिन्ना या घटत्वरूपसाध्या-भावनिष्ठा आधेयता तदन्या मेयत्वरूपहेतुमन्निरूपिता वृत्तिः समवायसंबन्धावच्छिन्ना आधेयता तदाश्रयः अभावः घटत्वात्मकः घटत्वाभावाभावः तत्प्रतियोगिता-वच्छेदकत्वमेव साध्यतावच्छेदके घटत्वाभावत्वेऽस्तीति नातिव्याप्तिः ।।

समवायसंबन्धावच्छिन्नजातिनिष्ठप्रतियोगिताकाभावसाध्यके समवायेन जात्यभाववान् जातित्वादित्यत्र सद्धेतौ साध्यनिरूपितप्रतियोगितावच्छेदकसंबन्धः समवायः तदतिरिक्तसंबन्धः संयोगादिः अथवा कालिकादिःतदवच्छिन्ना या साध्याभावस्य जातेः वृत्तिः तदन्या या जातित्वरूपहेतुमज्जातिनिरूपिता स्वरूप-संबन्धावच्छिन्ना वृत्तिः तदाश्रयः घटाद्यभावः तत्प्रतियोगितानवच्छेदकत्वं जात्यभावत्वे अस्तीति नाव्याप्तिः ।।

लाघवादाह– **प्रकृतप्रतियोगितेति** । प्रकृतप्रतियोगितेत्यनेन लक्षणघटका-भावीयप्रतियोगिता ग्राह्या । वह्निमान् धूमात् इत्यत्र घटाभावः लक्षणघटकः ।

अतो घटनिष्ठप्रतियोगिता प्रकृतप्रतियोगिता तन्निरूपितानुयोगिता घटाभावनिष्ठा तदवच्छेदकसंबन्धः स्वरूपसंबन्धः तेन हेतुमद्वृत्त्यभावः घटाद्यभावः तदप्रतियोगित्वं साध्ये वह्नाविति समन्वयः । घटत्वाभाववान् मेयत्वात् इत्यत्र व्यभिचारिणि प्रकृतप्रतियोगिता घटत्वाभावाभावनिरूपिता घटत्वाभावनिष्ठा प्रतियोगिता तन्निरूपितानुयोगिता घटत्वनिष्ठा, तदवच्छेदकसंबन्धः समवायः तेन संबन्धेन हेतुमद्वृत्तिः अभावः घटत्वरूपः घटत्वाभावाभावः तत्प्रतियोगित्वमेव घटत्वाभाव-रूपे साध्येऽस्तीति नातिव्याप्तिः ॥

एवं कालिकसंबन्धेन गोमान् गोत्वात् इत्यत्र हेतुसमानाधिकरणत्वेन अभिमतः अभावः गोरभावः न संभवति गोध्वंसवति तत्र प्रलये गवात्यन्ताभावा-संभवात् । अपि तु पूर्वक्षणवृत्तित्वविशिष्टस्य गोध्वंसस्याभावः स्वरूपसंबन्धेन प्रलयेऽस्ति तदप्रतियोगित्वं साध्ये गव्यस्तीति अतिव्याप्तिः संगच्छते इति भावः ॥

तदुक्तं **उक्तस्थले** इति । गोमान् गोत्वात् इत्यत्र हेतुमति काले पूर्वक्षण-वृत्तित्वविशिष्टनित्यस्यात्यन्ताभावः प्रसिध्यतीति । **नित्यस्येति** । पूर्वक्षणवृत्तित्व-विशिष्टजात्याद्यभावोऽपि ग्राह्यः ॥

### दीधितिः

**संसर्गाभावमात्रोक्तावपि** यदा स्पन्दस्तदा द्व्यणुकम्, यदा अदृष्टं तदा जन्यं ज्ञानं दुःखं वा, यदा तस्यादृष्टं तदा तदीयं ज्ञानमित्यादावतिव्याप्तिः । द्व्यणुकत्वादेः द्व्यणुकादिमत्त्वशून्यखण्डप्रलयादिनिष्ठध्वंसप्रागभावप्रतियोगिता-नवच्छेदकत्वात् । न हि तयोः सामान्याभावत्वमतेऽपि एकविशेषप्रागभाव-विशेषान्तरध्वंसवत्यपि समये सामान्यावच्छिन्नध्वंसप्रागभावयोः संभवः इति चेत्-



### गदाधरीयम्

अत्यन्ताभावत्वघटकनित्यत्वांशं परित्यज्य ध्वंससाधारणसंसर्गाभावत्वनिवेशे महाप्रलये गोत्वरूपसामान्यधर्मावच्छिन्न । प्रतियोगिताकध्वंसोपगन्तृमते ध्वंसमादा-योक्तस्थलातिव्याप्तिं शक्यते वारयितुम् इत्याशङ्क्याह– **संसर्गाभावेति** । **दैशिकविशेषणतयापि** ध्वंसस्य कालवृत्तित्वमित्याशयेनोक्तशङ्कासंगतिः । अन्यथा अभावस्य तादृशसंबन्धेन वृत्तित्वनिवेशेऽत्यन्ताभावमिव ध्वंसमप्यादायातिव्याप्तेः दुर्वारत्वात् ॥

**न च** प्रतियोग्यधिकरणमहाकाले गोध्वंसस्य दैशिकविशेषणतासत्त्वेऽपि प्रतियोग्यनधिकरणे प्रलये तस्य तादृशसंबन्धः अप्रामाणिक इति वाच्यम् ॥

**यदुपाधिविशिष्टस्य** प्रतियोग्यधिकरणत्वं तदन्योपाधिविशिष्टस्यैव महाकालस्य तदभावाधिकरणतया महाकालस्य दैशिकविशेषणतया ध्वंसवत्त्वे प्रलयात्मकोपाधेरपि तादृशसंबन्धेन तदाधारतायाः आवश्यकत्वात् । अन्यथा प्रलये गौर्नास्तीति व्यवहारानुपपत्तेः ॥

**अथ वा दीधितिकृन्निष्कर्षणीयप्रतियोगिवैयधिकरण्यकल्पाभिप्रायेणैतत्** । तत्कल्पे प्रयोजनाभावात् अभावे वृत्तिविशेषानिवेशात् ॥

**न च अभावे वृत्तिविशेषानिवेशे** कालिकसंबन्धेन गवात्यन्ताभावस्यापि प्रलये वृत्तेः संसर्गाभावमात्रपरत्वोक्तिविरोध इति वाच्यम् । **प्रतियोगितावच्छेदक-कालिकसंबन्धेन तत्प्रतियोगिनः गोध्वंसस्य** हेत्वधिकरणेऽबाधात् गवात्यन्ता-भावस्य प्रतियोगिवैयधिकरण्याभावात् । **ध्वंसस्य** तत्प्रतियोगिनोऽत्यन्ताभावस्य प्रतियोगितावच्छेदकदैशिकविशेषणतासंबन्धेन काले असत्त्वात् प्रतियोगिवैयधिकरण्य-मक्षतमेव ॥

## व्याख्या

**दीधितौ** पूर्वं कालिकसंबन्धेन गोसाध्यके कालिकसंबन्धेन गोत्वहेतुके अयं गोमान् गोत्वात् इत्यत्र कालिकसंबन्धेन गोरूपसाध्याभाववति महाकाले प्रलये वा कालिकसंबन्धेन नित्यस्य गोत्वस्य सत्त्वेन व्यभिचारिणि अतिव्याप्तिः । वह्निमान् धूमात् इत्यादौ हेतुमति पर्वतादौ कालिकसंबन्धेन वर्तमानं वह्न्यभावमादाय प्रसक्ताया अव्याप्तेर्वारणाय अभावनिष्ठहेतुमद्वृत्तौ दैशिकविशेषणतासंबन्धावच्छिन्नत्वस्य निवेशनीयतया प्रकृते हेतुमति काले साध्याभावस्य गवात्यन्ताभावस्य कालिकसंबन्धेन सत्त्वेऽपि स्वरूपसंबन्धेनाभावात् अभावान्तरमादाय पूर्वक्षणवृत्तित्वविशिष्टगोध्वंसाभावः कालवृत्तिः इत्युपपाद्य तदप्रतियोगित्वं साध्ये गव्यस्तीत्यतिव्याप्तिराशङ्किता ।।

एतादृशातिव्याप्तिः अत्यन्ताभावस्य स्थाने संसर्गाभावं निवेश्य वारयितुं शक्यते इत्याशङ्क्य तत्समाधानमाह **दीधितौ– संसर्गाभावमात्रोक्तावपी-** त्यादिना । अयं भावः– मणौ लक्षणे अत्यन्ताभावपदं प्रयुक्तम् । तेन गोमान् गोत्वात् इत्यत्रातिव्याप्तिः प्रसक्ता । तद्वारणं कर्तुं शक्यते इति **मिश्राः** वदन्ति । कथमिति चेत् नित्यत्वे सति संसर्गाभावत्वम् अत्यन्ताभावस्य लक्षणम् । तत्र नित्यत्वांशपरित्यागे शेषांशः संसर्गाभावः ध्वंसप्रागभावयोः साधारणः । स एव प्रकृतव्याप्तिलक्षणे निवेशनीयः । तथा निवेशे च गोमान् गोत्वादित्यत्र हेत्वधिकरणे महाकाले महाप्रलयावच्छेदेन गोसामान्यध्वंसस्य सत्त्वात् हेतुसमानाधिकरणतादृशध्वंसात्मकाभावप्रतियोगितावच्छेदकत्वात् गोत्वरूपसाध्यतावच्छेदकस्य न पूर्वोक्तातिव्याप्तिः । ध्वंसस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानभ्युपगन्तृमते ध्वंसमादायातिव्याप्तिवारणं न संभवतीति **तदभ्युपगन्तृमते** इत्युक्तं **गादाधर्याम्** । **दैशिकविशेषणतयापीति** । कालिकसंबन्धेनेव दैशिकविशेषणतासंबन्धेनापि ध्वंसस्य



कालवृत्तित्वे बाधकाभावादित्यर्थः । तथा च दैशिकविशेषणतया हेतुमद्वृत्तित्वनिवेशपक्षेऽपि न दोषः इति भावः ।।

ननु ध्वंसप्रागभावयोः स्वप्रतियोगिसमानदेशत्वनियमः । यथा घटध्वंसः घटप्रागभावश्च स्वप्रतियोगिनः घटस्य यो देशः कपालः तत्रैव वर्तते इति नियमः, तथा गोध्वंसः गोः अधिकरण एव भवेत् । महाकालः महाप्रलयावच्छेदेन न गोः अधिकरणम् । अतश्च गोध्वंसः कथं प्रलये तदवच्छिन्नकाले वा भवेत् । तथाच गोध्वंसस्य दैशिकविशेषणतया महाकालवृत्तित्वाभावात् कथमतिव्याप्तिवारणमिति शङ्कते– **न चेति** । समाधत्ते– **यदुपाधिविशिष्टस्येति** । तत्तदुपाधिविशिष्टस्यैव महाकालस्य तत्तद्वस्त्वाधारत्वम् । ''इदानीं घटः, न तदानीम्'' इति प्रतीत्यनुरोधात् । तत्र च यादृशोपाधिविशिष्टस्य महाकालस्य प्रतियोगिभूतगवाद्यधिकरणत्वम् तदन्योपाधिविशिष्टस्यैव तस्य गवाद्यभावाधिकरणत्वम् । प्रकृते प्रलयरूपोपाधिविशिष्टस्य महाकालस्य स्वरूपसंबन्धेन गोध्वंसवत्त्वात् प्रलयस्यापि गोध्वंसवत्वम् आवश्यकम् । न च प्रलयस्य महाकालवृत्तौ अवच्छेदकत्वमेव न तु आधारत्वमिति वाच्यम् । तथा सति प्रलये गौर्नास्तीति व्यवहारस्यानुपपत्तेः । अस्य च व्यवहारस्य साक्षात् प्रलये ध्वंसाधारत्वावगाहित्वात् इति समाधत्ते– **यदुपाधिविशिष्टस्येति** । तथा च व्यभिचारनिरूपकाधिकरणं प्रलयः । तत्र गोत्वं कालिकसंबन्धेन वर्तते, नित्यत्वात् । अतो गोत्वरूपहेत्वधिकरणं प्रलयः । तत्र वर्तते यः संसर्गाभावः गोध्वंसः तत्प्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदके गोत्वेऽस्तीति न गोमान् गोत्वादित्यत्रातिव्याप्तिरिति भावः ।।

ननु प्रलये गौर्नास्तीति प्रतीतौ सप्तम्या प्रलयस्यावच्छेदकत्वमेव विषयीक्रियते न तु आधारत्वम्, मूले कपिसंयोगो नास्तीति प्रतीतिवत् इति यदि ब्रूयात् तदा

पक्षान्तरमाह– **अथवेति** । मूलस्थस्य ''प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरण'' इत्यस्य ''प्रतियोग्यनधिकरणहेत्वधिकरणवृत्ति'' इति निष्कर्षं करिष्यत्युपरि **दीधितिकारः** । तत्कल्पे अभावनिष्ठायां हेत्वधिकरणनिरूपितवृत्तौ संबन्धविशेषनिवेशो निष्फलः । संबन्धान्तरेण वृत्तेः अभावस्य प्रतियोग्यधिकरणहेत्वधिकरणवृत्तित्वेन तदनधिकरणहेत्वधिकरणवृत्तित्वं नास्तीत्यत एव वारणात् । तथा च प्रलये कालिकसंबन्धेन गवाभावस्य सत्त्वात् तत्प्रतियोगितावच्छेदकत्वमेव गोत्वेऽस्तीति अतिव्याप्तिवारणमिति भावः ।।

ननु **अभावे वृत्तिविशेषानिवेशे** – स्वरूपसंबन्धावच्छिन्नाधेयत्वानिवेशे कालिकसंबन्धेन प्रलये वर्तमानं गवात्यन्ताभावमादायैवातिव्याप्तिवारणसंभवात् संसर्गाभावमात्रपरत्वोक्तिः न युज्यते । ध्वंसमादाय अतिव्याप्तिवारणाय हि तथोक्तमित्याशङ्क्ते– **न चेति** । प्रतियोगिवैयधिकरण्यकल्पेऽपि प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वं, साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वं इति पक्षद्वयमस्ति । तत्र हेत्वधिकरणप्रलये कालिकसंबन्धेन वर्तमानस्य गवात्यन्ताभावस्य गोगोध्वंसगोप्रागभावत्रितय प्रतियोगिकत्वात् गोध्वंसरूपः प्रतियोगी प्रलयकाले कालिकसंबन्धेन भवतीति प्रतियोगितावच्छेदककालिकसंबन्धेन गोध्वंसरूप प्रतियोग्यधिकरणप्रलयवृत्तेः गवात्यन्ताभावस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तित्वं न संभवतीति गोध्वंसमादायैवातिव्याप्तिर्वारणीयेत्यभिप्रायेण ''**संसर्गाभावमात्रोक्तौ**'' इतिदीधितावुक्तमिति गभीरोऽयं भावः। एतं मनसिकृत्य समाधत्ते– **प्रतियोगितावच्छेदककालिकसंबन्धेनेति** । हेत्वधिकरणे इत्यत्रास्यान्वयः । **तत्प्रतियोगिनः** – गवात्यन्ताभावप्रतियोगिनः। **गोध्वंसस्येति** । अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वात् गोध्वंसस्य गवात्यन्ताभाव-प्रतियोगित्वम् ।।



तथा च गवात्यन्ताभावमादाय अतिव्याप्तिवारणासंभवात् गोध्वंसमादायैवातिव्याप्तिर्वारणीया । तस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यं संगमयति– **ध्वंसस्येति** । गोध्वंसस्येत्यर्थः । प्रतियोगिवैयधिकरण्यमक्षतम् इत्युपरितनेनान्वयः । तत्र हेतुः ''तत्प्रतियोगिन'' इत्यारभ्य ''असत्त्वात्'' इत्यन्तम्। गवात्यन्ताभावस्य गोध्वंसः यदि प्रतियोगी तदा गोध्वंसस्यापि गवात्यन्ताभावोऽपि प्रतियोगी इत्याशयः । तत्प्रतियोगिनः – ध्वंसप्रतियोगिनः अत्यन्ताभावस्य काले असत्त्वात् । ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावानङ्गीकारादिति भावः । तथा च स्वं-गोध्वंसः तत्प्रतियोगिता गवात्यन्ताभावनिष्ठा तदवच्छेदकः संबन्धः दैशिकविशेषणता, तेन संबन्धेन प्रतियोगिनः गवात्यन्ताभावस्यानधिकरणं प्रलयः तद्वृत्तिः गोध्वंसः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं गोत्वमिति नातिव्याप्तिरिति भावः ।।

## गादाधरी

**यदा स्पन्द** इति । अत्र च व्यभिचारनिरूपकाधिकरणं खण्डप्रलयः जन्यद्रव्यानधिकरणे तस्मिन् द्व्यणुकासत्त्वात् पुनः द्व्यणुकोत्पत्त्याद्यनुसारेण परमाणूनां स्पन्दस्वीकारस्य आवश्यकत्वात् । तथा च हेत्वधिकरणे तत्र द्व्यणुकसामान्यध्वंसप्रागभावयोरसत्त्वात् अतिव्याप्तिरिति भावः ।।

**द्व्यणुकनाशानुगुणक्रियायाः** उत्तरसंयोगनाश्यायाः अधिकरणे चरमपरमाणुसंयोगनाशरूपमहाप्रलयपूर्वतृतीयक्षणे द्व्यणुकसामान्यध्वंससत्त्वात् अत्राप्यतिव्याप्तिर्न विचारसहा इत्यतः– **यदा अदृष्टमिति** ।।

## व्याख्या

अयं कालिकसंबन्धेन द्व्यणुकवान् कालिकसंबन्धेन स्पन्दवत्त्वात् । कालिकसंबन्धेन द्व्यणुकाभाववति खण्डप्रलये कालिकसंबन्धेन स्पन्दसत्त्वात्

अयं स्पन्दरूपो हेतुः व्यभिचारी । खण्डप्रलये जन्यद्रव्यसामान्यस्याभावात् खण्डप्रलयानन्तरं पुनःसृष्ट्यनुसारेण परमाणुषु स्पन्दः अवश्यमङ्गीकरणीयः । तेन स्पन्देन परमाणुद्वयसंयोगद्वारा पुनः द्व्यणुकोत्पत्तिसंभवात् । एवं च हेत्वधिकरणे खण्डप्रलये द्व्यणुकसामान्यध्वंसप्रागभावयोः असंभवात् यत्किंचित्द्व्यणुकध्वंस-सत्त्वेऽपि साध्यतावच्छेदकस्य द्व्यणुकत्वरूपसामान्यधर्मस्य तत्प्रतियोगितान-वच्छेदकत्वात् अतिव्याप्तिरिति भावः । एतदुक्तं भवति– खण्डप्रलये पुनः सृष्ट्यन्तरीय द्व्यणुकप्रागभावस्य सत्त्वेन द्व्यणुकत्वावच्छिन्न प्रतियोगिताकध्वंसो न संभवति । कस्यचित् द्व्यणुकस्य सत्त्वे च न द्व्यणुकत्वावच्छिन्नस्य प्रागभावः । ध्वंसप्रागभावयोः सत्त्वे च न द्व्यणुकत्वावच्छिन्नात्यन्ताभावः । ततश्च साध्यस्य द्व्यणुकस्य संसर्गाभावः न हेतुसमानाधिकरण इति सृष्टिकालवृत्तित्वविशिष्ट गोत्वाभाव एव तथा हेत्वधिकरणवृत्तिः, तत्प्रतियोगितानवच्छेदकत्वं द्व्यणुकत्वेऽस्तीत्यति-व्याप्तिरिति ।।

**यदा अदृष्टम्** इति उत्तरग्रन्थमवतारयति । अनेन **यदा स्पन्द** इत्यत्रोक्तदोषो वारयितुं शक्यते इति लभ्यते । तदाह– **द्व्यणुकनाशानुगुणक्रियाया** इति । सर्वभावकार्यध्वंसो महाप्रलयः । स च चरमपरमाणुसंयोगनाशरूपः । तदानीं च द्व्यणुकस्यापि नाश इष्टः । स च परमाणुद्वयसंयोगनाशात् । तन्नाशश्च परमाणुक्रियया वक्तव्यः । तथाचायं क्रमः –

(१) द्व्यणुकनाशार्थं परमाणौ क्रिया

(२) परमाणुद्वयविभागः

(३) परमाणुद्वयसंयोगनाशः

(४) त्र्यणुकरूपोत्तरदेशे परमाणुसंयोगः द्व्यणुकनाशश्च
अस्मिन् क्रमे महा प्रलयपूर्वतृतीयक्षणे



(५) समवायिकारणद्व्यणुकनाशात् त्र्यणुकनाशः, क्रियानाशश्च

(६) आश्रयनाशात् परमाणुसंयोगनाशरूपो महाप्रलयः (परमाणवः असंयुक्ताः तिष्ठन्ति)

स्पन्दरूपहेत्वधिकरणे परमाणुषु द्व्यणुकसामान्यध्वंसस्यापि सत्त्वात् तत्प्रतियोगितावच्छेदकत्वस्यैव द्व्यणुकत्वरूपसाध्यतावच्छेदके सत्त्वात् नातिव्याप्तिः इत्याशयेन स्थलान्तरमनुसरति– **यदा अदृष्टमिति** । इति भावः ।।

अयं (कालः) खण्डप्रलयरूपः कालिकसंबन्धेन जन्यज्ञानवान्, कालिकसंबन्धेन अदृष्टवत्त्वात् । कालिकसंबन्धेन जन्यज्ञानाभाववति प्रलये कालिकसंबन्धेन अदृष्टसत्त्वात् अयं व्यभिचारी । अत्र हेत्वधिकरणे प्रलये पूर्ववत् जन्यज्ञानसामान्यध्वंसो न संभवति । खण्डप्रलयानन्तरभाविजन्यज्ञानस्य इदानीं ध्वंसासंभवात् यत्किंचिज्जन्यज्ञानध्वंससत्त्वेऽपि तत्प्रतियोगितावच्छेदकं यत्किंचिज्जन्यज्ञानत्वमेव, जन्यज्ञानत्वं सामान्यरूपं प्रतियोगितानवच्छेदकं भवतीत्यतिव्याप्तिरिति भावः ।।

## गादाधरी

**ज्ञानत्वमात्रेण** साध्यतायां प्रलये ईश्वरीयज्ञानसत्त्वात् अयं सद्धेतुरेवेत्यतो **जन्यमिति** । **नित्य**सुखाभिव्यक्तिः मुक्तिः इति मते खण्डप्रलयेऽपि मुक्तात्मनि जन्यज्ञानसत्त्वात् सद्धेतुत्वं संभवतीत्यतः **दुःखमिति** । **जन्यमात्रं प्रति** अदृष्टस्य हेतुतया महाप्रलयाव्यवहितप्राक्क्षणेऽपि **तज्जनकीभूतस्य** अदृष्टस्य आवश्यकत्व-मिति तदा जन्यज्ञानत्वदुःखत्वाद्यवच्छिन्नध्वंससत्त्वात् नोपदर्शितस्थलयोरतिव्याप्तिः संभवतीत्यतः स्थलान्तरमाह– **यदा तस्येति** । यदात्मसमवेतादृष्टं न प्रलयजनकं स तत्पदेन विवक्षितः । व्यभिचारश्चात्र खण्डप्रलये सुषुप्त्यादौ च बोध्यः ।।

## व्याख्या

**यदा जन्यं ज्ञानम्** इत्यत्र **जन्यमिति** विशेषणस्य प्रयोजनमाह– **ज्ञानत्वमात्रेणेति** । जन्यज्ञानवान् इत्यत्र जन्येत्यनुक्तौ ज्ञानमात्रस्य साध्यत्वे हेत्वधिकरणे प्रलयेऽपि ईश्वरज्ञानसत्त्वात् अस्य सद्धेतुत्वमेवेति असद्धेतुत्वसंपादनाय जन्येत्युक्तम् । खण्डप्रलये जन्यज्ञानाभावात् अदृष्टस्य च सत्त्वात् व्याभिचारित्वमिति भावः ।।

एतत्स्थलमुपेक्ष्य **दुःखं वेति** स्थलान्तरानुधावने बीजमाह– **नित्येति** । जन्यज्ञानवान् अदृष्टात् इत्यत्र व्यभिचारनिरूपकाधिकरणं खण्डप्रलयः इत्यभिप्रायेण पूर्वम् असद्धेतुत्वमुक्तम् । तदा कस्यापि जन्यज्ञानं नास्तीति । मोक्षस्य आत्यन्तिकदुःखनिवृत्तिरूपतया मुक्तात्मन्यपि जन्यज्ञानं नास्तीत्याशयेन । परं तु नित्यसुखाभिव्यक्तिः मुक्तिरिति मते खण्डप्रलयेऽपि मुक्तात्मनि जन्यज्ञानसत्त्वात् अस्य सद्धेतुत्वात् एतद्विहाय दुःखस्य साध्यत्वानुसरणम् । तथा च अयं दुःखवान् अदृष्टात् इत्यत्र हेत्वधिकरणे खण्डप्रलये दुःखस्य अभावात् असद्धेतुत्वम् ।।

ननु अनयोरपि स्थलयोः अतिव्याप्तिः न भवति । तथा हि – जन्यसामान्यं प्रति अदृष्टस्य कारणत्वात् महाप्रलयाख्यकार्यं प्रत्यपि तत्कारणीभूतस्यादृष्टस्य तत्प्राक्क्षणे आवश्यकतया तत्रैव हेत्वधिकरणे जन्यत्वावच्छिन्नध्वंसस्य दुःखत्वावच्छिन्नध्वंसस्य च सत्त्वात् तमादाय अतिव्याप्तिवारणसंभवात् इत्यतः स्थलान्तरमनुसरतीत्याह– **जन्यमात्रं प्रतीति** । **तज्जनकीभूतस्य** – महाप्रलयजनकस्य ।।

यदात्मसमवेतमदृष्टं न प्रलयजनकं स तस्येति तत्पदेन विवक्षितः । अयं कालिकसंबन्धेन तदीयज्ञानवान् कालिकसंबन्धेन तदीयादृष्टवत्त्वात् । यदात्मसमवेतमदृष्टं न प्रलयजनकं स तत्पदेन विवक्षितः । व्यभिचारनिरूपकाधिकरणं



खण्डप्रलयः सुषुप्तिश्च । तदानीं तदीयज्ञानरूपसाध्याभावात् खण्डप्रलयानन्तरकालीनज्ञानजनकादृष्टसद्भावाच्च व्यभिचारिहेतुः । अत्र हेतुमति खण्डप्रलये सुषुप्तौ च न तदीयज्ञानसामान्यात्यन्ताभावः भवितुमर्हति । पूर्वापरज्ञानप्रागभावध्वंसयोः सत्त्वेन तदत्यन्ताभावस्यासंभवात् । पूर्वक्षणवृत्तित्वविशिष्टगोत्वाद्यभावमादाय तदप्रतियोगित्वात् साध्यस्य अतिव्याप्तिरिति भावः ।।

## गादाधरी

**खण्डप्रलय**निष्ठद्व्यणुकादिध्वंसस्य द्व्यणुकत्वादिरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वासंभवं व्युत्पादयति– **नहीति** । **तयोः – ध्वंसप्रागभावयोः । सामान्याभावत्वमतेऽपि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमतेऽपि** । ध्वंसप्रागभावयोः अन्यन्ताभावाविरोधित्वमते न तयोस्तथात्वमित्येतत् सूचयितुं **मतेऽपीति** । **एकविशेषेति** । एकविशेषप्रागभाववति न सामान्यावच्छिन्नध्वंसस्य, विशेषान्तरध्वंसवति न सामान्यधर्मावच्छिन्नप्रागभावस्य संभव इत्यर्थः । अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकतया तत्कालीनध्वंसादिप्रतियोगिताशून्यानागतादिपदार्थसाधारणधर्मस्य तादृशप्रतियोगितावच्छेदकत्वासंभवादिति भावः ।।

## व्याख्या

ननु पूर्वोक्तस्थलेषु हेतुसमानाधिकरणाभाव इत्यनेन साध्यध्वंसमादाय कुतो नातिव्याप्तिवारणसंभवः । ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानभ्युपगन्तृमते दोषवारणासंभवेऽपि तयोः तदभ्युपगन्तृमते जन्यज्ञानादिसामान्याधिकरणे प्रलये कुतो न जन्यज्ञानत्वाद्यवच्छिन्नध्वंसः इत्याशङ्कायाः तदुपपादनापेक्षित्वात् तदर्थं **''न हि तयोः''** इत्यादिदीधितिग्रन्थः प्रवृत्त इत्याह– **खण्डप्रलय** इति । सामान्याभावत्वमतेऽपीत्यनेन विवक्षितमाह– **ध्वंसप्राग-**

**भावयोरिति** । ध्वंसप्रागभावयोरत्यन्ताभावाविरोधित्वमते सामान्यध्वंसवत्यपि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वेन क्लृप्तात्यन्ताभावमादायैव प्रतीत्यादिनिर्वाहात् तन्मते ध्वंसस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमप्रामाणिकमिति सूचितमिति भावः ।।

**एकविशेषेति** । एतन्मतेऽपि सर्वव्यक्तीनां यदा ध्वंसप्रागभावसंभवः तदानीमेव तथात्वम् । न तु यत्किंचिद्ध्वंसवति काले तद्वस्तुसामान्यप्रागभावः, ध्वस्तवस्तु प्रागभावस्य तदानीमभावात् । एवं यत्किंचित्प्रागभाववति न तत्सामान्यध्वंसः । उत्पत्स्यमानवस्तुध्वंसस्य तदानीमभावात् । तदानीं न तयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वम् । अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकतया तत्कालीनध्वंसाद्यप्रतियोगिवस्तुवृत्तिसाधारणधर्मस्य तादृशप्रतियोगिताशून्यवृत्तित्वेन अवच्छेदकत्वासंभवादित्यर्थः ।।

### गादाधरी

यद्यप्येवं महाप्रलयवृत्तयोऽपि गोध्वंसाः प्रत्येकमेकैकगोव्यक्तिमात्रवृत्तिप्रतियोगिताका इति न कस्यापि ध्वंसस्य प्रतियोगितायाः समनियतं गोत्वम्, तथापि चरमध्वंसस्य यावद्गोप्रतियोगिकत्वोपगमे तत्प्रतियोगितावच्छेदकत्वं गोत्वस्य संभवतीत्यभिप्रायेण संसर्गाभावत्वनिवेशे पूर्वोक्तस्थलमुपेक्ष्य द्व्यणुकादिसाध्यके स्पन्दादिहेतुकस्थले अतिव्याप्तिरभिहिता ।।

**वस्तुतस्तु** ध्वंसप्रागभावयोः व्यधिकरणप्रतियोगिकत्वविरहात् **चरमगोध्वंसस्यापि** यावद्गोप्रतियोगिकत्वं न संभवतीति ध्येयम् ।।

### व्याख्या

नन्वेवं रीत्या गोमान् गोत्वात् इत्यत्रापि अतिव्याप्तिः भवति । खण्डप्रलये गोत्वावच्छिन्नध्वंसोपगमे बाधकाभावेऽपि अन्यूनानतिरिक्तवृत्तिधर्मस्यैव



अवच्छेदकतया महाप्रलयवृत्तिनिखिलगोव्यक्तिध्वंसानां तत्तद्व्यक्तिमात्र प्रतियोगिकतया गोत्वस्य तादृशध्वंसप्रतियोगितातिप्रसक्तत्वेन अवच्छेदकत्वाभावादिति चेत्–

महाप्रलयवृत्तिचरमगोध्वंसस्य निखिलगोप्रतियोगिकत्वमभ्युपगम्यत इति तमादायैव गोत्वे अवच्छेदकत्वं भवतीति अभिप्रायेण स्थलान्तरानुसरणमित्यर्थः । ध्वंसपूर्वभाविनामेव ध्वंसप्रतियोगित्वात् चरमेतरगोध्वंसप्रतियोगित्वं चरमगवि न स्यादिति **चरमगोध्वंसेत्युक्तम्** । चरमगोध्वंसस्यपि यावद्गोप्रतियोगिकत्वं संभवतीत्याह– **वस्तुतस्त्विति** । व्यधिकरणध्वंसानधिकरणप्रतियोगिकत्वविरहात् इत्यर्थः । चरमगोध्वंसस्य प्रतियोगितासंबन्धेनाधिकरणं चरमगौरेव न त्वन्यगौरिति तत्प्रतियोगिकत्वमयुक्तमित्यर्थः ।।

### दीधितिः

**प्रतियोगिमत इव** ध्वंसादिमतोऽपि कालस्य अत्यन्ताभाववत्त्वे **विरोधाभावात् । अन्यथा** अत्यन्ताभावस्य **कालमात्रावृत्तित्व**प्रसङ्गात् ।।

### गादाधरी

विरोधिनः प्रतियोगिनोऽधिकरणे काल एव चेदभावो वर्तते तदा सुतरां ध्वंसप्रागभाववति काले प्रलयादौ असौ वर्तते इति सूचनाय प्रतियोगिमत इव इति दृष्टान्तः । **विरोधाभावात्** – बाधकाभावात् । तथा च हेत्वधिकरणे प्रलयादौ गोत्वाद्यवच्छिन्नाभावसत्त्वात् नोक्तस्थलेऽतिव्याप्तिरिति भावः ।।

**न च** प्रलये गोत्वाद्यवच्छिन्नाभावोऽप्रामाणिकः, **प्रत्यक्षायोगात्** अनुमानस्य चाप्रयोजकत्वात् इति वाच्यम् । **प्रलये गौर्नास्तीति शब्दस्यैव प्रमाणत्वात्** । न हि तादृशवाक्यस्याप्रामाण्यं कश्चिदुपैति । न च ध्वंसादिरेव नञर्थः नात्यन्ताभाव इति वाच्यम् । अन्वयितावच्छेदकसमानाधिकरणप्रतियोगिताकाभावमात्रस्य नञा प्रतिपादनेऽतिप्रसङ्गात् तदवच्छिन्नप्रतियोगिताकाभावबोधकताया एव तस्य

व्युत्पन्नतया अत्यन्ताभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमते ध्वंसादेर्नञा प्रतिपादनासंभवात् । **अन्यथा** प्रतियोगिमति तद्ध्वंसप्रागभाववति च काले कालिकसंबन्धावाच्छिन्न प्रतियोगिताकात्यन्ताभावस्य अवृत्तौ । अत्यन्ताभावस्य- तादृशात्यन्ताभावस्य । **कालमात्रावृत्तित्वेति** । दैशिकविशेषण- तयेत्यादिः ।।

### व्याख्या

एतावता गोमान् गोत्वात् इत्यत्र कालिकसंबन्धेन गोरूपसाध्याभाववति प्रलये कालिकसंबन्धेन गोत्वस्य सत्त्वात् व्यभिचारिणि– हेत्वधिकरणे प्रलये गवात्यन्ताभावः न भवति, तदा गोध्वंसस्य सत्त्वेन ध्वंसप्रागभावाधिकरणे विरोधेन अत्यन्ताभावासंभवात् अभावान्तरमादाय तदप्रतियोगित्वात् साध्यस्यातिव्याप्ति- रित्याशङ्का स्थिता । तत्र समाधानमाह **दीधितौ प्रतियोगिमत इव** इत्यादिना। गवात्यन्ताभावस्य गौः प्रतियोगी । काले कालिकसंबन्धेन गौः वर्तते गोरभावोऽपि तेन संबन्धेन वर्तते । विरोधित्वेन सर्वसंमतगोमत्यपि काले अवच्छेदकभेदेन गोरत्यन्ताभावो वर्तते चेत्– विरोधित्वेन असंमतगोध्वंसवति काले गवात्यन्ताभावः कुतो न वर्तेत । तथा च हेत्वधिकरणप्रलयावच्छिन्नकाले गवात्यन्ताभावस्य सत्त्वात् तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं गोत्वमिति नातिव्याप्तिरिति भावः । तदाह गादाधर्यां– **विरोधिन** इत्यादिना ।।

साध्यहेत्वोरैक्यमाशङ्क्याह– **विरोधाभावात्– बाधकाभावादिति** । साध्यहेत्वोरैक्यशङ्का कथमिति चेत्– श्रूयताम् । ध्वंसादिमान् कालः अत्यन्ताभाववान् विरोधाभावात् इत्युक्ते विरोधशब्देन एकाधिकरणवृत्तित्वाभावस्य बोधनात् अत्यन्ताभावः ध्वंसश्च एकत्र नास्तीति प्रतीयेत । प्रकृते तु एकत्रोभयमस्तीति विवक्षितम् । अतो बाधकाभावात् इति व्याख्यातं **भट्टाचार्यैः** । एवं गोमान्



गोत्वात् इत्यत्र हेत्वधिकरणे प्रलये गोत्वावच्छिन्नात्यन्ताभावस्यापि सत्त्वात् तत्प्रतियोगितावच्छेदकमेव गोत्वमिति नातिव्याप्तिरिति भावः ।।

ननु ध्वंसादिमति अत्यन्ताभावसत्त्वे बाधकाभावेऽपि साधकप्रमाणाभावात् कथं तत्सिद्धिः इति शङ्कते– **न चेति** । **प्रत्यक्षायोगादिति** । प्रलयकालस्या- प्रत्यक्षत्वेन तदधिकरणकस्य गवात्यन्ताभावस्य प्रत्यक्षेण ग्रहीतुमशक्यत्वादिति भावः । समाधत्ते– **प्रलये गौर्नास्तीति शब्दस्यैव प्रमाणत्वादिति** । एतादृश- प्रामाणिकशब्दादेव प्रलये गवात्यन्ताभावसिद्धिः । प्रत्यक्षानुमानागोचरे विषये आप्तोक्तशब्दस्यैव प्रमाणत्वात् । आप्तोक्तवाक्याप्रामाण्यस्य वक्तुमशक्यत्वादिति भावः । **न चेति** । प्रलये गौर्नास्तीति वाक्ये नञः ध्वंस एवार्थः नात्यन्ताभावः । अतः कथम् इदं वाक्यं प्रलये गवात्यन्ताभावं बोधयेत् इति शङ्का । समाधानं तु अन्वयितावच्छेदकानवच्छिन्नान्वयिनिष्ठप्रतियोगिताकाभावमात्रस्य नञा बोधने यत्किंचिद्घटवत्यपि भूतले घटो नास्तीति प्रत्ययप्रसङ्गात् अन्वयितावच्छेदका- वच्छिन्नप्रतियोगिताकाभावबोधकत्वमेव नञः व्युत्पत्तिसिद्धम् । ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानुपगन्तृमते च नञा तद्बोधनासंभवात् गोत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावविषयकत्वमेव प्रलये गौर्नास्तीति वाक्यस्य वक्तव्यमिति ध्वंसविषयकत्वासंभवादिति भावः ।।

**अन्यथेति** । गवादिमति तद्ध्वंसवति तत्प्रागभाववति च काले कालिकसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यावृत्तावित्यर्थः । कालिक- संबन्धावच्छिन्नगवात्यन्ताभावस्य दैशिकविशेषणतया क्वचिदपि काले वृत्तित्वं न स्यात् । क्वचित् काले प्रतियोगिनः क्वचिच्च प्रलयादौ तद्ध्वंसप्रागभावयोः सत्त्वनिय- मात् । विरोधेन तस्य कालवृत्तित्वस्यैव दुर्घटत्वादिति भावः ।।

## दीधितिः

**इयांस्तु** विशेषः– **यदेकस्य देशभेदावच्छिन्नं तथात्वम्, अपरस्य** तु **स्वरूपावच्छिन्नमिति** । **देशे कालस्येव** काले देशस्यावच्छेदकत्वात् । **तच्छून्ये** च काले **तदभावस्य प्रतियोगिव्यधिकरणत्वात्** ।।

## गादाधरी

ननु ध्वंसप्रागभाववति अत्यन्ताभाववृत्तौ **तस्य तदविरोधितावत्** प्रतियोगिमति तद्वृत्त्या तस्य प्रतियोग्यविरोधितापि आपद्येत, अविशेषात् इत्यत आह– **इयांस्त्विति** । **एकस्य** – प्रतियोगिमतोऽपि कालस्य **देशभेदावच्छिन्नम्**– प्रतियोग्यनवच्छेदकदेशावच्छिन्नम् **तथात्वम्** = दैशिकसंबन्धेन कालिकसंबन्धावच्छिन्नात्यन्ताभाववत्त्वम् । तथा च प्रतियोग्यभावयोरेकावच्छेदेन एकत्रावर्तमानत्वं विरोधित्वम् तावताप्यक्षतमेवेति भावः । **अपरस्य** – ध्वंसादिमतः **स्वरूपावच्छिन्नम्** – ध्वंसाद्यधिकरणतावच्छेदकरूपावच्छिन्नम्, तथात्वमित्यनुषज्यते। तथा च एकावच्छेदेन एकत्रवर्तमानतया ध्वंसाद्यविरोधित्वमत्यन्ताभावस्येतिभावः ।।

**ननु काले वृत्तौ** देशस्यावच्छेदकत्वे किं मानम्, अत आह– **देशे कालस्येवेति** । **यथा** देशे दैशिकसंबन्धावच्छिन्नाभावस्य वृत्तौ कालस्यावच्छेदकत्वम् **इदानीमत्र** गौः नास्तीत्यादि प्रतीतिवलात्, तथा कालिकसंबन्धावच्छिन्नाभावस्य वृत्तावपि देशविशेषावच्छेदकत्वस्यावश्यकत्वं तथाविध प्रतीतिबलादेव । तादृशप्रतीतेः कालावच्छेदेन देशवृत्तिः, देशावच्छेदेन कालवृत्तिर्वा विषय इत्यत्र विनिगमकाभावात् अवच्छेदकत्वाधिकरणत्वयोरुभयोरेव सप्तम्यर्थत्वादिति भावः ।।

## व्याख्या

पूर्वं **दीधितौ** प्रतियोगिमति काले अत्यन्ताभाववत् ध्वंसादिमत्यपि काले अत्यन्ताभाववत्त्वं भवितुमर्हति बाधकाभावात् इत्युक्तम् । तदुपरि इयं शङ्का



भवति, यथा ध्वंसवति प्रागभाववति च अत्यन्ताभावस्य सत्त्वे अत्यन्ताभावस्यध्वंसाद्यविरोधित्वं तथा प्रतियोगिमति च काले अत्यन्ताभावसत्त्वे अत्यन्ताभावस्य स्वप्रतियोगिविरोधित्वाभावः – स्वप्रतियोगिसामानाधिकरण्यं प्रसज्येत, विशेषाभावत् । न च इष्टापत्तिः । प्रतियोग्यभावयोः एकाधिकरणावृत्तित्वरूपस्य विरोधस्य सर्वैरङ्गीकृतत्वात् इति शङ्कां निरस्यति **दीधितिकारः "इयांस्तु विशेषः"** इत्याह गादाधर्यां **ननु** इत्यादिना । **तस्य** – अत्यन्ताभावस्य, **तदविरोधितावत्**– ध्वंसप्रागभावाभ्यां विरोधाभाववत् **तद्वृत्त्या** – अत्यन्ताभावस्य सत्त्वेन **तस्य**– अत्यन्ताभावस्य ।।

प्रतियोगिमति काले कुत्रात्यन्ताभावः वर्तत इति चेत्– यदा क्वचित् देशे घटो वर्तते तदैव अन्यदेशे तदत्यन्ताभावोऽपि वर्तत इति निर्विवादम् । परं तु प्रतियोग्यनवच्छेदकदेशावच्छेदेन तस्मिन्नेव काले वर्तते ।।

एवं सति प्रतियोगितदभावयोः विरोधः कथमुपपद्यते इति चेत्– प्रतियोग्यभावयोः एकावच्छेदेन एकत्रावर्तमानत्वमेव विरोधः । स च विभिन्नावच्छेदेन प्रतियोग्यभावयोः एकत्र वृत्तावपि सुरक्षित एवेति भावः ।।

**अपरस्य** – ध्वंसवतः प्रागभाववतश्च कालस्य, **स्वरूपावच्छिन्नम्** – ध्वंसाद्यधिकरणतावच्छेदकावच्छेदेनैव तदत्यन्ताभाववत्त्वम् । अयं भावः– प्रतियोग्यधिकरणकाले प्रतियोग्यनवच्छेदकदेशावच्छेदेन अत्यन्ताभावः वर्तते । ध्वंसादिमति तु यदवच्छेदेन ध्वंसादि तदवच्छेदेनैव तदत्यन्ताभाववत्त्वं यथा प्रलयावच्छेदेन गवादिध्वंसः वर्तते तदवच्छेदेनैव तदत्यन्ताभावोऽपि वर्तते । तथा च एकावच्छेदेन एकत्र वर्तमानतया ध्वंसात्यन्ताभावयोरविरोधित्वमिति ।।

नन्वेवं सति प्रतियोगिरूपदृष्टान्तस्य (प्रतियोगिमत इवेत्युक्तस्य) ध्वंसादिमतः इत्युक्तस्य दार्ष्टान्तिकस्य च वैषम्यं भवतीति चेत्– सत्यम् । ध्वंसप्रागभावाधिकरणे

अत्यन्ताभावसत्त्वमात्रे प्रतियोगिवत् इति दृष्टान्तकथनम् । प्रतियोगिवत् इत्यस्यायमर्थः– यथा प्रतियोग्यधिकरण एवात्यन्ताभावो वर्तते, तथा ध्वंसाद्यधिकरणेऽपि अत्यन्ताभावो वर्तत इति ॥

काले वृत्तौ देशस्यावच्छेदकत्वं प्रमाणसिद्धमित्याह– **ननु काले वृत्ताविति** । देशे वृत्तौ कालस्यावच्छेदकत्वे यत् प्रमाणं तदेव काले वृत्तौ देशस्यावच्छेदकत्वेऽपि प्रमाणमित्याह– **यथेति** । तत्र वा किं प्रमाणमित्यत्राह– **इदानीमिति** । इदानीमत्र गौर्नास्तीत्यस्य अयमर्थः– अस्मिन् काले अस्मिन् देशे गौर्नास्तीति । अत्र हि देशवृत्तौ कालस्यावच्छेदकत्वं यथा भासते, तथा कालवृत्तावपि देशस्यावच्छेदकत्वमत्रैव भासते । अत्र हि कालवाचकपदम् **इदानीमिति**, देशवाचकपदम् **अत्र** इति । उभयत्र सप्तमी वर्तते । सप्तम्याश्च आधारत्वम् अवच्छेदकत्वं चार्थः । एवं च प्रकृते कीदृशसप्तम्याः आधारत्वमर्थः, कीदृशसप्तम्याश्चावच्छेदकत्वमर्थः इत्यत्र विनिगमकस्य दुर्वचत्वात् यथाक्रममुभयार्थकत्वं सिध्यतीति इयमेव प्रतीतिः यथाक्रमं कालवृत्तौ देशस्य, देशवृत्तौ कालस्य चावच्छेदकत्वं विषयीकरोतीति भावः ॥

## गादाधरी

**प्रतियोगिमत्यपि** काले गवात्यन्ताभावस्य वृत्तौ तस्य असमानाधिकरणान्तेन वारणात् कथं तमादायोक्तातिव्याप्तिः वार्यत इत्यत आह– **तच्छून्ये चेति** । प्रतियोगिशून्ये प्रलयादावित्यर्थः । **तदभावस्य** – गवात्यन्ताभावस्य । **प्रतियोगिव्यधिकरणत्वात्** – प्रतियोगिसामानाधिकरण्याभाववत्त्वात् । **सामानाधिकरण्यस्य** अव्याप्यवृत्तितामत एव प्रतियोगिसामानाधिकरण्याभावस्याभावविशेषणत्वात् । **अन्यथा** ''संयोगी सत्त्वात्'' इत्यादावेवातिव्याप्तिः । **तस्य व्याप्यवृत्तितापक्षे** प्रतियोग्यनधिकरणवृत्तित्वस्यैव निवेशनीयतया प्रलयादिवृत्तिगवात्यन्ताभावस्यान्यत्र प्रतियोगिसमानाधिकरणत्वेऽपि लक्षणघटकत्वाव्याघातादिति भावः ॥



## व्याख्या

ननूक्तरीत्या प्रतियोगिमत्यपिकाले गवात्यन्ताभावसत्त्वाङ्गीकारे गोमान् गोत्वात् इत्यत्र हेतुसमानाधिकरणस्य गवत्यन्ताभावस्य प्रतियोगिगवाधिकरणकालवृत्तितया तदसमानाधिकरणत्वाभावेन लक्षणाघटकतया कथं तमादायातिव्याप्तिवारणं भवेत् इति शङ्कां निराकरोति– **तच्छून्ये** इत्यादिना **दीधितौ** इत्याह **गादाधर्यां**– **प्रतियोगिमत्यपीति** । महाकाले विभिन्नखण्डकालावच्छेदेन प्रतियोगी तदभावश्च वर्तेते । एवं च प्रतियोगिशून्यप्रलयावच्छेदेन काले गवात्यन्ताभावस्य प्रतियोगिसामानाधिकरण्याभावोऽपि वर्तते । प्रतियोगिसामानाधिकरण्यवति गवाभावे कथं प्रतियोगिसामानाधिकरण्याभाववत्त्वम् इत्यत्राह– **सामानाधिकरण्यस्येति** । हेत्वधिकरणवृत्त्यभावे प्रतियोगिसामानाधिकरण्याभाव इति विशेषणं सामानाधिकरण्यस्य अव्याप्यवृत्तित्वमिति पक्षमवलम्ब्येति भावः । तत्र युक्तिमाह– **अन्यथेति** । तस्य व्याप्यवृत्तित्वे इत्यर्थः । अयं संयोगी सत्त्वात् इत्यत्र व्यभिचारिणि हेतुसमानाधिकरणं संयोगाभावमादाय अतिव्याप्तिवारणं कार्यम् । तत्र संयोगाभावस्य प्रतियोग्यसामानाधिकरण्यं गुणावच्छेदेन वाच्यम् । तथा सति द्रव्ये प्रतियोगिसामानाधिकरण्यवति संयोगाभावे गुणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावो न स्यात् इति अभावान्तरमादाय अतिव्याप्तिः स्यादिति सामानाधिकरण्यस्याव्याप्यवृत्तित्वपक्षमवलम्ब्यैव प्रतियोगिसामानाधिकरण्याभावस्य हेतुसमानाधिकरणाभावविशेषणत्वमुक्तमिति भावः ॥

भवत्वेवं, व्याप्यवृत्तित्वपक्षे कथं निर्वाह इति चेत् तत्राह– **तस्य व्याप्यवृत्तितापक्ष** इति । व्याप्यवृत्तित्वपक्षे प्रतियोग्यनधिकरणवृत्तित्वमेव

अभावविशेषणम्, न तु प्रतियोग्यधिकरणवृत्तित्वाभावः । तथा च प्रतियोगिसमानाधिकरणेऽपि गवाभावे, प्रलये वृत्तेः तस्य गवात्यन्ताभावस्य प्रतियोगिगवानधिकरणप्रलयवृत्तित्वमस्तीति लक्षणघटकतया अतिव्याप्तिवारणं सुघटमिति भावः ।।

### दीधितिः

**न च संसर्गाभावविशेषो**ऽत्यन्ताभावः । संसर्गाभावत्वं च **संसार्गारो**पजन्यप्रतीतिविषयाभावत्वरूपम् । जन्यताघटकनियमघटितमिति वाच्यम् । **तद्वदन्यावृत्तित्व**रूपनियमस्य **तत्र घटकत्वात्** । **एवं नियमान्तरस्य अत्र** प्रवेशेऽपि **न क्षतिः** इति **आहुः** ।।

### गादाधरी

संसर्गाभावत्वतद्घटितात्यन्ताभावत्वयोः व्याप्तिघटितत्वेन अनवस्थामाशङ्कते– **न चेति** । **संसर्गाभावविशेषः** – **सदातन**संसर्गाभावः । **संसर्गारोपः** – तादात्म्यातिरिक्तसंबन्धेन प्रतियोग्यारोपः । **तद्वदन्यावृत्तित्वेति** । स्वाव्यवहितपूर्वक्षणावच्छेदेन तद्वतोऽन्यस्मिन् वर्तते यद्यत् तदन्यत्वेत्यर्थः । **तत्र** – जन्यत्वे । **षष्ठ्यर्थे सप्तमी** । **नियमान्तरस्य** – **अविशिष्टधी**व्यावृत्तविशिष्टधीनियामकत्वरूपसंबन्धत्वघटकनियमस्य । **अत्र** – संसर्गाभावत्वशरीरे । **न क्षतिरिति** । **तद्वदन्यावृत्तित्व**रूपनियमस्यैव तत्र प्रवेशनीयत्वादिति भावः । स्वमते नियमानन्तर्भावस्य अनुपदं वक्ष्यमाणत्वात् **आहुः** इत्युक्तम् ।।

### व्याख्या

पूर्वम् अभावविशेषणतया अत्यन्तपदनिवेशे यदा गोत्वं तदा गौः इत्यत्रातिव्याप्तिराशङ्किता । ततः अत्यन्ताभावस्थाने संसर्गाभावनिवेशे गोध्वंसमादाय तत्रातिव्याप्तिर्वारयितुं शक्यत इति शङ्कायां तथोक्तावपि यदा स्पन्दः तदा द्व्यणुकमित्यादिस्थलेषु अतिव्याप्तिमाशङ्क्य प्रतियोगिमत इव ध्वंसादिमतोऽपि कालस्य अत्यन्ताभाववत्त्वे बाधकाभावात् इति समाधानमुक्तम् ।।



इदानीं अत्यन्ताभावस्य संसर्गाभावस्य वा लक्षणे निवेशे अनवस्था भवतीति शङ्कते **दीधितौ न च संसर्गारोपे**त्यादिना । मूले **मणिग्रन्थे** अत्यन्ताभावस्य लक्षणघटकत्वात् अत्यन्ताभावस्य नित्यसंसर्गाभावरूपत्वात् अनवस्था भवति । तथा हि– संसर्गाभावो नाम संसर्गारोपजन्यप्रतीतिविषयोऽभावः । तत्र घटकस्य जन्यपदस्य नियतोत्तरवृत्तीत्यर्थः । नियतत्वं च व्याप्तिरेवेति तादृशव्याप्तिश्च उक्तरीत्या हेतुसमानाधिकरणात्यन्ताभावघटिता । तत्र च तद्घटकव्याप्तिशरीरे संसार्गभावप्रवेशात् पुनश्च व्याप्तिप्रवेश इति रीत्या अनवस्थेति शङ्कते **दीधितिकार** इत्याह– **गादाधर्याम् संसर्गाभावत्वेति** । संसर्गाभावत्वे संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपे जन्यत्वघटकतया नियमरूपा व्याप्तिः प्रविष्टा । तद्घटितात्यन्ताभावशरीरेऽपि व्याप्तिः प्रविष्टेत्यर्थः । न तु उभयथा व्याप्तिप्रवेश इत्यर्थः । **संसार्गभावविशेष** इत्यत्र विशेषपदार्थमाह– **सदातनेति** । संसर्गाभावत्वं प्रागभावध्वंसात्यन्ताभावत्रितयसाधारणम् । नित्यसंसर्गाभावत्वम् अत्यन्ताभावमात्रवृत्ति । एवं च संसर्गाभावपदेन त्रयाणां ग्रहणमिष्टम् । तथा सति अन्योन्याभावविषयकप्रतीतेः तादात्म्यसंसर्गारोपजन्यत्वेऽपि तादात्म्यातिरिक्तसंसर्गारोपजन्यप्रतीतिविषयत्वमत्यन्ताभावस्येत्याशयो **दीधितिकारस्य** इत्याह– **संसर्गारोपः** – तादात्म्यातिरिक्तसंबन्धेन प्रतियोग्यारोपः । योग्यानुपलब्धिः अभावप्रत्यक्षे कारणम् । योग्यता च प्रतियोग्यारोपजन्यारोपविषयप्रतियोगिकत्वरूपा । तादृशयोग्यताविशिष्टानुपलब्धिसहकृतप्रत्यक्षविषयः अभावः इतिपर्यन्तं विवक्षितं स्यात् । अनवस्थाप्रसङ्गार्थम् उपयुक्तोंऽशः **मूले**ऽनूदितः ।।

संसर्गारोपजन्यप्रतीतिविषयाभावत्वमित्यत्र उक्तामनवस्थां परिहरति **दीधितौ तद्वदन्येति** । संसर्गारोपजन्यत्वघटको नियमः नोक्तरीत्या प्रतियोग्यसमानाधिकरणसंसर्गारोपसमानाधिकरणात्यन्ताभावघटितः येनानवस्था स्यात् । अपि तु तद्वदन्या-

वृत्तिरूपव्याप्तेरेव तत्र घटकत्वम् । तथा च स्वाव्यवहितपूर्वक्षणावच्छेदेन संसर्गारोपात् अन्यस्मिन् वर्तते यद्यत् तदन्यत्वं नियतपूर्ववृत्तित्वरूपकारणत्वघटकनियमः । तथा चात्रात्यन्ताभावस्यैव प्रवेशात् न दोष इति भावः । **तत्र घटकत्वात्** इति **दीधितौ तत्रेत्यस्य** जन्यत्वे इत्यर्थः ।।

सप्तम्याः घटकत्वार्थकत्वे घटकत्वात् इत्यनेनानन्वयात् व्याचष्टे– **षष्ठ्यर्थे सप्तमीति** । षष्ठ्याः निरूपितत्वमर्थः । **एवं नियमान्तरस्येति दीधितिः** । संसर्गाभावत्वशरीरे संसर्गः प्रविष्टः । संसर्गत्वं च विशिष्टबुद्धिनियामकत्वम् । तत्र च नियमस्य प्रवेशात् पुनरनवस्था । तत्परिहाराय तदर्थमाह– **अविशिष्टधी** इति । विशेषणविशेष्ययोः परस्परवैशिष्ट्यावगाहि बुद्धिः विशिष्टबुद्धिः । तदनवगाहि बुद्धिः अविशिष्टबुद्धिः ततोऽस्या व्यावृत्तिश्च उक्तनियमघटितरूपेणैवेति सूचनाय **अविशिष्टधीत्यादि** । **तद्वदन्यावृत्तित्वेति** । अत्रापि पूर्वोक्तरीत्या स्वाव्यवहित-प्राक्कालावच्छेदेन संसर्गवतोऽन्यस्मिन् वर्तते यद्यत् तदन्यत्वरूपनियमस्यैव प्रवेशादित्यर्थः । **आहुः** इत्यनेन सूचितमस्वरसमाह– **स्वमत** इति ।।

## दीधितिः

वक्ष्यते च **नियमाघटितमेव** संसर्गाभावत्वादिलक्षणम् । अनुपदमेव विवेचयिष्यते संसर्गाभावनिवेशन**प्रयोजनविरहः अव्याप्तिश्च** ।।

## गादाधरी

**नियमाघटितमिति** । **आरोपस्य** अभावबुद्धिहेतुतायाः निर्युक्तिकत्वात् **तादात्म्यातिरिक्त**संबन्धावच्छिन्नप्रतियोगिताकाभावस्यैव संसर्गाभावत्वादिति भावः । **प्रयोजनविरह** इति । **साध्यतावच्छेदकसंबन्धेन** यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तादृशप्रतियोगितानवच्छेदकत्वस्य निवेशनीयतया अन्योन्याभावत्वादिनिरूपकप्रतियोगितामादाय **दोषाप्रसक्तेः** इति भावः ।



**प्रतियोगि**तावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यनिवेशकल्पम् अभिप्रेत्याह– **अव्याप्तिश्चेति** । **तन्मते** संबन्धान्तरावच्छिन्नाभावमादाय **दोषवारणाय** साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताया एव निवेशनीयतया तादात्म्यसंबन्धेन यत्र साध्यता तत्र साध्यतावच्छेदकसंबन्धावच्छिन्नसंसर्गाभावप्रतियोगित्वाप्रसिद्ध्या अव्याप्तिरपि आपद्यत इत्यर्थः ।।

## व्याख्या

नियमाघटितमित्यस्य तात्पर्यमाह– **आरोपस्येति** । सर्वत्राभावबुद्धिः संसर्गारोपपूर्विकैवेति नियमो नास्तीत्यर्थः । तर्हि संसर्गाभाव इत्यस्य कोऽर्थ इति चेत् आह– **तादात्म्यातिरिक्तेति** । ननु अत्यन्ताभावस्य संसर्गावच्छिन्न-प्रतियोगिताकत्वेऽपि ध्वंसप्रागभावयोः संबन्धावच्छिन्नप्रतियोगिताकत्वाभावात् कथं तयोः संग्रह इति चेत्– छत्रिन्यायेन तथा व्यवहारः । अथ वा– समवायेन घटाधिकरणे संयोगेन घटो नास्ति, संयोगेन घटाधिकरणे समवायेन घटो नास्तीति प्रतीत्युपपत्तये संयोगसंबन्धावच्छिन्नघटाभाव– समवायसंबन्धावच्छिन्नघटाभावयोः भेदो वक्तव्यः । तदर्थं चात्यन्ताभावीयप्रतियोगितायां संबन्धावच्छिन्नत्वम् अङ्गी-क्रियते । ध्वंसप्रागभावयोस्तु तादृशयुक्त्यभावात् तयोः संसर्गावच्छिन्न प्रतियोगिता-कत्वमप्रामाणिकम् इति शङ्का जायेत । अत्र **तर्कसंग्रहे**– त्रैकालिकः संसर्गावच्छिन्नाभावः अत्यन्ताभावः इत्युक्तम् । तत्र **प्रकाशिकायाम्**– ध्वंसप्राग-भावयोरपि प्रतियोगितावच्छेदकसंबन्धो वर्तत इति मताभिप्रायेणेदम् इत्युक्तम् । तद्व्याख्यायां **मदीयबालप्रियायाम्**–

> ''ध्वंसप्रागभावयोः अत्यन्ताभावविरोधितामते श्यामघटे समवायेन रक्तो नास्ति, रक्तघटे समवायेन श्यामो नास्ति इति प्रतीत्योः प्रागभावध्वंसयोरेव विषयतया तयोरपि समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वमस्तीति

तन्मतानुसारेण ध्वंसप्रागभावयोः अतिव्याप्तिवारणाय त्रैकालिकेति विशेषणम्''

इति लिखितम् । तदत्रानुसन्धेयम् ।।

वस्तुतस्तु– प्रकृतव्याप्तिलक्षणे संसर्गाभावत्वं प्रयोजनाभावात् न निवेशनीयम् । अभावत्वेनाभावो निवेशनीय इत्याह– **प्रयोजनविरह इति दीधितौ** । तमुपपादयति गादाधर्यां **साध्यतावच्छेदकसंबन्धेनेत्यादिना** । अस्यानधिकरणत्वेऽन्वयः । अत्यन्तपदानुपादाने वह्निमान् धूमात् इत्यादौ हेत्वधिकरणे पर्वते यः अभावः इत्यनेन वह्निभेदं गृहीत्वा तत्प्रतियोगितावच्छेदकत्वमेव वह्नित्वेऽस्तीत्यव्याप्तिः स्यात् । अत्यन्तपदोपादाने तु वह्निभेदः अत्यन्ताभावरूपत्वाभावान्न ग्रहीतुं शक्यः । घटाद्यभावमादाय समन्वयः कार्य इति वक्तव्यम् । परं तु अत्यन्तपदानुपादानेऽपि **दीधितिकारैः** वक्ष्यमाणरीत्या वह्निभेदमादाय दोषो न भवति । तथा हि– साध्यतावच्छेदकसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति । इदानीं वह्निभेदः ग्रहीतुं न शक्यः । वह्निभेदीया या वह्निनिष्ठा प्रतियोगिता, तदवच्छेदकवह्नित्वावच्छिन्नस्य वह्नेः साध्यतावच्छेदकसंयोगसंबन्धेन अधिकरणमेव हेत्वधिकरणं पर्वत इति तदनधिकरणं न भवतीति यादृशप्रतियोगितापदेन घटादिनिष्ठा प्रतियोगिता ग्राह्या तदवच्छेदकघटत्वाद्यवच्छिन्नघटस्य संयोगेनानधिकरणत्वं पर्वते, तादृशघटत्वावच्छिन्नप्रतियोगितानवच्छेदकत्वं वह्नित्वेऽस्तीति नाव्याप्तिः इति भावः । **अन्योन्याभावत्वनिरूपकप्रतियोगिताम्** – भेदत्वनिरूपकवह्निनिष्ठप्रतियोगिताम् । **दोषाप्रसक्तेरिति** । वह्निमान् धूमात् इत्यादावव्याप्त्यप्रसक्तेरित्यर्थः ।।



**अव्याप्तिश्च** इति **दीधिति**मवतारयति– **प्रतियोगीति** । अव्याप्तिमुपपादयति– **तन्मते** इति । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यनिवेशकल्पे पर्वतो वह्निमान् धूमात् इत्यादौ समवायसंबन्धेन वह्न्यनधिकरणपर्वते वर्तमानस्य समवायसंबन्धावच्छिन्नवह्न्यभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वमिति प्रसक्तायाः अव्याप्तेः वारणाय अग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयम् । तन्निवेशे च समवायसंबन्धावच्छिन्नवह्न्यभावस्य ग्रहणे तदीयप्रतियोगितायां साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नत्वाभावात्, संयोगसंबन्धावच्छिन्नवह्न्यभावस्य च हेत्वधिकरणपर्वताद्यवृत्तितया, संयोगसंबन्धावच्छिन्नघटाद्यभाव एव प्रतियोगितावच्छेदकसंयोगसंबन्धेन घटरूपप्रतियोग्यनधिकरणहेत्वधिकरणपर्वतवृत्तिरभावः तदीयसंयोगसंबन्धावच्छिन्नप्रतियोगितायामवच्छेदकं घटत्वादि, अनवच्छेदकं वह्नित्वमिति नाव्याप्तिः ।।

एवं च तादात्म्यसंबन्धेन साध्यकस्थले संसर्गाभावनिवेशपक्षे हेत्वधिकरणवृत्तिः संसर्गाभावः इत्यनेन तादात्म्यातिरिक्तसंबन्धावच्छिन्नप्रतियोगिताकाभाव एव ग्राह्यः । तथा च तन्निरूपितप्रतियोगितायां साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वं नास्तीत्यव्याप्तिरिति भावः ।।

**दोषवारणायेति** । वह्निमान् धूमात् इत्यादावव्याप्तिवारणायेत्यर्थः । **साध्यतावच्छेदकसंबन्धावच्छिन्नेत्यादि** । तादात्म्यसंबन्धावच्छिन्नायाः संसर्गाभावीयप्रतियोगिताया अप्रसिद्धेरित्यर्थः । **ततश्च** संसर्गाभावः न लक्षणे प्रवेशनीय इति भावः ।।

## दीधितिः

**अथ ज्ञानवान्** द्रव्यत्वात्, **विशेषगुणवान् मनोऽन्य**द्रव्यत्वात्, **जातिमान्** भावत्वात् इत्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः । **साध्यशून्यानामपि** हेतुमतां विषयत्व – विशेषणत्व – एकार्थसमवायैः साध्यवत्त्वादिति चेत्–

## गादाधरी

ननु विषयतायाः वृत्त्यनियामकत्वे प्रतियोगिवैयधिकरण्ये संबन्धित्वनिवेशपक्षे पूर्वस्थलीयातिव्याप्त्यसंगतिरित्यत आह– **विशेषेति** । **दिगुपाधीनां** देशे वृत्तौ अवच्छेदकत्वमेव, न तु अधिकरणत्वम् इति मते मनसो मूर्तत्वेऽपि न दैशिकविशेषणतया अधिकरणत्वमिति द्रव्यत्वमात्रस्य हेतुत्वे मनोरूपहेत्वधिकरण एव साध्याभावः प्रतियोगिव्यधिकरण इति नातिव्याप्तिसंभव इत्यतो **मनोऽन्येति** । ननु दिक्कालौ **नेश्वरादतिरिच्येते** इति सद्धेतुरेवेत्यतो दूषणान्तरमाह– **जातिमानिति** । **साध्यशून्यानामपीति** । साध्यतावच्छेदकसंबन्धे- नेत्यादिः ।।

## व्याख्या

**दीधितौ– अथ ज्ञानवा**नित्यादि । एतावता प्रतियोग्यसमानाधिकरणहेतु- समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्य- सामानाधिकरण्यं व्याप्तिरिति स्थितम् । तत्र प्रतियोग्यसामानाधिकरण्यशरीरे संबन्धविशेषं निवेशयितुं शङ्कते– आत्मा समवायेन ज्ञानवान् द्रव्यत्वात् । साध्याभाववति समवायसंबन्धावच्छिन्न ज्ञाननिष्ठ प्रतियोगिताकाभाववति घटादौ द्रव्यत्वसत्त्वात् अयं हेतुः व्यभिचारी । अत्र हेतोः द्रव्यत्वस्याधिकरणं घटादि, तद्वृत्तिर्योऽत्यन्ताभावः, समवायेन ज्ञानाभावः यद्यपि भवति, तथापि सः प्रतियोगिनो ज्ञानस्य विषयतासंबन्धेन अधिकरणे घटे वर्तमानतया प्रतियोग्यसमानाधिकरणत्वा- भावात् स न ग्रहीतुं शक्यते । अपितु अन्य एव घटाद्यभावः ग्राह्यः तत्प्रतियोगिता- नवच्छेदकत्वस्य साध्यतावच्छेदके ज्ञानत्वे सत्त्वात् अतिव्याप्तिः ।।

यदि तु प्रतियोग्यसामानाधिकरण्यं न प्रतियोगिसंबन्ध्यवृत्तित्वरूपम्, अपि तु प्रतियोग्यधिकरणवृत्तिभिन्नत्वरूपम्, तथा च विषयतायाः वृत्त्यनियामकतया



तेन संबन्धेन अधिकरणाप्रसिद्ध्या विषयतासंबन्धमादाय प्रतियोगिसामानाधिकरण्यं समवायावच्छिन्नज्ञानाभावस्य न वक्तुं शक्यम्, तथापि समवायसंबन्धेन ज्ञानाधि- करणमात्या, तद्वृत्तित्वं समवायसंबन्धावच्छिन्नज्ञानाभावस्य नास्ति, अतोऽयमभावः प्रतियोग्यसमानाधिकरणः हेतुभूतद्रव्यत्वाधिकरणघटवृत्तिश्चेति, तादृशाभावस्य प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं ज्ञानत्वमिति न ''ज्ञानवान् द्रव्यत्वात्'' इत्यत्रातिव्याप्तिरिति यद्युच्यते, तदा अयं पृथिव्यादिः विशेषगुणवान् मनोऽन्यद्रव्यत्वात् इत्यत्रातिव्याप्तिः । तथाहि– समवायेन विशेषगुणरूपसाध्याभाववति दिशि काले च मनोऽन्यद्रव्यत्वसत्त्वात् अयं व्यभिचारी । हेत्वधिकरणे मनोऽन्यद्रव्यत्वाधिकरणे दिशि काले च वर्तते योऽभावः विशेषगुणाभावः स दैशिकविशेषणतासंबन्धेन कालिकसंबन्धेन च क्रमशो वर्तते दिक्कालयोः इति प्रतियोग्यधिकरणदिक्कालवृत्तित्वात् न सः विशेषगुणाभावः प्रतियोग्यसमानाधिकरणः, अपि तु अभावान्तरमिति तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् विशेषगुणवान् द्रव्यत्वात् इत्यत्रातिव्याप्तिः ।।

यदि च दिक्कालौ नेश्वरादतिरिक्तौ इति मते ''विशेषगुणवान् मनोऽन्यद्रव्यत्वात्'' इत्ययं सद्धेतुरेवेत्युच्यते; तदा ''समवायेन जातिमान् भावत्वात्'' इत्यत्राति-व्याप्तिः । तथाहि– समवायेन जात्यभाववति सामान्यादौ भावत्वसत्त्वात् अयं व्यभिचारी । अत्र हेत्वधिकरणे सामान्यादौ वर्तमानस्य समवायसंबन्धावच्छिन्न-जात्यभावस्य एकार्थसमवायसंबन्धेन जातिरूपप्रतियोगिमति जातौ (घटत्ववति पृथिवीत्वे) वर्तमानतया प्रतियोगिसमानाधिकरणः । अतो जात्यभावः न लक्षण-घटकः । अपि तु अभावान्तरं, तत्प्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति अतिव्याप्तिः इति शङ्का **दीधितौ** कृता ।।

तत्समाधानमपि तत्रैवोक्तम्– **मैवमि**त्यादिना । तथा हि– प्रतियोगिता- वच्छेदकसंबन्धेन प्रतियोगिनः यदधिकरणं तद्वृत्तित्वाभाववत्त्वं हेतुसमानाधि-

करणात्यन्ताभावे विशेषणम् । उक्तस्थलेषु त्रिष्वपि समवायसंबन्धावच्छिन्नसाध्याभावस्यैव लक्षणघटकतया समवायसंबन्ध एव प्रतियोगितावच्छेदकसंबन्धः तेन संबन्धेन ज्ञानाद्यधिकरणं न घटादि, अपितु आत्मा तद्वृत्तिः समवायसंबन्धावच्छिन्नज्ञानाद्यभावः इति तत्प्रतियोगितावच्छेदकमेव ज्ञानत्वं विशेषगुणत्वं जातित्वं चेति नातिव्याप्तिरिति भावः ।।

**गादाधर्यां दिगुपाधीनामिति** । मूर्तमात्रं दिगुपाधिः । तथा च मूर्तानां पदार्थानां दिशि वृत्तौ अवच्छेदकत्वमेव न तु अधिकरणत्वम् । मूर्तपदार्थावच्छिन्ने देशे घटादयो वर्तन्ते न तु मूर्ते । एवं च ''विशेषगुणवात् मनोऽन्यद्रव्यत्वात्'' इत्यत्र हेतौ मनोऽन्यत्वरूपविशेषणानुपादाने द्रव्यत्वरूपहेत्वधिकरणे मनसि वर्तमानः यो विशेषगुणाभावः सः प्रतियोगिसमनाधिकरणः । यथा जन्यमात्रं कालोपाधिरिति न्यायेन जन्यपदार्थस्य कालिकविशेषणतया जगदाधारत्वं तथा, मूर्तमात्रं दिगुपाधिरिति न्यायेन मूर्तपदार्थस्य दैशिकविशेषणतया जगदाधारतया मूर्ते मनसि समवायेन विशेषगुणशून्येऽपि दैशिकविशेषणतया विशेषगुणोऽस्तीति तेन संबन्धेन विशेषगुणरूपप्रतियोग्यधिकरणमनोवृत्तित्वात् विशेषगुणाभावस्य स न लक्षणघटकः । अपि तु प्रतियोग्यसमानाधिकरणमभावान्तरमादाय तत्प्रतियोगितानवच्छेदकत्वस्य विशेषणगुणत्वरूपे साध्यतावच्छेदके सत्त्वात् अतिव्याप्तिः संभवतीति मनोऽन्यत्वविशेषणं किमर्थमिति शङ्कायां, मूर्तस्य दिगुपाधेः विशेषगुणावच्छेदकत्वमेव न तदधिकरणत्वम् । तथा च विशेषगुणानधिकरणमनोवृत्तितया विशेषगुणाभावः प्रतियोग्यसमानाधिकरण एव, तत्प्रतियोगितावच्छेदकत्वमेव विशेषगुणत्वे अस्तीति अतिव्याप्तेः अप्रसक्त्या तत्प्रसक्तिसंपादनाय हेतौ मनोऽन्यत्वविशेषणं दत्तम् । तथा च हेत्वधिकरणं न मनः, तस्य मनोन्यत्वरूपविशेषणविरहात् । अपि तु दिक्कालौ, तयोः मनोऽन्यत्वविशिष्ट-



द्रव्यत्वात् । तद्वृत्तिः अत्यन्ताभावः विशेषगुणाभावः दैशिकविशेषणतया कालिकविशेषणतया वा विशेषगुणरूपप्रति-योग्यधिकरणयोः दिक्कालयोः वर्तमानतया प्रतियोगिसमानाधिकरण इति प्रतियोग्यसमानाधिकरणमभावान्तरमादाय अतिव्याप्तिप्रसक्तिरिति भावः ।।

**नेश्वरादतिरिच्येते** इति । तथा च विशेषगुणवान् मनोऽन्यद्रव्यत्वात् इत्यत्र हेत्वधिकरणयोः दिक्कालयोः ईश्वररूपतया ईश्वरे च ज्ञानातिरिक्तविशेषगुणसद्भावात् तयोरपि तत्सद्भावात् मनोऽन्यद्रव्येषु सर्वेष्वपि विशेषगुणोऽस्तीति मनोऽन्यद्रव्यत्वरूपहेतोः सद्धेतुत्वमेवेति तत्र लक्षणसत्त्वं न दोषायेति पर्यालोच्य जातिमान् सत्त्वात् इति स्थलान्तरानुसरणमिति भावः ।।

## दीधितिः

मैवम् । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिनो यदधिकरणं संबन्धि वा तद्वृत्तित्वाभावस्य विवक्षितत्वात् । **भवति च एवम् अन्योन्याभावोऽपि** प्रतियोग्यसमानाधिकरणः ।।

## गादाधरी

**एवम्** – अधिकरणत्वस्थाने संबन्धित्वनिवेशे । **अन्योन्याभावोऽपीति** । **तथा च न तादात्म्यसंबन्धेन साध्यतायामव्याप्तिरिति** भावः ।।

## व्याख्या

**दीधितौ** पूर्वोक्तस्थलत्रये प्रसक्तायाः अतिव्याप्तेर्वारणाय प्रतियोगितावच्छेदकसंबन्धेन यत् अधिकरणं संवन्धि वा तद्वृत्तित्वाभाववान् हेत्वधिकरणवृत्तिश्च यः अत्यन्ताभावः तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पर्यवसन्नम् ।।

पर्वतो वह्निमान् धूमात् इत्यादौ धूमाधिकरणपर्वतवृत्तिः अभावः संयोगसंबन्धावच्छिन्नघटाभावः, सः प्रतियोगितावच्छेदकसंयोगसंबन्धेन घटाधिकरणे भूतले न वर्तते विरोधादिति प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यधिकरणवृत्तित्वाभाववान् तथा हेत्वधिकरणपर्वतवृत्तिश्चेति लक्षणघटकः अभावः, तत्प्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं वह्नित्वमिति लक्षणसमन्वयः ।।

पर्वतो धूमवान् वह्निरित्यत्र हेत्वधिकरणायोगोलकवृत्तिः अभावः संयोगसंबन्धावच्छिन्नधूमाभावः स च प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिनो धूमस्याधिकरणे पर्वते न वर्तत इति प्रतियोग्यधिकरणावृत्तिः, तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं धूमत्वमिति नातिव्याप्तिः ।।

एवं ज्ञानवान् द्रव्यत्वात् इत्यत्र हेत्वधिकरणघटादिवृत्तिः समवायसंबन्धावच्छिन्नज्ञानाभावः, स च प्रतियोगितावच्छेदकसमवायसंबन्धेन ज्ञानस्याधिकरणे आत्मनि न वर्तत इति लक्षणघटकः, तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं ज्ञानत्वमिति नातिव्याप्तिः ।।

एवं विशेषगुणवान् मनोन्यद्रव्यत्वात् इत्यत्र हेत्वधिकरणं मनोऽन्यद्रव्यत्वाधिकरणं दिक्कालश्च तद्वृत्तिः अभावः समवायसंबन्धावच्छिन्नविशेषगुणाभावः, स च प्रतियोगितावच्छेदकसमवायेन विशेषगुणाधिकरणपृथिव्याद्यवृत्तिरिति लक्षणघटकः, तत्प्रतियोगितावच्छेदकमेव विशेषगुणत्वमिति नातिव्याप्तिः ।।

एवं अयं जातिमान् भावत्वात् इत्यत्र हेत्वधिकरणे सामान्यादौ वर्तमानः समवायसंबन्धावच्छिन्नजात्यभावः प्रतियोगितावच्छेदकसमवायसंबन्धेन जातिरूपप्रतियोग्यधिकरणद्रव्याद्यवृत्तिः इति लक्षणघटकः । तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं जातित्वमिति नातिव्याप्तिः इति भावः ।।



अथ प्रतियोग्यधिकरणत्वस्थाने प्रतियोगिसंबन्धीति निवेशस्य प्रयोजनमुक्तं दीधितौ **भवति चैवमिति** । तद्विवृतं **गादाधर्यां – तथा च न तादात्म्यसंबन्धेन साध्यतायामव्याप्तिरिति** । तत् किंचित् स्पष्टीक्रियते । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिनो यत् अधिकरणं तद्वृत्तित्वाभावः यदि प्रतियोग्यसामानाधिकरण्यम्, तदा पर्वतो वह्निमान् धूमात् इत्यत्र तादात्म्यसंबन्धेन वह्निमतः साध्यत्वे अग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वरूपविशेषणसत्त्वेन हेतुसमानाधिकरणाभाव इत्यनेन तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकस्य, घटाद्यन्योन्याभावस्यैवोपादेयतया तस्य च अधिकरणत्वघटितं प्रतियोग्यसामानाधिकरण्यं दुर्घटम् । तादात्म्यस्य वृत्त्यनियमकतया तेन संबन्धेन घटादिरूप प्रतियोग्यधिकरणस्याप्रसिद्धेः तत्र प्रतियोग्यधिकरणावृत्तिहेतुसमानाधिकरणाभावाप्रसिद्ध्या तद्घटितव्याप्त्यभावः स्यात् । तद्वारणाय प्रतियोगिनोऽधिकरणम् इत्यत्र अधिकरणमित्यस्य स्थाने संबन्धि इत्युक्तम् । तथोक्तौ च तादात्म्यसंबन्धेन प्रतियोगिनो घटस्य संबन्धी घट एव प्रसिद्धः तदवृत्तिः साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावः घटान्योन्याभावः इति न प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धिरिति भावः ।।

### दीधितिः

**तद्विशिष्टस्य** हेत्वधिकरणवृत्तित्वं वाच्यम् । **तेन** नाव्याप्यवृत्तिसाध्यकासंग्रहः । **तद्वद्वृत्तिभिन्नत्वं** तु **नार्थः**, **अव्याप्यवृत्ति**साध्यकव्यभिचारिणि **अति**प्रसङ्गात् ।।

### गादाधरी

**तद्विशिष्टस्य** – प्रतियोग्यसामानाधिकरण्यावच्छिन्नस्य । **तेनेति** । कपिसंयोगी एतद्वृक्षत्वात् इत्यादौ कपिसंयोगाभावरूपसाध्याभावस्य गुणादौ

प्रतियोगिसामानाधिकरण्याभाववत्त्वेऽपि हेत्वधिकरणीभूतवृक्षादेः न कपिसंयोग-सामानाधिरण्याभावविशिष्टकपिसंयोगाभाववत्त्वम् । यत्र सामानाधिकरण्यविशिष्टवत्त्वं तत्र तदभावविशिष्टाधिकरणत्वाप्रत्ययात् । अतः साध्याभावो न लक्षणघटकः इति नाव्याप्तिरिति भावः ।।

**हेत्वधिकरणावच्छेदेन** प्रतियोगिसामानाधिकरण्याभावनिवेशनेन अव्याप्ति-वारणस्य सुकरत्वेऽपि मूलोपात्तहेतुसामानाधिकरण्यांशनिवेशवैयर्थ्यभिया न तथा विवक्षितम् ।।

### व्याख्या

**मणौ** ''प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभाव'' इत्यनेन अत्यन्ताभावे प्रतियोग्यसमानाधिकरणत्वं हेतुसमानाधिकरणत्वं च विशेषणम् इति लभ्यते । तत्रायं प्रश्नः उदेति – किं प्रतियोग्यसामानाधिकरण्योपलक्षिते अभावे हेतुसामानाधिकरण्यं हेत्वधिकरणवृत्तित्वं विवक्षितम्, उत प्रतियोग्यसामा-नाधिकरण्यविशिष्टेऽभावे हेतुसामानाधिकरण्यं विवक्षितम् इति । तत्र आद्ये अयं कपिसंयोगी एतद्वृक्षत्वात् इत्यत्र कपिसंयोगाभावे गुणावच्छेदेन प्रतियोग्यसामानाधिकरण्यमस्तीति तदुपलक्षितस्य कपिसंयोगाभावस्य हेत्वधिकरणे वृक्षे मूलावच्छेदेन वर्तमानतया तादृशकपिसंयोगाभावप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगत्वमिति अव्याप्तिः स्यात् ।।

प्रतियोग्यसामानाधिकरण्यविशिष्टस्याभावस्य हेत्वधिकरणवृत्तित्वं विवक्षितमिति द्वितीयपक्षे प्रतियोग्यसामानाधिकरण्यविशिष्टः सन् हेत्वधिकरण-वृत्तिर्योऽभावः तत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । तदा वृक्षे कपिसंयोगस्य तदभावस्य च सत्त्वेन कपिसंयोगसामानाधिकरण्य-विशिष्टस्यैव कपिसंयोगाभावस्य वृक्षे सद्भावेन प्रतियोगिसामानाधिकरण्याभावविशिष्टः



कपिसंयोगाभावः हेत्वधिकरणवृक्षवृत्तिर्न भवति । अपि तु घटाद्यभाव एव तादृशः । तत्प्रतियोगितानवच्छेदकत्वं कपिसंयोगत्वेऽस्तीति नाव्याप्तिः । अयमेव **तद्विशिष्टस्य** इत्यादि**दीधितिग्रन्थस्य** अभिप्रायः । इदं च व्याख्यानं **यज्ञपत्युपाध्यायोक्तं दीधितौ** आदृतम् ।।

ननु हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभाववान् योऽभावः तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं इत्येव विवक्ष्यताम् । कपिसंयोगाभावे गुणावच्छेदेनैव प्रतियोगिभूतकपिसंयोगसामानाधिकरण्याभावोऽस्ति, न तु हेत्वधि-करणवृक्षावच्छेदेनेति कपिसंयोगाभावो न लक्षणघटकः, अपि तु अभावान्तरमेवेति नाव्याप्तिः इत्याशङ्क्य तथानिवेशे मूलस्थं हेतुसामानाधिकरण्यरूपमभावविशेषणं व्यर्थं स्यात् इत्यतः तथा न निवेशितमित्याह– **गादाधर्यां हेत्वधिकरणा-वच्छेदेनेति**।।

### गादाधरी

**सार्वभौमेन आदृतं** प्रतियोग्यसामानाधिकरण्यावच्छेदकीभूतहेत्वधिकरणा-वच्छिन्नहेतुसामानाधिकरण्यस्य चाभावविशेषणत्वमुपेक्ष्य **उपाध्यायमते** प्रतियोग्य-समानाधिकरणत्वरूप विशेषणवैशिष्ट्यावच्छेदेन हेतुसामानाधिकरण्यरुपविशेषणवै-शिष्ट्यनिवेशन एव लाघवमित्यालोच्य तदनुयायिना **दीधितिकारेण** प्रतियोग्य-सामानाधिकरण्यावच्छिन्नहेतुसामानाधिकरण्यं निवेशितम् ।।

### व्याख्या

**सार्वभौमाः**– पूर्वोक्तरीत्या प्रसक्तायाः अव्याप्यवृत्तिसाध्यकस्थले कपिसंयोगी एतद्वृक्षत्वात् इत्यत्र अव्याप्तिं प्रकारान्तरेण वारयन्ति । तथा हि– ''कपिसंयोगाभावे गुणे न कपिसंयोगसामानाधिकरण्यम्'' इति प्रतीत्या गुणावच्छेदेन कपिसंयोगाभावे कपिसंयोगरूपप्रतियोगसामानाधिकरण्याभावः वर्तते । न तु

वृक्षावच्छेदेन । ''कपिसंयोगाभावे वृक्षे न कपिसंयोगसामानाधिकरण्यम्'' इति प्रतीत्यभावात् । एतदनुगुणतया अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिवारणाय ''स्वप्रतियोगिसामानाधिकरण्याभावावच्छेदकं यत् हेत्वधिकरणं तदवच्छिन्नहेतु-सामानाधिकरण्यवान् योऽभावः तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति विवक्षणीयम् । कपिसंयोगाभावनिष्ठस्य प्रतियोगिसामानाधिकरण्याभावस्य अवच्छेदकः गुण एव न तु हेत्वधिकरणवृक्ष इति स्वपदेन कपिसंयोगाभावो न धर्तुं शक्यते । अपि तु घटाद्यभाव एवेति नाव्याप्तिः इत्याहुः ।।

**उपाध्यायास्तु** प्रतियोग्यसमानाधिकरण्यविशिष्टे अभावे हेतुसामानाधिकरण्य-वैशिष्ट्यं निवेश्य उक्ताव्याप्तिवारणं चक्रुः तयोर्मध्ये उपाध्यायमते लाघवमस्तीति पर्यालोच्य उपाध्यायोक्तमेव दीधितिकारेणाश्रितम् इत्याह– **सार्वभौमेनादृत-मिति** । प्रतियोग्यसामानाधिकरण्यस्य अवच्छेदकीभूतं यत् हेत्वधिकरणं तदवच्छिन्नस्य हेतुसामानाधिकरण्यस्य अभावविशेषणत्वम् इत्यर्थः । **उपाध्याय-मते**– प्रतियोग्यसामानाधिकरण्यरूपविशेषणविशिष्टेऽभावे हेतुसामानाधिकरण्यरूप विशेषणवैशिष्ट्यनिवेशे लाघवम् । प्रतियोग्यसामानाधिकरण्यविशिष्टः यः हेत्वधिकरणवृत्तिरभाव इति भावः ।।

## गादाधरी

यथाश्रुतमूललभ्योऽयमेवार्थः । प्रतियोग्यसामानाधिकरण्यहेतुसामानाधि-करण्ययोः उद्देश्यतावच्छेदकविधेयभावस्य विवक्षितत्वात् । उद्देश्यतावच्छेदकविधेय-योरवच्छेद्यावच्छेदकभावस्य च व्युत्पत्तिसिद्धत्वात् ।।

## व्याख्या

''उद्देश्यवचनं पूर्वं विधेयस्य ततः परम्'' इति न्यायात् प्रतियोग्यसामा-नाधिकरण्यविशिष्टमुद्दिश्य हेतुसामानाधिकरण्यं विधीयते । उद्देश्यविधेयभावस्थले



उद्देश्यतावच्छेदकावच्छिन्नत्वं विधेये भासत इति व्युत्पत्तिः । तथा च प्रतियोग्य-सामानाधिकरण्यावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावान् योऽभावः तत्प्रतियोगिता-नवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । प्रतियोगिसामानाधि-करण्यविशिष्टस्यैव कपिसंयोगाभावस्य हेत्वधिकरणवृत्तितया कपिसंयोगाभावनिष्ठा हेत्वधिकरणवृत्तिता प्रतियोगसामानाधिकरण्यावच्छिन्ना न तु प्रतियोग्यसामानाधि-करण्यावच्छिन्नेति तदवच्छिन्नहेतुसामानाधिकरण्यवान् घटाद्यभाव एवेति तत्प्रतियो-गितानवच्छेदकत्वं कपिसंयोगत्वेऽस्तीति नाव्याप्तिरिति भावः ।।

## गादाधरी

**प्रतियोग्यसामानाधिकरण्यस्य** हेतुसामानाधिकरण्यावच्छेदकत्वे प्रति-योग्यसामानधिकरण्यरूपहेतुतावच्छेदकावच्छिन्नसंयोगाभावादेः सत्त्वादिव्याप्यत्व-प्रसङ्गः, सत्त्वादिसामानाधिकरण्यावच्छेदकरूपवत्त्वस्य सत्त्वादिव्याप्तित्वादिति **सार्वभौमोक्त**दूषणम् एतन्मते अनवकाशम् । तादृशव्याप्तावनेन पारिभाषिकस्यैवा-वच्छेदकत्वस्य विवक्षिततत्वात् । तादृशस्य च तथाविधहेतुतावच्छेदकव्यावृत्तत्वात् । **अन्यथा** विषयितासंबन्धेन घटत्वावच्छिन्नस्य ज्ञानत्वादिव्याप्यतायाः दुर्वारत्वात् । तादृशसंबन्धेन ज्ञानत्वादिसामानाधिकरण्ये ज्ञानविषयतारूपे घटत्वादेर-वच्छेदकत्वात् ।।

## व्याख्या

पूर्वं प्रतियोग्यसामानाधिकरण्यावच्छिन्नं यत् हेतु सामानाधिकरण्यं तद्वान् योऽभावः तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामा-नाधिकरण्यं व्याप्तिः इति निष्कर्षः कृतः । एवं सति अयं संयोगी सत्त्वात् इत्यत्रातिव्याप्तिः । संयोगाभाववति गुणादौ सत्तायाः सत्त्वात् अयं व्यभिचारी । अत्र संयोगाभावमादायैव अतिव्याप्तिः वारणीया । उक्तपरिष्कारे तु न सा

वारयितुं शक्यते । संयोगाभावनिष्ठं यत् सत्तारूपहेत्वधिकरणगुणवृत्तित्वं तस्य प्रतियोग्यसामानाधिकरण्यावच्छिन्नत्वं स्वीकृत्य हि संयोगाभावस्य लक्षणघटकत्वं संपादनीयम् । एवं स्वीकारे सति ''गुणः सत्तावान् प्रतियोग्यसमानाधिकरणसंयोगाभावात्'' इत्यत्र हेतोः सद्धेतुत्वापत्तिः । उक्तहेतौ साध्यनिरूपितव्याप्तिसद्भावात् । कथमिति चेत् श्रूयताम् । **मणिकारः** उपरि अनेकाः सिद्धान्तव्याप्तीः प्रदर्शयिष्यति । तत्र साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकवत्त्वम् इति व्याप्तिः अन्यतमा । उक्तानुमाने साध्यसामानाधिकरण्यं सत्तासामानाधिकरण्यरूपम् । हेतुतावच्छेदकं संयोगाभावनिष्ठं प्रतियोग्यसामानाधिकरण्यम् । तच्च पूर्वोक्तरीत्या सत्तासामानाधिकरण्यावच्छेदकं भवति । तद्वत्त्वात् संयोगाभावरूपहेतोः सद्धेतुत्वापत्तिः इति शङ्का । एतादृशदोषशङ्का **सार्वभौमैः** उत्थापिता । तस्याः समाधानमाह– **प्रतियोग्यसामानाधिकरण्यस्येत्यादिना** । अयमाशयः– प्रकृतप्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावघटितव्याप्तौ प्रविष्टं यत् प्रतियोग्यसामानाधिकरण्यस्य हेतुसामानाधिकरण्यावच्छेदकत्वं तत् स्वरूपसंबन्धरूपम् । तदवलम्ब्य संयोगी सत्त्वात् इत्यत्रातिव्याप्तिर्वारिता । साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकवत्त्वरूप वक्ष्यमाणव्याप्तौ प्रविष्टं साध्यसामानाधिकरण्यावच्छेदकत्वं तु पारिभाषिकम् । तच्च स्वविशिष्टाधिकरणावृत्तियावत्साध्यासमानाधिकरणकत्वरूपम् । स्वपदं हेतुतावच्छेदकपरम् । हेतुतावच्छेदकविशिष्टाधिकरणावृत्तयः साध्याधिकरणावृत्तयः सर्वेऽपि यदि स्युः तदा हेतोः व्याप्यत्वम् । पर्वतो वह्निमान् धूमात् इत्यत्र, वह्न्यधिकरणावृत्तयः सर्वेऽपि धूमाधिकरणावृत्तयो भवन्तीति समन्वयः । धूमवान् वह्नेः इत्यत्र तु वह्न्यधिकरणावृत्तेः धूमस्य, धूमाधिकरणवृत्तित्वमस्ति, न तु तदवृत्तित्वमिति नातिव्याप्तिः ।।



प्रकृते गुणः सत्तावान् प्रतियोग्यसमानाधिकरणसंयोगाभावात् इत्यत्र हेतुतावच्छेदकं प्रतियोग्यसमानाधिकरणसंयोगाभावत्वम् । तद्विशिष्टसंयोगाभाववत्सु गुणादिषु प्रकृतसाध्याधिकरणावृत्तित्वं नास्ति । गुणादीनां सत्ताधिकरणद्रव्यवृत्तित्वात् इति तादृशहेतोः व्याप्तिशून्यत्वमिति भावः । साध्यासमानाधिकरणत्वव्यापकं यद्विशिष्टाधिकरणावृत्ति तत्त्वं व्याप्तिः इति पर्यवसितम् ।।

उक्तव्याप्तौ पारिभाषिकावच्छेदकत्वमनिवेश्य स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे दोषमाह– **अन्यथेति** । इदं ज्ञानं विषयितासंबन्धेन घटात् । अत्र ज्ञानत्वं साध्यम् । साध्यवति ज्ञानत्ववति ज्ञाने विषयितासंबन्धेन घटोऽस्ति । तथा ज्ञानत्वशून्यकृतीच्छयोरपि विषयितासंबन्धेन घटे सत्त्वात् अयं हेतुः व्यभिचारी। अत्र साध्याधिकरणनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वं ज्ञानत्वाधिकरणज्ञाननिरूपितविषयितासंबन्धावच्छिन्नवृत्तित्वं ज्ञानविषयत्वरूपम् तदवच्छेदकं घटत्वम् । अयं घटः इत्याकारकज्ञानविषयतायां घटत्वस्यावच्छेदकत्वात् । तथाच साध्यसामानाधिकरण्यावच्छेदकघटत्वरूपहेतुतावच्छेदकवत्त्वस्य घटे सत्त्वात् घटस्य ज्ञानत्वव्याप्यतापत्तिः । पारिभाषिकावच्छेदकत्वनिवेशे तु विषयितासंबन्धेन घटत्वविशिष्टाधिकरणे घट ज्ञाने ज्ञानत्वासमानाधिकरणस्य घटस्य वृत्तित्वमेवास्तीति न दोष इति भावः ।।

## गादाधरी

ननु अव्याप्यवृत्तिसाध्यकेऽव्याप्तिवारणाय प्रतियोगिसमानाधिकरणभिन्नत्वरूपप्रतियोग्यसमानाधिकरणत्वमेव निवेश्यताम्, किमुक्तविवक्षया । गुणादौ प्रतियोगिसामानाधिकरण्याभाववतोऽपि कपिसंयोगाभावादेः प्रतियोगिसमानाधिकरणभिन्नत्वविरहात्, भेदस्याव्याप्यवृत्तित्वानुपगमात् इत्यत आह– **तद्वद्वृत्तीति** । प्रतियोगिमद्वृत्तीत्यर्थः । **नार्थः** – न प्रतियोग्यसमानाधिकरणपदेन विवक्षितः ।

**अव्याप्यवृत्तीति** । संयोगी सत्त्वात् इत्यादावित्यर्थः । **अतिप्रसङ्गादिति** । संयोगरूपसाध्याभावस्य द्रव्यादौ प्रतियोगिसमानाधिकरणतया तद्भिन्नत्वविरहेण लक्षणाघटकत्वादिति भावः ।।

### व्याख्या

प्रतियोग्यसमानाधिकरणेत्यस्य प्रतियोगिसमानाधिकरण्याभाववान् इति यद्यर्थः, तदा सामानाधिकरण्यस्याव्याप्यवृत्तितया पुनरपि अव्याप्यवृत्तिसाध्यकसद्धेतौ कपिसंयोगी एतद्वृक्षत्वात् इत्यादावव्याप्तिः प्रसक्ता । तद्वारणाय प्रतियोग्य-सामानाधिकरण्यावच्छिन्नत्वं हेतुसामानाधिकरण्ये निवेशनीयमासीत् । किमियता श्रमेण । प्रतियोग्यसमानाधिकरणेत्यस्य प्रतियोगिसमानाधिकरणभिन्न इत्यर्थः स्वीकृतश्चेत् भेदस्य व्याप्यवृत्तितया, कपिसंयोगाभावे प्रतियोगिकपिसंयोगसमानाधि-करणे प्रतियोगिसमानाधिकरणभेदविरहात् लक्षणाघटकतया अभावान्तरमादाय लक्षणसमन्वयेन अव्याप्तिविरहात् इत्याशङ्कायामाह– **दीधितौ तद्वद्वृत्तिभिन्नत्व-मिति** । प्रतियोग्यसमानाधिकरणेत्यस्य प्रतियोगिसमानाधिकरणभिन्न इति नार्थः । तथा सति अयं संयोगी सत्त्वात् इत्यत्रातिव्याप्त्यापत्तेः । संयोगाभाववति गुणादौ सत्तायाः सत्त्वेनायं हेतुः व्यभिचारी । अत्र हि संयोगाभावमादायैवाति-व्याप्तिर्वारणीया । संयोगाभावस्तु द्रव्ये प्रतियोगिसमानाधिकरणः, न तद्भिन्न इति तस्य लक्षणाघटकतया अभावान्तरमादायातिव्याप्तिः स्यात् इति भावः ।।

### दीधितिः

**अत्र** च सामानाधिकरण्यवतो न तदभाववत्त्वम्, **प्रतीतेः अन्यथैवोप**-पादितत्वात् **इत्यस्वरसात्** प्रतियोगिवैयधिकरण्येत्यादि विशेषणं वक्ष्यति । **तच्च हेत्वधिकरणे** बोध्यम् । **प्रतियोग्यनधिकरणीभूत**हेत्वधिकरणवृत्त्यभावेति पुनर-भावान्तार्थनिष्कर्षः ।।



### गादाधरी

**अत्र च** सामानाधिकरण्यस्याव्याप्यवृत्तितायाः **प्राक्स्वयं दूषितत्वात्** प्रतियोगिसामानाधिकरण्याभावनिवेशपक्षेऽपि **अतिव्याप्तिवारणमशक्यम्** इत्येतादृशानुपपत्तिमेव **''यद्वा''** इत्यादिकल्पान्तरानुसरणबीजतया व्याचष्टे– **अत्र चेति** । असामानाधिकरण्यनिवेशकल्पे इत्यर्थः । **इत्यस्वरसात्** इत्यनेनान्वयः । **प्रतीतेः** ''संयोगाभावे गुणे न प्रतियोगिसामानाधिकरण्यम्'' इति प्रतीतेः, **अन्यथा** = गुणादिनिष्ठसामानाधिकरण्यावच्छेदकत्वाद्यभावविषयकतया ।।

**ननु** कपिसंयोगी एतत्त्वात् इत्यादावपि कपिसंयोगाभावादिरूपसाध्याभावस्य **प्रतियोगिवैयधिकरण्यावच्छेद**कगुणादिवृत्तित्वावच्छिन्नतया लक्षणघटकतैवेत्य-व्याप्तिः, अत आह– **तच्चेति** । प्रतियोगिवैयधिकरण्यं चेत्यर्थः । **हेत्वधिकरणे**– हेत्वधिकरणनिरूपितम् । **एतत्कल्पे** च पृथक् हेतुसामानाधिकरण्यं न निवेश्यमेवेति भावः ।।

एवं च हेत्वधिकरणनिरूपितप्रतियोग्यनधिकरणवृत्तित्वमेव अभावे विशेषणं देयम्; न तु तदवच्छेदकावच्छिन्नत्वम्, अनतिप्रयोजनकत्वात् । **वृत्तौ** प्रतियोग्यनधिकरणनिरूपितत्वहेत्वधिकरणनिरूपितत्वयोः निवेशापेक्षया तत्र हेत्वधिकरणनिरूपितत्वस्य हेत्वधिकरणे च प्रतियोग्यनधिकरणत्वस्य निवेशे लाघवम् इत्यालोच्य तथैव निष्कर्षयति– **प्रतियोग्यनधिकरणीभूतेति** । प्रतियोगिता-वच्छेदकावच्छिन्नानधिकरणेत्यर्थः । **तेन न दर्शितातिव्याप्तिः** ।।

### व्याख्या

**अत्र च** इत्यादिदीधितिग्रन्थमवतारयति– **अत्र चेति** । **प्राक्स्वयं दूषितत्वादिति** । सामानाधिकरण्यस्य अव्याप्यवृत्तित्वं अस्मिन् ग्रन्थे प्राक् कुत्र दूषितमिति न ज्ञायते । मम तु प्रतिभाति– **पञ्चलक्षण्यां** सार्वभौमलक्षणदूषणा-

वसरे दूषितं तदिति, तथा हि– ''सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यम्'' इति प्रतीतिर्हि ''द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यम्'' इति प्रतीतिवत् सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परंपरासंबन्धेन सामानाधिकरण्यस्य वा अभावं गुणे अवगाहते, न तु सत्तायामेव द्रव्यवृत्तित्वाभावम्'' इति ग्रन्थेन दूषितमिति । अस्त्वेतत् ।।

**अतिव्याप्तिवारणमशक्यमिति** । संयोगी सत्त्वात् इत्यादौ हेतुभूतसत्ताधिकरणगुणवृत्तिसंयोगाभावस्य द्रव्ये संयोगरूपप्रतियोगिसमानाधिकरणतया गुणादावपि न प्रतियोगिसमानाधिकरण्याभाववत्त्वम्, सामानाधिकरण्यस्य व्याप्यवृत्तित्वात् इति अभावान्तरमादायातिव्याप्तिरित्यर्थः । अनेनैव अस्वारस्येन **मणिकृता यद्वेति** कल्पान्तरमनुसृतमिति **दीधितेः** तात्पर्यं विवृणोति– **यद्वेति** । परैः सामानाधिकरण्याव्याप्यवृत्तित्वसाधकतया ''संयोगाभावे गुणे न संयोगसामानाधिकरण्यम्'' इति प्रतीतिः प्रदर्श्यते । अनया हि प्रतीत्या स्वरसतः गुणाधिकरणकः संयोगसामानाधिकरण्याभावः विषयीक्रियते इति तेषामाशयः । **दीधितिकृतां** तु अनन्यथासिद्ध-प्रतीतेरेव विषयसाधकता । अस्यास्तु प्रतीतेः गुणनिष्ठो यः संयोगसामानाधिकरण्यावच्छेदकत्वाभावः तद्विषयकतया उपपत्तेः न सामानाधिकरण्याभावसाधकता । किमत्र विनिगमकमिति चेत्– ''द्रव्ये संयोगाभावे संयोगसामानाधिकरण्यम्'' इति प्रतीतौ संयोगाभावनिष्ठं यत् संयोगसामानाधिकरण्यं तदवच्छेदकत्वं द्रव्ये भासते इति वक्तव्यतया नञा क्लृप्ततादृशावच्छेदकत्वाभाव एव बोध्यत इति स्वीकारे लाघवात् इति भावः ।।

प्रतियोगिवैयधिकरण्यावच्छिन्नहेत्वधिकरणवृत्तित्वाश्रयेत्यादिमूलस्य प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तीति व्याख्याने बीजमाह– **नन्विति** । **प्रतियोगिवैयधिकरण्यावच्छेदकेति** । कपिसंयोगरूपसाध्याभावस्य गुणावच्छेदेन



प्रतियोगिव्यधिकरणत्वात् प्रतियोगिवैयधिकरण्यावच्छेदको गुणः तद्वृत्तित्वविशिष्टतयेत्यर्थः । तथा च गुणे विद्यमानः तादृशाभाव एव वृक्षेऽपि वर्तत इति अव्याप्तिः प्रसक्ता तद्वारणाय निष्कर्षमाहेत्यर्थः । प्रतियोगिवैयधिकरण्यावच्छेदकेत्यादि**मणिग्रन्थस्य** तात्पर्यार्थः प्रथमतः ''तच्च हेत्वधिकरणे बोध्यम्'' इत्यनेन दर्शितः । तेन हेत्वधिकरणनिरूपितप्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं अभावविशेषणमिति लभ्यते । तथा निवेशे अधिकप्रयोजनाभावात् हेत्वधिकरणनिरूपितं प्रतियोग्यनधिकरणवृत्तित्वमेव निवेश्यमित्याह– **एतत्कल्पे** इति । इतोऽपि लघुभूतं निष्कर्षयति इत्याह– **वृत्ताविति** । अभावनिष्ठाधेयतायामित्यर्थः । प्रतियोग्यनधिकरणनिरूपितत्वहेत्वधिकरणनिरूपितत्वापेक्षया अभावनिष्ठवृत्तौ हेत्वधिकरणनिरूपितत्वस्य हेत्वधिकरणे प्रतियोग्यनधिकरणत्वस्य निवेशे निरूपितत्वद्वयाप्रवेशेन लाघवात् इत्यर्थः । **तेन न दर्शितातिव्याप्तिरिति** । अयं गुणकर्मान्यत्वे सति सत्तावान् जातेः इत्यत्र प्रदर्शिता अतिव्याप्तिः न प्रसजतीति भावः ।।

तथा च स्वप्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति निष्कर्षः संपन्नः ।।

पर्वतो वह्निमान् धूमात् इत्यादौ हेत्वधिकरणपर्वतवृत्तिरभावः घटाद्यभावः स स्वप्रतियोगिघटाद्यनधिकरणीभूतहेतुधूमाधिकरणपर्वतवृत्तिः तत्प्रतियोगितावच्छेदकं घटत्वादि । तदनवच्छेदकं साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नवह्न्यधिकरणवृत्तित्वं धूमेऽस्तीति लक्षणसमन्वयः ।।

पर्वतो धूमवान् वह्नेरित्यादौ व्यभिचारिणि हेत्वधिकरणायोगोलकवृत्तिः धूमाभावः स्वप्रतियोगिधूमानधिकरणवह्न्यधिकरणायोगोलकवृत्तिः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं धूमत्वमिति नातिव्याप्तिः ।।

घटः गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र गुणकर्मान्यत्वविशिष्टसत्ताभावः जातिरूपहेतोरधिकरणे वृत्तिः तत्प्रतियोगितावच्छेदकं गुणकर्मान्यत्वविशिष्टसत्तात्वं तदवच्छिन्नानधिकरणं यत् जातिरूपहेत्वधिकरणं गुणः कर्म च तद्वृत्तितया लक्षणघटकः तत्प्रतियोगितावच्छेदकं साध्यतावच्छेदकं गुणकर्मान्यविशिष्टसत्तात्वं, न तु तदनवच्छेदकम् इति नातिव्याप्तिः ॥

## दीधितिः

**ननु** प्रतियोगितावच्छेदकावच्छिन्नस्य **यस्य कस्यचित् तत्सामान्यस्य प्रतियोगितावच्छेद**कयत्किंचिदवच्छिन्नस्य वा **अनधिकरणत्वम्** उक्तम् । **आद्ये** अव्याप्यवृत्तिसाध्यकेऽव्याप्तिः । एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात् । **द्वितीये** संयोगसामान्याभाववान् **द्रव्यत्वाभाववान् वा** सत्त्वात् इत्यादावतिव्याप्तिः । साध्याभाववतो द्रव्यस्य **तत्प्रतियोगि**संयोगविशेषाभाववत्त्वात् । **नित्यत्वादि**विशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनोऽधिकरणत्वाच्च । **स्वाभावात्मकस्य** विशिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात् । **तृतीये** कपिसंयोगाभाववान् आत्मत्वात् इत्यादौ अव्याप्तिः । साध्याभावानां कपिसंयोगानां गुणानां अधिकरणस्यात्मनः तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात् ॥

## गादाधरी

**यस्य कस्यचित्** इत्यादिषष्ठ्यन्तानां **अनधिकरणत्वम्** इत्यनेनान्वयः । **प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् अनधिकरणत्वम्** – **स्वप्रतियोगितावच्छेदका**वच्छिन्नाधिकरणप्रतियोगिकभेदमात्रम् । **तत्सामान्यस्यानधिकरणत्वम्** – स्वप्रतियोगितावच्छेदकत्वेनानुगतीकृत प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्नभेदः । **प्रतियोगितावच्छेदकयत्किंचिदिति** ।



प्रतियोगितावच्छेदकं तत्तद्व्यक्तित्वेन निवेश्य तदवच्छिन्नाधिकरणत्वावच्छिन्नभेदो वा विवक्षित इत्यर्थः । **नव्यमते** संयोगसामान्याभावस्य केवलान्वयितया तत्र साध्ये सत्तादिः सद्धेतुरेवेत्यतो **द्व्यत्वाभाववान्वेति** । **तत्प्रतियोगीति** । संयोगरूपसाध्याभावप्रतियोगीत्यर्थः । तत्तत्संयोगत्वावच्छिन्नाभावाभावस्य तत्तत्संयोगादेः संयोगसामान्यानतिरिक्तत्वादिति भावः । द्रव्यत्वरूपाभावस्य एकव्यक्तिकतया व्यक्तिविशेषाभावरूपप्रतियोगिसामानाधिकरण्यं न घटत इत्यतस्तस्य **किंचिद्विशिष्ट**स्वाभावरूपप्रतियोगिसामानाधिकरण्यमाह– **नित्यत्वादीति** । आदिना जन्यत्वादिपरिग्रहः । ननु विशिष्टाभावो विशिष्टस्यैव द्रव्यत्वस्य प्रतियोगि, न तु शुद्धस्य तस्येति कथं शुद्धद्रव्यत्वस्य प्रतियोगिवैयधिकरण्यानुपपत्तिरित्यत आह– **स्वभावेति** ॥

## व्याख्या

प्रतियोग्यनधिकरणेत्यस्य स्वयंनिष्कर्षं वक्ष्यन् बहुधा अर्थं विकल्प्य दूषयति– **दीधितौ नन्विति** । स्वप्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् इत्युक्तेः विवक्षितमर्थमाह– **गादाधर्यां स्वप्रतियोगितावच्छेदकेति** । **मात्र**शब्देन तादृशाधिकरणत्वावच्छिन्न प्रतियोगिताकभेदव्यवच्छेदः । तत्सामान्येत्यस्यार्थमाह– **स्वप्रतियोगितावच्छेदकत्वेनेति** । प्रतियोगितावच्छेदकनानाधर्माणां स्वप्रतियोगितावच्छेदकत्वेनानुगम इत्यर्थः । तथा च स्वप्रतियोगितावच्छेदकत्वावच्छिन्नस्वप्रतियोगितावच्छेदकधर्मनिष्ठावच्छेदकताकप्रतियोगिताकभेद इत्यर्थः पर्यवसितः । **प्रतियोगितावच्छेदकयत्किंचिदिति** । पूर्वं प्रतियोगितावच्छेदकत्वेनानुगतरूपेण निवेशः । इदानीं तु तस्य तत्तद्व्यक्तित्वेन निवेश इत्यर्थः ॥

अत्र प्रथमकल्पे– स्वप्रतियोगितावच्छेदकावच्छिन्नयत्किंचिदधिकरणप्रतियोगिकभेदवद्धेत्वधिकरणनिष्ठाभाव प्रतियोगितानवच्छेदकसाध्यतावच्छेदका-

वच्छिन्नसामानाधिकरण्यं व्याप्तिः । तस्याः दूषणं अव्याप्यवृत्तिसाध्यके ''अयं कपिसंयोगी एतद्वृक्षत्वात्'' इत्यत्राव्याप्तिः । कपिसंयोगाभावस्य प्रतियोगितावच्छेदकं कपिसंयोगत्वं तदवच्छिन्नः वृक्षवृत्तिकपिसंयोगः वृक्षावृत्तिगोपुरादिवृत्तिसंयोगश्च तत्र यत्किंचित्पदेन गोपुरवृत्तिकपिसंयोगं गृहीत्वा तदधिकरणगोपुरवृतिसंयोग-प्रतियोगिकभेदवान् वृक्षः तद्वृत्तिः मूलावच्छेदेन कपिसंयोगाभावः तत्प्रतियोगिता-वच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगत्वमित्यव्याप्तिः । सामान्येत्युक्तौ वृक्षवृत्तिकपिसंयोगोऽपि सामान्यान्तर्गतः । तदनधिकरणत्वं हेत्वधिकरणे नास्तीति कपिसंयोगाभावो न ग्राह्यः । अपि तु घटाद्यभाव एवेति नाव्याप्तिः ।।

सामान्यभेदघटितद्वितीयकल्पे तु– संयोगसामान्याभाववान् सत्त्वात् इत्यत्रातिव्याप्तिः । तथाहि– संयोगसामान्याभावाभाववति द्रव्ये सत्तायाः सद्भावात् अयं हेतुः व्यभिचारी । अत्र साध्याभावं संयोगसामान्याभावाभावं गृहीत्वा अतिव्याप्तिर्वारणीया । परं तु हेत्वधिकरणभूतं द्रव्यं प्रत्येकं तत्तत्संयोगाभावरूप-प्रतियोग्यधिकरणं भवति न तदनधिकरणमिति संयोगात्मकः साध्याभावो न लक्षणघटकः । अपि तु अभावान्तरमेव । तत्प्रतियोगितानवच्छेदकत्वं संयोगाभावत्व-रूपे साध्यतावच्छेदकेऽस्तीत्यतिव्याप्तिरिति भावः । उक्तस्थले साध्याभावः संयोगा-भावाभावः सकलसंयोगरूपः । तत्र तत्तत्संयोगोऽप्यन्तर्गतः । तत्तत्संयोगाभावोऽपि संयोगात्मकसाध्याभावस्य प्रतियोगी । हेत्वधिकरणस्य द्रव्यस्य संयोगात्मकाभावीय-तत्तत्संयोगाभावरूप प्रतियोग्यधिकरणत्वात् प्रतियोग्यनधिकरणहेत्वधिकरण वृत्तित्वं संयोगात्मकस्य साध्याभावस्य नास्तीति अभावान्तरमादाय अतिव्याप्ति-रित्याशयः ।।

स्थलान्तरानुधावने बीजमाह– **नव्यमत** इति । तन्मते संयोगसामान्या-भावस्य केवलान्वयितया तत्र लक्षणसत्त्वं न दोषावहमित्यतः द्रव्यत्वाभाववान् सत्त्वात् इति स्थलानुधावनम् । ''द्रव्यत्वाभाववान् सत्त्वात्'' इति । साध्याभाववति द्रव्यत्वाभावाभाववति – द्रव्यत्ववति द्रव्ये सत्तायाः सद्भावात् अयं हेतुः व्यभि-चारी । प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य हेत्वधिकरणे निवेशे उक्तस्थले द्रव्यत्वाभावाभावरूपस्य साध्याभावस्य द्रव्यत्वस्वरूपतया पूर्ववत् व्यक्तिविशेषाभावमादाय दोषो न संभवतीत्यतः प्रकारान्तरेण दोषमाह **दीधितौ** इत्याह– **किंचिद्विशिष्टेति** । नित्यत्वविशिष्टेत्यर्थः । तथा च द्रव्यत्वाभाववान् सत्त्वात् इत्यत्र सत्तारूपहेत्वधिकरणद्रव्यवृत्तिः अभावः साध्याभावः नित्यत्वविशिष्ट-द्रव्यत्वाभावाभावः तत्प्रतियोगितावच्छेदकं नित्यत्वविशिष्टद्रव्यत्वाभावत्वं तद-वच्छिन्नाधिकरणत्वं जन्यद्रव्ये वर्तते । जन्यद्रव्ये द्रव्यत्वसत्त्वेऽपि नित्यत्वरूप-विशेषणाभावात् । तथा च द्रव्यत्वाभावाभावः स्वप्रतियोगितावच्छेदकयात्किंचिद्धर्मा-वच्छिन्नाधिकरणहेत्वधिकरण वृत्तिः, न तु यत्किंचिद्धर्मावच्छिन्नानधिकरणहेत्वधि-करणवृत्तिः इति न लक्षणघटकः । अतोऽभावान्तरमादायातिव्याप्तिरिति भावः ।।

ननु नित्यत्वविशिष्टद्रव्यत्वाभावः नित्यत्वविशिष्टद्रव्यत्वाभावाभावस्य नित्यत्वविशिष्टद्रव्यत्वरूपस्य प्रतियोगी भवेत् । कथं शुद्धद्रव्यत्वरूपस्य साध्याभावस्य द्रव्यत्वाभावाभावस्य प्रतियोगी भवेत् इत्याशङ्कायामाह– **दीधितौ स्वाभावात्मकस्येति** । स्वाभावात्मकस्य नित्यत्वविशिष्टद्रव्यत्वाभावाभावात्मकस्य नित्यत्वविशिष्टद्रव्यत्वस्य शुद्धद्रव्यत्वाभिन्नत्वात् । विशिष्टं शुद्धान्नातिरिच्यत इति न्यायात् इति भावः । **शुद्धद्रव्यत्वस्य** द्रव्यत्वाभावाभावस्य शुद्धद्रव्यत्व-रूपस्य साध्याभावस्येत्यर्थः ।।

### गादाधरी

**न च सर्वस्यैव** अभावस्य पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूप प्रतियोगि-समानाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या नातिव्याप्तिसंभव इति

वाच्यम् । **प्रतियोगितावच्छेदकसंबन्धेन** प्रतियोगिवैयधिकरण्यनिवेशपक्षे उक्तक्रमेणासंभवस्य, साध्यतावच्छेदकसंबन्धेन तद्वैयधिकरण्यनिवेशपक्षे स्वरूपसंबन्धावच्छिन्नसाध्यकस्थले साध्यतावच्छेदकसंबन्धेन सर्वेषामेवाभावानां प्रतियोगिसमानाधिकरणत्वेनाव्याप्तेः प्रसक्त्या, यत्संबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तत्संबन्धावच्छिन्नतदभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभाव एव विवक्षणीयः । एवं चोक्तस्थले स्वरूपसंबन्धेन प्रतियोग्यनधिकरणत्वाप्रसिद्धावपि संयोगादिसंबन्धेन घटाद्यभावीय प्रतियोग्यनधिकरणीभूतहेतुमन्निष्ठघटाद्यभावीय प्रतियोगितासु स्वरूपसंबन्धावच्छिन्नत्वद्रव्यत्वाद्यभावत्वाद्यवच्छिन्नत्वोभयाभावस्याक्षतत्वादतिव्याप्तिरित्यभिप्रायः ।।

## व्याख्या

**न च सर्वस्यैवेति** । सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावः प्रतियोगी । यथा इदानीं घटाभावस्य सत्त्वेऽपि पूर्वक्षणवृत्तित्वविशिष्ट घटाभावो नास्ति । पूर्वक्षण वृत्तित्वविशिष्टघटाभावाभावश्च तृतीयाभावस्य – पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावस्य प्रतियोगी । तृतीयाभावश्च प्रथमाभावरूपः पूर्वक्षणवृत्तित्वविशिष्टाभावरूपः । स च विशिष्टं शुद्धात् नातिरिच्यते इति न्यायेन शुद्धघटाभावरूपः । एवं च पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावः घटाभावस्य प्रतियोगीति सिद्धम् । प्रकृते वह्निमान् धूमात् इत्यादौ हेतुसमानाधिकरणो योऽभावः घटाभावः तस्य यः प्रतियोगी पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावः तदधिकरणं हेत्वधिकरणं पर्वतः । पर्वते घटाभावसत्त्वेऽपि पूर्वक्षणवृत्तित्वविशिष्टो घटाभावः इदानीं नास्तीति । प्रतियोग्यधिकरणहेत्वधिकरणवृत्तिरिति तादृशाभावाप्रसिद्ध्या प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या असंभवः स्यात् । तथा व्यभिचारिण्यपि तादृशाभावाप्रसिद्ध्यैव अतिव्याप्तिवारणं स्यात् इति **न च** इत्यादिना शङ्का ।।



तत्र समाधानमाह– **प्रतियोगितावच्छेदकसंबन्धेनेति** । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वनिवेशे पर्वतो वह्निमान् धूमात् इत्यादावपि पूर्वक्षणवृत्तित्व विशिष्टस्वाभावरूप प्रतियोगिनमादाय तन्निष्ठप्रतियोगितावच्छेदकस्वरूपसंबन्धेन तद्रूपप्रतियोग्यधिकरणहेत्वधिकरणवृत्तितया घटाद्यभावस्य, तदनधिकरणहेत्वधिकरणवृत्त्यभावाप्रसिद्ध्या असंभवः स्यात् । तत्परिहाराय साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वनिवेशे च संयोगसंबन्धेन पूर्वक्षणवृत्तित्वविशिष्टस्वाभावानधिकरणवृत्तितया घटाद्यभावस्य प्रसिद्धिः संपादनीया भवति । परं त्वेवं निवेशेऽपि अभावसाध्यकसद्धेतौ घटत्वाभाववान् पटत्वादित्यादौ– साध्यतावच्छेदकस्वरूपसंबन्धेन पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूप प्रतियोग्यधिकरणवृत्तितया हेत्वधिकरणवृत्त्यभावस्य घटत्वाद्यभावस्य, तादृशप्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिः प्रसजति । तद्वारणाय येन संबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तत्संबन्धावच्छिन्नतदभावीय प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्व - साध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभावः इति विवक्षणीयम् । एवं च घटत्वाभाववान् पटत्वात् इत्यत्र स्वरूपसंबन्धेन प्रतियोग्यनधिकरणाप्रसिद्धावपि हेतुसमानाधिकरणं संयोगसंबन्धावच्छिन्नघटाद्यभावमादाय लक्षणसमन्वयः । तथा हि– निरुक्तयत्संबन्धेत्यनेन संयोगसंबन्धोपादाने तेन संबन्धेन स्वप्रतियोगितावच्छेदकघटत्वावच्छिन्नानधिकरणत्वं हेतुमतः पर्वतादेर्वर्तत इति तादृशघटत्वावच्छिन्नाभावीयप्रतियोगितायां साध्यतावच्छेदक वह्नित्वाद्यवच्छिन्नत्वाभावप्रयुक्तः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभावो वर्तत इति लक्षणसमन्वयः । एवमेव

द्रव्यत्वाभाववान् सत्त्वात् इत्यत्रापि पूर्वोक्तघटाद्यभावीयप्रतियोगिनो घटस्य संयोगेनानधिकरणहेत्वधिकरणवृत्ति घटाद्यभावीयप्रतियोगितायां साध्यतावच्छेदकी-भूतस्वरूपसंबन्धावच्छिन्नत्वद्रव्यत्वाभावत्वावच्छिन्नत्वोभयाभावस्य सत्त्वात् अतिव्याप्तिरिति **दीधितिकृताम्** अभिप्रायः ।।

## गादाधरी

**केचित्तु–** स्वप्रतियोगिसामान्यानधिकरणहेत्वधिकरणकत्वेन गगनाभाव एव तादृशप्रतियोगिव्यधिकरणः ।।

**न च** स्वप्रतियोगिसामान्यान्तर्गतनित्यत्वादिविशिष्टगगनाभावाभावरूप-प्रतियोग्यधिकरणहेत्वधिकरणकत्वेन तस्य न तथात्वसंभव इति वाच्यम् ।।

**नित्य एव** नित्यत्वविशिष्टगगाभावाभावो नास्तीति प्रत्ययात् तत्प्रत्ययस्य च नित्यत्वे नित्यत्वविशिष्टगगनाभावाभावाभावत्वकल्पनेनैवोपपत्तेः गगनाभावे तदकल्पनात् नित्यत्वविशिष्टगगनाभावाभावस्य गगनाभावाप्रतियोगित्वात् इत्याहुः ।।

## व्याख्या

गुणः द्रव्यत्वाभाववान् सत्त्वात् इत्यत्र हेतुसमानाधिकरणः सत्ताधिकरणवृत्तिः (द्रव्यवृत्तिः) अभावः इत्यनेन द्रव्यत्वाभावरूपस्य साध्यस्य योऽभावः द्रव्यत्वा-भावाभावः द्रव्यत्वरूपः तमादायैव अतिव्याप्तिर्वारणीया । परं तु द्रव्यत्वाभावाभावस्य नित्यत्वविशिष्टद्रव्यत्वाभावत्वमपि प्रतियोगितावच्छेदकं तदवच्छिन्नानधिकरणत्वं जन्यद्रव्ये वर्तते, नित्यत्वरूपविशेषणाभावात् इति नायं प्रतियोगितावच्छेदका-वच्छिन्नसामान्यानधिकरणवृत्तिः इति लक्षणघटकः । अतोऽभावान्तरमादायाति-व्याप्तिरिति कथितं पूर्वम् । अथ उक्तस्थले प्रकारान्तरेणातिव्याप्तिं संगमयतां मतमनुवदति– **केचित्तु** इति ।।



अयमाशयः– द्रव्यत्वाभाववान् सत्त्वात् इत्यत्र स्वप्रतियोगिव्यधिकरणः हेतुसमानाधिकरणः गगनाभावः । तस्य प्रतियोगी गगनं गगनाभावाभावो वा तदनधिकरणत्वं व्यभिचारनिरूपकस्य हेत्वधिकरणस्य द्रव्यस्य वर्तते । गगनाभावस्य केवलान्वयितया गगनस्य अवृत्तिपदार्थतया च गगनाभावाभावस्य गगनस्य च द्रव्यं नाधिकरणम् । ततश्च स्वप्रतियोग्यनधिकरण हेत्वधिकरणवृत्तिः गगनाभावः तत्प्रतियोगितावच्छेदकं गगनत्वं, तदनवच्छेदकं द्रव्यत्वाभावत्वरूपं साध्यतावच्छेदकं भवतीति अतिव्याप्तिः संगच्छत एवेति भावः ।।

अत्रापि पुनः अप्रसिद्धिं शङ्कते– **न चेति** । गगनाभावस्य हि गगनवत् नित्यत्वविशिष्टगगनाभावाभावोऽपि प्रतियोगी । तथाहि– नित्यत्व-विशिष्टगगनाभावाभावाभावः, तृतीयाभावरूपः । अस्य प्रतियोगी नित्यत्वविशिष्ट-गगनाभावाभावः द्वितीयाभावरूपः । पूर्वोक्ततृतीयाभावस्तु प्रथमाभावरूपः – नित्यत्वविशिष्टगगनाभावरूपः । अयं चाभावः विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन गगनाभावरूपः । ततश्च द्वितीयाभावरूपः – नित्यत्वविशिष्टः यो गगनाभावः तदभावः सः तृतीयाभावस्य प्रतियोगी चेत् तदभिन्नस्य प्रथमाभावस्य नित्यत्वविशिष्टगगनाभावस्य प्रतियोगी भवन् विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन शुद्धगगनाभावस्यापि प्रतियोगी । एवं च लक्षणघटकस्य गगनाभावस्य प्रतियोगिसामान्यान्तर्गतः नित्यत्वविशिष्टगगनाभावाभावः । तदधिकरणं जन्यद्रव्यं भवति । जन्यद्रव्ये गगनाभावस्य सत्त्वेऽपि नित्यत्वासात्त्वात् नित्यत्व-विशिष्टो गगनाभावो नास्तीति । ततश्च प्रतियोगिसामान्यानधिकरणवृत्तिः गगनाभावोऽपि न भवतीति प्रतियोगिव्यधिकरणाप्रसिद्धिरेवेति शङ्कितुराशयः ।।

तत्र समाधानमाह– **नित्य एवेत्यादिना** । नित्ये एव वस्तुनि नित्यत्व-विशिष्टगगनाभावाभावो नास्तीति प्रतीतिः जायते, न तु जन्ये वस्तुनि, तत्र

नित्यत्वरूप विशेषणाभावात् नित्यत्वविशिष्टगगनाभावस्याभाव एव वर्तते, न तु तदभावः इति विषयबाधात् । तथा च तादृशतृतीयाभावस्य लाघवात् नित्यत्वरूपत्वमेवेष्यते न तु प्रथमाभावरूपत्वम् – नित्यत्वविशिष्टगगनाभाव-रूपत्वम् । अत एव विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन गगनाभावरूपत्वमित्यपि वक्तुं न शक्यते । ततश्च नित्यत्वविशिष्टगगनाभावाभावस्य गगनाभावप्रतियोगित्वं नास्तीति तादृशप्रतियोग्यधिकरण वृत्तित्वमेवास्ति गगनाभावस्येति वक्तुमशक्यतया गगनरूपस्य गगनाभावाभावरूपस्य वा प्रतियोगिनोऽनधिकरणे सत्तारूपहेत्वधिकरणे द्रव्ये वर्तमानं गगनाभावमादाय तदप्रतियोगित्वं द्रव्यत्वाभावरूपे साध्ये अस्तीति अतिव्याप्तिरिति भावः । अयं **केचित्तुकाराणाम्** आशयः **सूक्ष्ममतिग्राह्यः** ।।

## गादाधरी

**तन्न** । तथापि **पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावरूप** प्रतियोग्यधि-करणहेत्वधिकरणकत्वेन गगनाभावस्य प्रतियोगिव्यधिकरणत्वासंभवात् । पूर्वक्षणावृत्तावपि पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावो नास्तीति प्रत्ययात् पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावाभावत्वस्य पूर्वक्षणवृत्तित्वे कल्पयितुमशक्यत्वेन **गगनाभावानतिरिक्त विशिष्टगगनाभाव एव** तत्त्वस्य कल्पनीयतया पूर्वक्षण-वृत्तित्वविशिष्टगगनाभावाभावे **गगनाभावप्रतियोगित्वावश्यकत्वादिति** । **स्वरूपसंबन्धेन** गगनादेः वृत्तिमत्त्वे तु **नैष दोषः** इति ध्येयम् ।।

## व्याख्या

तन्मतं निरस्यति– **तन्नेति** । द्रव्यत्वाभाववान् सत्त्वात् इत्यत्र प्रतियोगिता-वच्छेदकावच्छिन्नसामान्यानधिकरणत्वनिवेशपक्षे **दीधितौ** अतिव्याप्तिरुक्ता । तत्समर्थनाय गगनाभाव एव तत्र प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तिः । तत्प्रतियो-गितानवच्छेदकत्वं द्रव्यत्वाभावत्वे साध्यतावच्छेदकेऽस्तीति अतिव्याप्तिस्समर्थिता



**केचित्तु** इत्यादिना । तद्दूषयति– **तन्नेति** । गगनाभावस्यापि पूर्वक्षणक्षणवृत्तित्व-गगनाभावाभावरूपप्रतियोग्यधिकरणद्रव्यवृत्तितया न लक्षणघटकता । तथा चाप्रसिद्धितादवस्थ्यात् अतिव्याप्तिकथनं कथं संगच्छत इति प्रश्नोऽवशिष्यते । ननु नित्यत्वविशिष्टगगनाभावाभावस्य योऽभावः तस्य नित्यत्वस्वरूपत्ववत् पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावाभावत्वस्य पूर्वक्षणवृत्तित्वे कल्पनमस्तु । तथा च पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावस्य पूर्वक्षणवृत्तित्वरूपतृतीया-भावप्रतियोगित्वेऽपि गगनाभावप्रतियोगित्वाभावेन तमादाय प्रतियोगिवैयधिकरण्यं नास्तीति वक्तुमशक्यतया गगनरूपप्रतियोगिवैयधिकरण्यमादाय गगनाभावस्य लक्षणघटकतया तदप्रतियोगित्वं साध्ये द्रव्यत्वाभावेऽस्तीति अतिव्याप्तिसमर्थनं भवतु इति शङ्कायामाह– **पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावरुपेति** । यथा नित्य एव पदार्थे नित्यत्वविशिष्टगगनाभावाभावो नास्तीति प्रतीतिः जायते, तथा पूर्वक्षणवृत्तौ पदार्थे एव पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावो नास्तीति यदि प्रतीतिः स्यात् तदा तृतीयाभावस्य पूर्वक्षणवृत्तित्वस्वरूपत्वं स्यादपि । परंतु पूर्वक्षणावृत्तौ पदार्थेऽपि तादृशप्रतीतिः जायते । तादृशतृतीयाभावस्य पूर्वक्षणवृत्तित्वरूपत्वे अवृत्तौ तादृशवृत्तित्वासंभवेन गगनाभावरूपत्वमेव तृतीयाभावस्य कल्पनीयम् । गगनाभावस्य गगनरूप प्रतियोग्यनधिकरणवृत्तित्वात् लक्षणघटकतया तदप्रतियोगित्वं साध्येऽस्तीति अतिव्याप्तिसंगतिः । **गगनाभावानतिरिक्तविशिष्टाभाव एवेति** । **गगनाभावानतिरिक्तः** – गगना-भावरूपः यः **विशिष्टगगनाभावः** – पूर्वक्षणवृत्तित्वविशिष्टः गगनाभावः तस्मिन्नेव, तत्त्वस्य पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावाभावत्वस्य (तृतीयाभावरूपत्वस्य) कल्पनात् इत्यर्थः । **गगनाभावप्रतियोगित्वावश्यकत्वात्** = गगनाभावनि-रूपितप्रतियोगित्वस्य आवश्यकत्वात् । तृतीयाभावः पूर्वक्षणवृत्तित्वविशिष्टगगना-

भावः– स च गगनाभावरूपः । विशिष्टशुद्धयोरभिन्नत्वात् इति भावः । तथा च विशिष्टगगनाभावरूपप्रतियोगिवैयधिकरण्यासंभवात् गगनरूपप्रतियोग्यनधिकरण-वृत्तितया गगनाभावस्य लक्षणघटकतया तत्प्रतियोगितानवच्छेदकत्वात् द्रव्यत्वाभावत्वस्य द्रव्यत्वाभाववान् सत्त्वात् इत्यत्र **दीधित्युक्ता** अतिव्याप्तिः संगतैवेति तात्पर्यम् ।।

**स्वरूपसंबन्धेनेति** । स्वरूपसंबन्धेन गगनादेःवृत्तिमत्त्वे तु **नैष दोषः** पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावाभावत्वं पूर्वक्षणवृत्तित्वे कल्पयितुं न शक्यते इत्युक्तौ दोषो न संभवति । तदानीमवृत्तिपदार्थस्यैवाभावेन पूर्वक्षणवृत्तित्व-विशिष्टगगनाभावाभावाभावत्वस्य पूर्वक्षणवृत्तित्वे कल्पनसंभवात् । उक्तरीत्या गगनाभावे प्रतियोग्यधिकरणवृत्तित्वोपपादनासंभवेन – पूर्वक्षणवृत्तित्वविशिष्टस्या-भावरूपप्रतियोग्यधिकरणवृत्तित्वोपपादनासंभवेन, गगनरूपप्रतियोग्य-नधिकरणहेत्वधिकरणवृत्तित्वं गगनाभावस्य संभवतीति भावः । परं तु गगनस्य स्वरूपसंबन्धेन वृत्तिमत्त्वपक्षे गगनरूप प्रतियोग्यधिकरणहेत्वधिकरणवृत्तितया कथं गगनाभावो लक्षणघटकः स्यात् इति शङ्का जायते । अतः पूर्वमुक्तः यः उभयाभावघटितः परिष्कारः तद्रीत्या अतिव्याप्तिः संगमनीयेति प्रतिभाति ।।

## गादाधरी

आत्मनि संयोगसामान्याभावस्य सर्वमतसिद्धत्वविरहात् **कपीति** । **जन्यद्रव्यवृत्तिहेतुके** हेत्वधिकरणजन्यद्रव्ये गुणसामान्याभावस्यापि उत्पत्तिकाला-वच्छेदेन स्वमते सत्त्वात् तत्र तादृशप्रतियोगिवैयधिकरण्यं न घटते । अतः आत्मत्वहेतुकानुसरणम् । **गुणसामान्याभावत्वस्य** कपिसंयोगस्वरूपा-भावप्रतियोगितावच्छेदकत्वं स्फुटीकर्तुं कपिसंयोगानां गुणत्वकीर्तनम् । **तत्प्रति-योगितावच्छेदकेति** । तथा च तादृशाभावा अपि यत्किंचित्प्रतियोगितावच्छेदका-



वच्छिन्नप्रतियोगिव्यधिकरणा एव । तत्प्रतियोगितावच्छेदकत्वात् कपिसंयोगा-भावत्वस्याव्याप्तिरिति भावः ।।

## व्याख्या

प्रतियोगितावच्छेदकयत्किंचिद्धर्मावच्छिन्नानधिकरणत्वं प्रतियोग्यनधि-करणत्वमिति तृतीयकल्पे ''आत्मा कपिसंयोगाभाववान् आत्मत्वात्'' इत्यत्राव्याप्तिरुक्ता **दीधितौ** । तथा हि– आत्मत्वरूपहेतुमति **आत्मनि** कपिसंयोगाभावस्य सत्त्वात् अयं सद्धेतुः । यद्यपि आत्मनो विभुत्वात् विभुत्वस्य च सर्वमूर्तद्रव्यसंयोगित्वरूपत्वात् आत्मन्यपि कपिसंयोगः वृक्षावच्छेदेन वर्तते । तथापि आत्मनि कपिसंयोगरहितभूतलाद्यवच्छेदेन कपिसंयोगाभावोऽपि वर्तते, ततश्च हेत्वधिकरणे आत्मनि यः अभावः कपिसंयोगाभावाभावः कपिसंयोगात्मक, तस्य यथा कपिसंयोगाभावत्वं प्रतियोगितावच्छेदकम् तथा गुणसामान्याभावत्वमपि प्रतियोगितावच्छेदकम् । न च गुणसामान्याभावत्वं गुणात्मकस्य गुणसामान्या-भावाभावस्यैव प्रतियोगितावच्छेदकं, कथं कपिसंयोगस्य प्रतियोगितावच्छेदकमिति वाच्यम् । कपिसंयोगस्यापि गुणत्वात् गुणस्य प्रतियोगितावच्छेदकं गुणसामान्याभावत्वं गुणान्तर्गतस्य कपिसंयोगस्यापि प्रतियोगितावच्छेदकम् । एवं च कपिसंयोगात्मकाभावप्रतियोगितावच्छेदकं कपिसंयोगाभावत्वं गुणसामान्याभावत्वं च । तयोर्मध्ये यत्किंचित्प्रतियोगितावच्छेदकं इत्यनेन गुणसामा-न्याभावत्वं गृह्यते । तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्य आत्मनः वर्तते । ज्ञानेच्छादिगुणाधिकरणे आत्मनि गुणसामान्याभावानधिकरणत्व-सत्त्वात् । एवं च यत्किंचित् प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधि-करणवृत्तिः अभावः कपिसंयोगाभावाभावोऽपि तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगाभावत्वमित्यव्याप्तिरिति **दीधितेः** अभिप्रायः ।।

## व्याख्या

तृतीयपक्षे संयोगसामान्याभाववान् आत्मत्वात् इत्यत्रापि अव्याप्तेः वक्तुं शक्यतया कपिसंयोगाभावरूपसंयोगविशेषाभावस्य साध्यत्वानुसरणे बीजमाह– **गादाधर्याम्– आत्मनीति** । संयोगसामान्याभाववान् आत्मत्वात् इत्युक्ते द्रव्ये संयोगसामान्याभावानभ्युप गन्तृमते सद्धेतुत्वं न संभवतीत्यतः कपिसंयोगाभावस्य साध्यत्वानुसरणम् । **जन्यद्रव्येति** । आत्मत्वं नित्यद्रव्यवृत्ति-हेतुः । जन्यद्रव्यवृत्ति पृथिवीत्वादिकमेव कुतो हेतुतया नोक्तमिति शङ्कायामाह– **जन्यद्रव्यवृत्तिहेतुके** इति । जन्यद्रव्ये गुणसामान्याभावस्यापि उत्पत्तिकालावच्छेदेन सत्त्वात् गुण-सामान्याभावमादाय प्रतियोग्यनधिकरणत्वं हेत्वधिकरणस्य जन्यद्रव्यस्य न स्यात् इति नित्यद्रव्यवृत्त्यात्मत्वहेतुकस्थलानुसरणमिति भावः । **दीधितौ** कपिसंयोगानां गुणानामिति कथितम् । तत्र गुणानामिति पदप्रयोजनं– गुणसामान्या-भावत्वस्य कपिसंयोगात्मकाभावप्रतियोगितावच्छेदकत्वं स्फुटीकर्तुमित्याह– **गुणसामान्या-भावत्वस्येति** । शिष्टं स्पष्टमुपपादितं प्राक् ।।

## दीधितिः

मैवम्– **यादृश**प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तदन-वच्छेदकत्वस्योक्तत्वात् ।।

## गादाधरी

**यादृशेति** । **यद्यत्**प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्न-भेदवत्त्वमित्यर्थः । **कपिसंयोगी** एतद्वृक्षत्वात् इत्यादौ **यत्किंचित्कपिसंयोगादि**-व्यक्त्यमधिकरणत्वेऽपि हेतुमतः कपिसंयोगत्वावच्छिन्नप्रतियोगितावच्छेदका-वच्छिन्नाधिकरणसामान्यभेदवत्त्वासंभवात् स्वपदेन **तादृशप्रतियोगिता** उपात्तुं न शक्यत इति नाव्याप्तिः । द्रव्यत्वाभाववान् सत्त्वात् इत्यादौ हेतुमतो द्रव्यादेः



**विशिष्टद्रव्यत्वाभावरूप**प्रतियोग्यधिकरणत्वेऽपि द्रव्यत्वाभावत्वावच्छिन्ना या प्रतियोगिता **तदवच्छेदका**वच्छिन्नानधिकरणत्वात् **तस्य लक्षणघटकता** इति नातिव्याप्तिः । कपिसंयोगाभाववान् आत्मत्वात् इत्यादौ च कपिसंयोगाभावत्वा-वच्छिन्ना या प्रतियोगिता तदवच्छेदकावच्छिन्नाधिकरणमेव हेतुमत् । किं तु गुणसामान्याभावत्वावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्नानधिकरणमेव, **तदनवच्छेदकमेव** साध्यतावच्छेदकमिति नाव्याप्तिरिति भावः ।।

## व्याख्या

**दीधितौ** पूर्वं त्रेधा प्रतियोग्यनधिकरणत्वं विकल्प्य प्रदर्शितानां दोषाणां यादृशप्रतियोगितावच्छेदकेत्यादिरीत्या परिष्करणे कृते वारणप्रकारं क्रमशो दर्शयति– **यद्यदि**त्यादिना । यादृशपदं वीप्साविवक्षया यद्यत्परम् । तच्च प्रतियोगितायां विशेषणम् । तथा च हेत्वधिकरणवृत्त्यभावीययद्यत्प्रतियोगितावच्छेदकावच्छिन्नाधि-करणत्वावच्छिन्न प्रतियोगिताकभेदवत्त्वं हेतुमतः तत्तत्प्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पर्यवसितोऽर्थः ।।

पर्वतो वह्निमान् धूमात् इत्यत्र धूमाधिकरणवृत्त्यभावाः घटपटाद्यभावाः तत्प्रतियोगितावच्छेदकघटत्वपटत्वाद्यवच्छिन्नाधिकरणत्वावच्छिन्न प्रतियोगिताकभेदः घटाधिकरणं न, पटाधिकरणं नेति भेदः तादृशभेदवत्त्वं पर्वतस्य हेतुमतः अस्ति, तत्तद्धटत्वपटत्वाद्यवच्छिन्नप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके वह्नित्वेऽ-स्तीति समन्वयः ।।

पर्वतो धूमवान् वह्नेरित्यत्र हेत्वधिकरणायोगोलकवृत्त्यभावान्तर्गतधूमाभावीय-प्रतियोगितावच्छेदकधूमत्वावच्छिन्नाधिकरणभेदवत्त्वम् अयोगोलकेऽस्ति, तादृशधूमत्वावच्छिन्नप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके धूमत्वे नास्तीति नातिव्याप्तिः ।।

तत्र क्रमेण **दीधित्युक्त**दोषानुद्धरति– **कपिसंयोगीत्यादिना** । पूर्वं हि हेत्वधिकरणे प्रथमकल्पे स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरण प्रतियोगिक-(यत्किंचिदधिकरणप्रतियोगिक)भेदो निवेशितः । तथा सति वृक्षस्य वृक्षावृत्ति-गोपुरवृत्तिकपिसंयोगाधिकरणभेदमादाय कपिसंयोगाभावस्य लक्षणघटकतया तत्प्रतियोगितावच्छेदकत्वमेवास्ति कपिसंयोगत्वस्येति कपिसंयोगी एतद्वृक्षत्वादित्य-त्राव्याप्तिराशङ्किता । इदानीमधिकरणसामान्यभेदोक्त्या वृक्षवृत्तिकपिसंयोगत्वा-वच्छिन्नाधिकरणभेदो वृक्षे न भवतीति कपिसंयोगाभावो न लक्षणघटकः, अपि तु घटाद्यभाव एव । तत्प्रतियोगितानवच्छेदकत्वं कपिसंयोगत्वेऽस्तीति नाव्याप्तिः ।।

स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य हेत्वधिकरणे निवेश इति द्वितीयकल्पे पूर्वं द्रव्यत्वाभाववान् सत्त्वात् इत्यत्र हेतुमतो जन्यद्रव्यस्य नित्यत्वविशिष्टद्रव्यत्वाभावरूपप्रतियोग्यधिकरणत्वात् साध्याभावस्य द्रव्यत्वाभावा-भावस्य द्रव्यत्वरूपस्य प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणवृत्तित्वं नास्तीति लक्षणाघटकतया अभावान्तरमादायातिव्याप्तिः इत्युक्तं पूर्वम् ।।

इदानीं **यद्यत्प्रतियोगिता** इत्यनेन द्रव्यत्वाभावत्वावच्छिन्नप्रतियोगितां गृहीत्वा तदवच्छेदकं यत् द्रव्यत्वाभावत्वं तदवच्छिन्नानधिकरणत्वं हेतुमतो द्रव्यस्य वर्तत इति तादृशप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं द्रव्यत्वा-भावत्वमिति नातिव्याप्तिः । नित्यत्वविशिष्टद्रव्यत्वाभावत्वावच्छिन्नप्रतियोगिता तु प्रतियोगितापदेन नोपादातुं शक्या । हेतुमतः जन्यद्रव्यस्य तत्प्रतियोगितावच्छेदक नित्यत्वविशिष्टद्रव्यत्वाभावाधिकरणतया तादृशाभावाधिकरणत्वावच्छिन्न प्रतियोगिताकभेदवत्त्वासंभवात् ।।

प्रतियोगितावच्छेदकयत्किंचिद्धर्मावच्छिन्नानधिकरणत्वं हेत्वधिकरणस्येति तृतीयकल्पे पूर्वं कपिसंयोगाभाववान् आत्मत्वादित्यत्र कपिसंयोगात्मकसाध्या-



भावीय प्रतियोगिता द्वयी । एका कपिसंयोगाभावत्वावच्छिन्ना, अपरा गुणसामान्या-भावत्वावच्छिन्ना च । तत्र गुणसामान्याभावत्वावच्छिन्न प्रतियोगिताया उपादाने तदवच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वं हेतुमतः आत्मनोऽस्तीति कपिसंयोगात्मकाभावस्यापि लक्षणघटकतया तत्प्रतियोगितावच्छेदकमेव साध्यता-वच्छेदकं कपिसंयोगाभावत्वमिति अव्याप्तिरुक्ता । इदानीं गुणसामान्याभावत्वा-वच्छिन्न प्रतियोगिताया उपादानेन तदवच्छेदकगुणसामान्याभावत्वावच्छिन्नानधि-करणत्वेऽपि हेतुमतः अग्रिमतत्पदेन गुणसामान्याभावत्वावच्छिन्न प्रतियोगिताया एव ग्राह्यतया तदनवच्छेदकत्वं कपिसंयोगाभावत्वेऽस्त्येवेति नाव्याप्तिः । कपि-संयोगाभावत्वावच्छिन्नप्रतियोगिता तु नोपादातुं शक्यते तदवच्छेदककपिसंयोगा-भावत्वावच्छिन्नाधिकरणत्वात् हेतुमतः आत्मन इति ।।

**यत्किंचित्कपिसंयोगेति** । गोपुरादि वृत्तिकपिसंयोगेत्यर्थः । **तादृशप्रति-योगिता** – कपिसंयोगत्वावच्छिन्नप्रतियोगिता । **विशिष्टद्रव्यत्वाभावरूपेति** । नित्यत्वविशिष्टद्रव्यत्वाभावरूपेत्यर्थः । **तदवच्छेदकेति** । तदवच्छेदकं यत् द्रव्यत्वाभावत्वं तदवच्छिन्नानधिकरणत्वं हेतुमतो द्रव्यत्वस्य । **तस्य लक्षण-घटकता** – द्रव्यत्वाभावाभावस्य लक्षणघटकता । **तदनवच्छेदकम्** गुणसामान्या-भावत्वावच्छिन्नप्रतियोगितानवच्छेदकं साध्यतावच्छेदकं – कपिसंयोगाभावत्वम् ।।

## गादाधरी

**न चैवं** घटत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं धूमवत् तादृशप्रतियोगितानवच्छेदकं च वह्नित्वम् इत्याकारकस्याभावकूटावगाहिनः समूहालम्बनज्ञानस्यैव अनुमितिहेतुतया विशिष्टपरामर्शस्यानुमितिहेतुत्वमनुपपन्नम् । अभावकूटघटिततया व्याप्तेर्दुर्ज्ञेयत्वापत्तिश्चेति वाच्यम् ।।

हेतुमन्निष्ठभेदप्रतियोगितायां स्वावच्छेदकावच्छिन्नत्वसंबन्धेनावच्छेदिका या प्रतियोगिता तदनवच्छेदकत्वस्य एकसामान्याभावरूपस्य निवेशे तात्पर्यात् । तादृशभेदप्रतियोगितायां स्वावच्छिन्नवत्त्वसंबन्धेन अनवच्छेदकत्वस्य साध्यतावच्छेदकविशेषणतयैव सामञ्जस्येऽपि **यथासंनिवेशे** न वैयर्थ्यम् । **तथाविधसंबन्धेन तादृशभेद**प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पुनरन्योन्याभावघटितलक्षणनिष्कृष्टार्थो बोध्यः ।।

## व्याख्या

ननु यद्यत्प्रतियोगितावच्छेदकावच्छिन्नेत्यादिरीत्या निवेशे यद्यत्पदेन घटत्वाद्यवच्छिन्नप्रतियोगितानामेवोपादेयतया घटत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेतुमत् तादृशप्रतियोगितानवच्छेदकं वह्नित्वम् इत्याकारकस्य अभावकूटावगाहिनः समूहालम्बनज्ञानस्यैव अनुमितिहेतुतया विशिष्टपरामर्शस्य अनुमितिहेतुत्वं न निर्वहति, एवमभावकूटघटिततया उक्तव्याप्तेः असर्वज्ञदुर्ज्ञेयत्वं च भवतीत्याशङ्कां कृत्वा तां परिहरति– **न चैवमित्यादिना** ।।

हेतुमन्निष्ठभेदप्रतियोगितायाम् अवच्छेदिका या प्रतियोगिता तदवच्छेदकत्वत्वावच्छिन्नाभावस्यैव अनुगतस्य एकसामान्याभावस्य साध्यतावच्छेदके निवेशात् न पूर्वोक्तदोषद्वयम् । तादृशभेदप्रतियोगितावच्छेदकत्वं च स्वावच्छेदकावच्छिन्नवत्वसंबन्धेन ।।

तथा च हेतुमन्निष्ठभेदप्रतियोगितानिरूपित– स्वावच्छेदकावच्छिन्नवत्त्वसंबन्धावच्छिन्नावच्छेदकताश्रयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । तादृशव्याप्तिमद्धेतुमान् पक्ष इति विशिष्टपरामर्शः । अनन्ताभावानिवेशात् नासर्वज्ञदुर्ज्ञेयत्वम् ।।



लक्षणसमन्वयः इत्थम्– पर्वतो वह्निमान् धूमात् इत्यत्र हेतुमान् धूमवान् पर्वतः । तन्निष्ठः भेदः घटत्वाद्यवच्छिन्नप्रतियोगितावद्भेदः । स्वं-प्रतियोगिता स्वावच्छेदकं घटत्वं तदवच्छिन्नघटवत्त्वं पर्वते नास्तीति कृत्वा, स्वावच्छेदकावच्छिन्नवत्त्वसंबन्धेन घटत्वावच्छिन्नप्रतियोगितावान् पर्वतो न भवतीति– स्वावच्छेदकावच्छिन्नवत्त्वसंबन्धावच्छिन्न प्रतियोगितावद्भेदः पर्वतनिष्ठः तन्निरूपित (तादृशभेदनिरूपित प्रतियोगितानिरूपित)स्वावच्छेदकावच्छिन्नवत्त्वसंबन्धावच्छिन्नावच्छेदकतावत् घटत्वादिकं तद्भिन्नं साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नसामानाधिकरण्यं धूमेऽस्तीति लक्षणसमन्वयः ।।

नन्वत्र स्वावच्छेदकावच्छिन्नवत्त्वसंबन्धेन हेतुमन्निष्ठभेदप्रतियोगितावच्छेदकत्वं प्रतियोगितायां निवेश्य तदनवच्छेदकत्वस्य साध्यतावच्छेदके निवेशापेक्षया लाघवात् स्वावच्छिन्नवत्त्वसंबन्धावच्छिन्ना या हेतुमन्निष्ठभेदप्रतियोगिता तदनवच्छेदकत्वस्य साक्षात् साध्यतावच्छेदके निवेशेऽप्यदोषात् अधिकनिवेशो व्यर्थ इति शङ्कायामाह– **यथासंनिवेशे** इति । प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगिताघटितयथाश्रुतमूलानुसारेण एवमर्थो वर्णितः । प्रकारान्तरस्य प्रकारान्तरादूषकत्वादिति न्यायेन नात्रत्यांशस्य वैयर्थ्यमिति भावः ।।

अन्योन्याभावघटितव्याप्तिलक्षणनिष्कृष्टार्थं दर्शयति– **तथाविधसंबन्धेनेति** । स्वावच्छिन्नवत्त्वसंबन्धेन हेतुमन्निष्ठभेदप्रतियोगितानवच्छेदकसाध्याताव‍च्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । वह्निमान् धूमात् इत्यत्र हेतुमत्पर्वतनिष्ठो भेदः स्वावच्छिन्नवत्त्वसंबन्धेन घटत्ववान्न इति प्रतीतिसिद्धो भेदः । पर्वते घटत्वावच्छिन्नघटवत्त्वविरहात्, पर्वतः घटत्वावच्छिन्नवत्त्वसंबन्धेन घटत्ववद्भेदवान् । तादृशभेदनिरूपिता घटत्वावच्छिन्नवत्त्वसंबन्धावच्छिन्ना

प्रतियोगिता घटत्ववन्निष्ठा तदवच्छेदकं घटत्वं तदनवच्छेदकं वह्नित्वमिति समन्वयो बोध्यः ।।

**तथाविधसंबन्धेनेति** तृतीयार्थोऽवच्छिन्नत्वम् हेतुमन्निष्ठभेदप्रतियोगिताया-मन्वेति । **तादृशभेदेति** । हेतुमन्निष्ठभेदेत्यर्थः । हेतुमन्निष्ठभेदनिरूपितस्वावाच्छिन्न-वत्त्वसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधि-करण्यं व्याप्तिरिति निष्कर्षः । **सावधानं समन्वयातिव्याप्तिवारणादिकं-कर्तव्यम्** ।।

**दीधितिः**

**अत्र च ग्राह्यसामानाधिकरण्ये** हेतोर्यादृशसंबन्धः **प्रविष्टः** तेन संबन्धेन यो हेतुमान् तत्र वर्तमानत्वमभावस्य, **साध्यस्य च** यादृशसंबन्धः प्रविष्टः तत्संबन्धा वच्छिन्नायाश्च प्रतियोगितायाः अनवच्छेदकत्वं वाच्यम् । तेन धूमसमवायिनिष्ठात्यन्त-भावस्य संयोगावच्छिन्नप्रतियोगितायाः धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्न-प्रतियोगिताया अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः ।।

**यद्वा** साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वं हेतुमतो वक्तव्यम् । तथा च संबन्धभेदेन प्रतियोगिता न विशेषणीया ।।

**गादाधरी**

**संबन्धसामान्येन** हेतुमत्तानिवेशे **अव्याप्तेः** वक्ष्यमाणत्वात् संबन्धविशेषेण हेतुमत्त्वं, प्रतियोगितायां संबन्धविशेषावच्छिन्नत्वानिवेशेनासंभवस्य च वाच्यतया **तत्र तच्च** निवेशयति– **अत्र चेति** । **ग्राह्यसामानाधिकरण्ये - अनुमितिकारणी-भूत** - ज्ञानविषयहेतुनिष्ठसाध्यसामानाधिकरण्यशरीरे । **साध्यस्य चेति** । अत्रापि **ग्राह्यसामानाधिकरण्ये** इति **प्रविष्ट** इति चानुषज्यते ।।



तथा च **तत्संबन्धेन हेतुमति** वर्तते योऽभावः तदीयतत्संबन्धावच्छिन्न-प्रतियोगितावच्छेदको यो धर्मः तदवच्छिन्नस्य तेन साध्यतावच्छेदकसंबन्धेन अधिकरणे तेन हेतुतावच्छेदकसंबन्धेन वर्तमानत्वं तादृशसाध्यतावच्छेदकसंबन्धेन साध्यानुमितिप्रयोजकमित्यर्थः । व्यापकताघटकसाध्यीयसंबन्धेन साध्याधिकरणे तादृशसाधनीयसंबन्धेन वर्तमानत्वं तादृशसाध्यतावच्छेदकसंबन्धेन साध्यानुमिति-प्रयोजकमित्यर्थः ।।

**व्याख्या**

**अत्र च** इत्यादिदीधितिम् अवतारयति– **संबन्धसामान्येनेति** । हेतुमत्त्वे संबन्धविशेषावच्छिन्नत्वानिवेशे इत्यर्थः, न तु हेतुमत्त्वे संबन्धसामान्यावच्छिन्नत्व-निवेशे इत्यर्थः । संबन्धत्वेन संसर्गतायाः अप्रामाणिकत्वात् । **तच्च तत्र** = प्रतियोगितायाम् संबन्धविशेषावच्छिन्नत्वं चेत्यर्थः । **अव्याप्तेरिति** । वह्निमान् धूमात् इत्यादौ कालिकसंबन्धेन **हेतुमति** धूमवति काले संयोगेन वह्न्यभावमादा-याव्याप्तेर्वारणाथेत्यर्थः । प्रतियोगितायां संबन्धविशेषावच्छिन्नत्वानिवेशे सर्वत्र सद्धेतौ साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावाच्छिन्न प्रतियोगिताक साध्याभाव-मादायासंभवस्य वारणाय प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयमिति भावः ।।

**ग्राह्यसामानाधिकरण्ये** इत्यनेन विवक्षितमर्थमाह– **अनुमितिकारणी-भूतेति** । ग्राह्यशब्दस्य अनुमितिकारणीभूतज्ञानविषयेत्यर्थः । **तत्संबन्धेनेति** । पक्षसाध्यादिभेदेनानुमितेः भिन्नत्वात् तत्प्रयोजकव्याप्तिरपि भिन्नैवेति संबन्धविशेषेणा-नुमितौ तादृशसंबन्धविशेषघटितैव व्याप्तिरिति भावः ।।

तथा च संयोगसंबन्धेन वह्न्यनुमितौ, हेतुतावच्छेदको यः संबन्धः तेन संबन्धेन यः हेतुमान् तन्निष्ठाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानव-

च्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नस्य साध्यतावच्छेदकसंबन्धेन अधिकरणे हेतुतावच्छेदकसंबन्धेन वर्तमानत्वं हेतोः व्याप्तिरित्यर्थः ।।

हेतुतावच्छेदकसंबन्धावच्छिन्नहेतुनिष्ठाधेयतानिरूपकाधिकरणनिरूपित-वृत्तित्वाश्रयाभावनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्न प्रतियोगितानवच्छेदक-साध्यतावच्छेदकविशिष्टसाध्यनिष्ठसाध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतानिरूपिताधि-करणतावन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वं हेतोः व्याप्तिः इति यावत्। दलप्रयोजनादिकं पूर्वमेव यथास्थानमुक्तम् ।।

## गादाधरी

**व्यापकता**घटकसाध्यीयसंबन्धेन साध्याधिकरणे तादृशसाधनीयसंबन्धेन साधनस्यावर्तमानत्वग्रहदशायामनुमितिवारणाय सामानाधिकरण्यशरीरेऽपि संबन्धविशेषनिवेशनम् ।।

**वस्तुतस्तु** विरुद्धत्वेन ज्ञायमानधर्मवत्ताज्ञानस्य अनुमितावेव प्रति-बन्धकतायाः वक्ष्यमाणतया सामानाधिकरण्यशरीरे संबन्धविशेषानिवेशेऽपि न क्षतिः ।।

**सामानाधिकरण्यावगाहितायाः** प्रयोजकत्वं च विशिष्टपरामर्शनिर्वाहायो-पेयते । **पर्वतीय**धूमव्यापको वह्निः इति व्यापकतापरामर्शहेतुतायाः दूषितत्वात् ।।

न च **स्वव्यापक**साध्यकहेतुमानित्याकारकः सामानाधिकरण्यानवगाहि विशिष्ट परामर्श एव हेतुरास्तामिति वाच्यम् । बहुव्रीह्यर्थस्य सामानाधिकरण्यपर्यव-सितत्वात् इति ध्येयम् ।।

## व्याख्या

साध्यसामानाधिकरण्यशरीरे संबन्धविशेषनिवेशनप्रयोजनमाह– **व्यापक-तेति** । हेतोः साध्यासामानाधिकरण्यरूपविरोधज्ञानस्य अनुमित्यप्रतिबन्धकतया



व्याप्तिज्ञानप्रतिबन्धकत्वमादायैव विरोधस्य हेत्वाभासत्वं वक्तव्यम् । तदर्थं साध्यतावच्छेदकसंबन्धेन साध्याधिकरणे हेतुतावच्छेदकसंबन्धेन हेतोः वृत्तित्वं व्याप्तिशरीरे निवेश्यमिति भावः । तथा च साध्यतावच्छेदकसंबन्धेन साध्याधिकरणे साधनतावच्छेदकसंबन्धेन हेतोः अवृत्तित्वं विरोधः । तज्ज्ञानस्य साध्यसामानाधि-करणहेतुज्ञानं प्रति प्रतिबन्धकत्वात् विरोधस्य हेत्वाभासत्वनिर्वाहः ।।

एतच्च विरोधज्ञानस्यानुमितिकरणज्ञानप्रतिबन्धकत्वानुसारेण । तस्य साक्षादनुमितिप्रतिबन्धकत्वे तु सामानाधिकरण्यशरीरे संबन्धविशेषो न निवेशनीय इत्याह– **वस्तुतस्त्विति** । तद्वत्ताबुद्धिं प्रति तदभावतद्व्याप्यवत्ताज्ञानस्येव तदसमानाधिकरणधर्मवत्ताज्ञानस्यापि प्रतिबन्धकत्वम् इति स्वयं **बाधग्रन्थे** वक्ष्यमाणत्वादिति भावः ।।

ननु विरोधज्ञानस्य अनुमितिकरणविरोधित्वाभावे साक्षादनुमितिविरोधित्वे, परामर्शे साध्यसामानाधिकरण्यावगाहित्वं किमर्थमुपेयम् । साध्ये हेतुव्यापकत्वस्य व्यभिचारज्ञानप्रतिबन्धकत्वानुरोधेन, पक्षे हेतुमत्तायाश्च स्वरूपासिद्धिज्ञानप्रति-बन्धकत्वानुरोधेन भानस्य आवश्यकत्वेऽपि हेतौ साध्यसामानाधिकरण्यावगाहि-तायाः विरोधज्ञानप्रतिबन्धकत्वानुरोधरूप कारणाभावत् इत्याशङ्कामपनुदति– **सामानाधिकरण्यावगाहितायाः** इति । हेतुव्यापकं साध्यं, हेतुमांश्च पक्ष इति ज्ञानद्वयं विना हेतुव्यापकसाध्यसमानाधिकरणहेतुमान् पक्षः इत्याकारकैकविशिष्ट-ज्ञानरूपपरामर्शस्यैव कारणत्वं वाच्यम् । तन्निर्वाहश्च हेतौ साध्यसामानाधिकरण्या-वगाहित्व एवेति तथोक्तमित्यर्थः । ननु पर्वतवृत्तिधूमव्यापको वह्निः इत्याकारकैक-ज्ञानात्मक एव परामर्श एव हेतुरस्तु, लाघवात्, न तु उक्तरूप इत्यत्राह– **पर्वतीयेति** । परामर्शानुमित्योः समानविशेष्यकत्वानुसारेण हेतुव्यापकसाध्य-समानाधिकरणहेतुमान् पक्ष इति ज्ञानस्यैव कारणत्वमिति भावः ।।

प्रकारान्तरमाशङ्क्य निराचष्टे– **स्वव्यापकेति** । स्वव्यापकसाध्यकहेतुमान् इत्यत्र स्वव्यापकं साध्यं यस्य हेतोः स स्वव्यापकसाध्यक इत्यर्थात् । तत्र च यस्येति षष्ठ्याः सामानाधिकरण्यरूपसंबन्धार्थकत्वस्यैव वाच्यतया सामानाधिकरण्य-एव पर्यवसानादिति भावः ।।

## गादाधरी

प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकसंबन्धस्थाने साध्यता-वच्छेदकसंबन्धनिवेशेनैव साध्यतावच्छेदकसंबन्धेन साध्यवद्धेत्वधिकरणनिष्ठ संबन्धान्तरावच्छिन्नसाध्याभावमादाय दूषणस्यापि निराकरणसंभवे प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशनमफलमित्याशयेनाह– **यद्वेत्यादिना** । तादात्म्यसंबन्धेन व्यापकतानिर्वाहाय प्रतियोग्यनधिकरणत्वमनुक्त्वा प्रतियोग्य-संबन्धित्वमभिहितम् ।।

## व्याख्या

प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्य-नधिकरणत्वनिवेशे वह्निमान् धूमात् इत्यादौ हेत्वधिकरणपर्वतवृत्तिः अभावः समवायेन वह्न्यभावः, स च प्रतियोगितावच्छेदकसमवायसंबन्धेन प्रतियोगिवह्न्यन-धिकरणपर्वतवृत्तिश्चेति तस्य समवायसंबन्धावच्छिन्नवह्न्यभावस्य लक्षणघटकतया तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं वह्नित्वमित्यव्याप्तिः प्रसक्ता । तद्वारणाय अभवीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेश-नीयम् । तथा च समवायेन वह्न्यभावो न लक्षणघटकः, तदीयप्रतियोगितायां साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नस्याभावात् । अपि तु संयोगेन घटाद्यभाव एव । तदीयसंयोगसंबन्धावच्छिन्नप्रतियोगितायामवच्छेदकं घटत्वादि, अनवच्छेदकं वह्नित्वमिति नाव्याप्तिः इति पूर्वमुक्तमासीत् । तथा सति उभयत्र प्रतियोग्यनधि-



करणत्वशरीरे प्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वस्य, अग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य च निवेशे गौरवं भवतीत्यालोच्य साध्यता-वच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वनिवेशेनैव दोषद्वयस्यापि वारणं भवति । तथा हि- वह्निमान् धूमात् इत्यत्र समवायसंबन्धावच्छिन्नवह्न्यभावस्य हेत्वधि-करणवृत्तित्वेऽपि साध्यतावच्छेदकसंयोगसंबन्धेन वह्निरूपप्रतियोग्यधिकरणपर्वत-वृत्तितया लक्षणघटकत्वं न भवति । अपि तु संयोगसंबन्धावच्छिन्नघटाद्यभाव एव लक्षणघटकः । तस्य संयोगेन घटानधिकरणपर्वतवृत्तित्वात् । तत्प्रतियोगितान-वच्छेदकत्वं वह्नित्वेऽस्तीति नाव्याप्तिः इत्यालोच्य **यद्वा साध्यतावच्छेदक-संबन्धेनेति** कल्पान्तरमनुसृतं **दीधितौ** इत्याह **गादाधर्याम्– प्रतियोगिवैयधि-करण्यशरीर** इत्यादिना । **साध्यतावच्छेदकसंबन्धेन** – संयोगसंबन्धेन, **साध्यवद्धेत्वधिकरणनिष्ठं** – वह्निमत्पर्वतनिष्ठम्, संबन्धान्तरावच्छिन्नसाध्या-भावम् – समवायसंबन्धावच्छिन्नवह्न्यभावम् **दूषणस्य** – अव्याप्तेः । **प्रतियोगिवैयधि-करण्यशरीरे** प्रतियोग्यनधिकरणत्वशरीरे अधिकरणत्वस्थाने संबन्धित्वं निवेशनीयम्। अन्यथा तादात्म्यसंबन्धेन साध्यस्थले तस्य वृत्त्यनियामकतया तेन संबन्धेनाधि-करणाप्रसिद्धेः अव्याप्तेः ।।

## दीधितिः

**एवं स्थिते** सामानाधिकरण्यादौ **संबन्धित्वं निवेशनीयम्** । न तु अधि-करणत्वम् । तथा च **धर्मिणो** व्याप्यत्वं व्यापकत्वं च निर्वहति । **तथा हि**– तादात्म्येन धूमवतः संबन्धिनि महानसे वर्तमानो योऽन्योन्याभावः तस्य **तादात्म्यसंबन्धावच्छिन्ना** या प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्निमतः तादात्म्येन संबन्धिनि महानसे धूमवतस्तादात्म्येन संबन्धित्वम् । **एवं** धर्मिणो धर्मव्यापकत्वव्याप्यत्वे बोध्ये ।।

## गादाधरी

ननु प्रतियोगिवैयधिकरण्ये संबन्धित्वनिवेशेऽपि तादात्म्यसंबन्धेन व्याप्तिर्न निर्वहति । तादृशसाध्यतावच्छेदकसंबन्धेन साध्याधिकरणाप्रसिद्ध्या तद्घटित-साध्यसामानाधिकरण्याप्रसिद्धेः इत्यत आह– **एवं स्थिते** इति । प्रतियोगिवैयधिकरण्ये संबन्धित्वनिवेशे सतीत्यर्थः । **संबन्धित्वं निवेशनीयमिति** । तथा च साध्य-सामानाधिकरण्यं **साध्यसंबन्धिसंबन्धित्वम्** । अभावस्य हेतुसामानाधिकरण्यमपि **हेतुसंबन्धिसंबन्धित्वम्** आदिना ग्राह्यम् । **धर्मिणः** धूमवदादेः वह्निमदादेश्च । तदेव दर्शयति– **तथाहीति** । **तादात्म्यसंबन्धावच्छिन्नेति** । पूर्वकल्पाभिप्रायेण । **धूमवद्वह्निमतो**र्व्याप्तिमुक्त्वा धर्मिणो धूमवदादेः वह्न्यादिरूपधर्मव्याप्यत्वं वह्निमदादिरूपधर्मिणश्च धूमादिधर्मव्यापकत्वं चाह– **एवमिति** ।।

## व्याख्या

अत्रत्या **दीधितिः** तद्व्याख्या **गादाधरी च** सुखावबोधेति न मया प्रतिपङ्क्ति व्याख्यानं क्रियते । प्रतियोग्यनधिकरणवृत्तित्वशरीरे अधिकरणत्वस्थाने संबन्धित्वं निवेशनीयम् । अन्यथा तादात्म्यसंबन्धेन साध्यस्थले तस्य वृत्त्यनियामकतया तेन संबन्धेनाधिकरणाप्रसिद्ध्या अव्याप्तेः । तत्र तन्निवेशेऽपि साध्यसामानाधिकरण्यशरीरे अधिकरणत्वनिवेशे पुनस्तत्रैवाप्रसिद्धिः । अतस्तत्रापि संबन्धित्वं निवेशनीयम् ।।

तथा च स्वप्रतियोगिप्रतियोगिकसाध्यतावच्छेदकसंबन्धानुयोगि भिन्न-हेतुप्रतियोगिकहेतुतावच्छेदकसंबन्धानुयोगिनिष्ठाभावनिरूपितसाध्यतावच्छेदक-संबन्धावच्छिन्न – प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न – साध्य-प्रतियोगिकसंबन्धानुयोग्यनुयोगिक – हेतुतावच्छेदकसंबन्धप्रतियोगित्वं हेतोः व्याप्तिः। इयं च भेदाभेदसंबन्धद्वयघटितव्याप्तिः ।।



पर्वतः संयोगेन वह्निमान् संयोगेन धूमादित्यत्र हेतुमन्निष्ठः संयोगसंबन्धा-वच्छिन्नघटाद्यभावः तत्प्रतियोगी घटादिः तत्प्रतियोगिक साध्यतावच्छेदसंबन्धानुयोगी भूतलादिः तद्भिन्नः पर्वतः स च धूमरूपहेतुप्रतियोगिकसंयोगसंबन्धानुयोगी तन्निष्ठः अभावः घटाद्यभावः तन्निरूपितसंयोगसंबन्धावच्छिन्न प्रतियोगितावच्छेदकं घटत्वादि, तदनवच्छेदकं वह्नित्वं तदवच्छिन्नवह्निप्रतियोगिकसंयोगसंबन्धानुयोगि पर्वत-निरूपितसंयोगसंबन्धावच्छिन्नवृत्तित्वं धूमेऽस्तीति लक्षणसमन्वयः ।।

पर्वतः तादात्म्येन वह्निमान् तादात्म्येन धूमवतः इति तादात्म्यसंबन्धा-वच्छिन्नहेतुसाध्यकस्थले– स्वं घटवद्भेदः तत्प्रतियोगी घटवान् तत्प्रतियोगिक-तादात्म्यसंबन्धानुयोगी भूतलादिः तद्भिन्नः महानसादिः तद्वृत्तिः अभावः घटवद्भेदः स च धूमवद्रूपहेतुप्रतियोगिक तादात्म्यसंबन्धानुयोगिमहानसवृत्तिः तन्निरूपित-तादात्म्यसंबन्धावच्छिन्न प्रतियोगितावच्छेदकं घटवत्त्वं, अनवच्छेदकं वह्निमत्त्वम् तदवच्छिन्नवह्निमत्प्रतियोगिक तादात्म्यसंबन्धानुयोगी पर्वतः तन्निरूपिततादात्म्य-संबन्धप्रतियोगित्वं धूमवद्रूपहेतावस्तीति समन्वयः ।।

**साध्यसंबन्धिसंबन्धित्वमिति** । साध्यप्रतियोगिकसंबन्धानुयोग्यनुयोगिक-संबन्धप्रतियोगित्वमित्यर्थः । **हेतुसंबन्धिसंबन्धित्वं** – हेतुप्रतियोगिकसंबन्धानु-योग्यनुयोगिकसंबन्धप्रतियोगित्वम् ।।

तादात्म्यसंबन्धेन हेतुसाध्यभावे सति संयोगेन वह्न्यादेरिव तादात्म्येन वह्निमतः साध्यत्वम्, संयोगेन धूमादेरिव तादात्म्येन धूमवदादेरपि हेतुत्वं संभवतीति तादृशव्याप्तिं प्रथमतः प्रदर्शयति **दीधितिकारः** । पश्चात् तुल्यन्यायेन अन्यतरधर्म-धर्मिघटित व्याप्तिं च प्रदर्शितवान् इत्याह– **धूमवद्वह्निमतो**रिति । स्पष्टोऽर्थः ।।

## दीधितिः

**अत एव** जलादीनां पृथिवीत्वाभावव्याप्यत्वं **तत्र तत्रोक्तं संगच्छते** । **यथा च** यादृशेन संबन्धेन हेतोः व्याप्यता गृहीता **तादृशेन** संबन्धेन तस्य पक्ष**विशिष्टज्ञाने**, यादृशेन संबन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्यपक्षयोः **विशिष्टानुमितिः, तेन न** संयोगेन **धूमावयवे न वा समवायेन** पर्वते **वह्निधीः, तथैवा**वगतव्यापकताघटक**संबन्धेन** व्यापकस्याभावग्रहे गृहीत-व्याप्यताघटकसंबन्धेन व्याप्यस्याभावः सिध्यतीति ।।

## गादाधरी

**अत एव** – तादात्म्यसंबन्धेन व्याप्ति व्यवस्थापनादेव । **तत्रतत्रोक्त-मिति** । **पृथिवीत्वेनेतरभेदसाधनायेत्यादिः** । **संगच्छत** इति । अन्यथा जलादीनां संयोगादिना पृथिव्यादिवृत्तितया **तेन संबन्धेन** व्याप्तेः **जलादिभेद-साधनानुपयोगितया** च तदुक्त्यसंगतेरिति भावः । **पृथिवीत्वाभावस्य** स्वरूपसंबन्धावच्छिन्नाभावेन पृथिवीत्वस्वरूपेण जलादिभेदः सिध्यति, न तु कालिकसंबन्धावच्छिन्नाभावेनेत्यत्र, पृथिवीत्वेन व्याप्यस्य जलादेः अन्योन्याभाव एव सिध्यति न त्वत्यन्ताभाव इत्यत्र वा किंनियामकमित्याशङ्कायां व्यतिरेकिणि तत्संबन्धावच्छिन्नव्यापकत्वेन गृह्यमाणस्य तत्संबन्धावच्छिन्नप्रतियोगिताकादेवा-भावात् हेतोर्येन संबन्धेन यस्य व्याप्यता गृहीता तत्संबन्धावच्छिन्नप्रतियोगिताक एव तदभावः सिध्यतीति समाधास्यन् अन्वयिनि व्यापकताघटकसंबन्धेन व्याप्यवत्ताज्ञानात् व्यापकताघटकसंबन्धेनैव व्यापकं सिध्यतीति नियमं दृष्टान्तविधया दर्शयति - **यथा चेति** । **तादृशेनेति** । तादृशेनैव । **विशिष्टज्ञाने** – पक्षधर्मिकविशिष्टज्ञाने । **विशिष्टानुमितिः** – वैशिष्ट्यविषयकानुमितिः । व्याप्यताघटकसंबन्धेनैव व्याप्यवत्ताज्ञानं हेतुः इति नियमस्य व्यापकताघटकसंबन्धेन च व्यापकस्यानुमितिनियमस्य च क्रमेण प्रयोजनमाह– **तेनेति** । **अनवतीर्णबाधस्य**



**अभ्रान्तस्येति** शेषः । **धूमावयवे न वह्निधी**रित्यन्वयः । **तस्य** समवायेन वह्निव्याप्यधूमवत्त्वेऽपि व्याप्यताघटकेन संयोगेन तद्वत्त्वाभावात् इति भावः । **न वा समवायेनेति** । **पर्वतवृत्तिहेतुं प्रति** समवायेन वह्नेः अव्यापकत्वादिति भावः । **प्रकृतोपयुक्त**नियमद्वयमाह– **तथैवेति** । **संबन्धेन** – संबन्धेनैव ।।

## व्याख्या

पूर्वं **दीधितौ** तादात्म्यसंबन्धेन व्याप्तिः व्यवस्थापिता **एवं स्थिते** इत्या-दिना । तथा व्यवस्थापने पूर्वग्रन्थसंमतिं प्रयोजनं चाह– **अत एवे**त्यादिना **दीधितौ** । अत्रायमाशयः– इदं (जलं) पृथिवीत्वाभाववत् जलात् इत्यनु-मानम् । अनेन जले पृथिवीत्वाभावः साध्यते । जलं हेतुः । इदं व्यतिरेक्यनु-मानम् । हेतुतावच्छेदकसंबन्धः तादात्म्यसंबन्धः । यत्र साध्याभावः तत्र हेत्वभाव इति व्यतिरेकव्याप्तिः । यत्र पृथिवीत्वाभावाभावः पृथिव्यां तत्र जलाभाव इति व्याप्तिशरीरम् । इयं व्याप्तिः जलस्य तादात्म्यसबन्धेन हेतुत्व एव घटते, न संयोगसंबन्धेन हेतुत्वे । यतः साध्याभाववत्यां पृथिव्यां संयोगसंबन्धेन जलाभावः वक्तुं न शक्यते । जलसंयुक्तपृथिव्यां संयोगसंबन्धेन जलस्यैव सत्त्वेन तदभाववि-रहात् । तादात्म्यसंबन्धेन जलाभावस्तु पृथिव्यामस्ति । तस्य जलभेदरूपत्वात् । एवं चात्र व्यतिरेकव्याप्तिः हेतोः तादात्म्यसंबन्धेन हेतुत्वे एव संगच्छते । इदमादौ मनसि ध्रियताम् । एतदुपष्टम्भकतया नियमद्वयं दर्शयति **दीधितौ** । तथा हि–

(१) अन्वयव्यतिरेकिहेतुस्थले पर्वतो वह्निमान् धूमात् इत्यत्र साध्यतावच्छेदकसंबन्धः हेतुतावच्छेदकसंबन्धश्च संयोगः । धूमस्य वह्निव्याप्यत्वं संयोगसंबन्धेन ज्ञातम्, तेन संबन्धेन व्याप्यता-वच्छेदकसंयोगसंबन्धेन धूमः पर्वतविशिष्टः इति ज्ञानात् साध्यस्य

वह्नेः येन संयोगसंबन्धेन धूमव्यापकत्वं ज्ञातम् तेन संयोगसंबन्धेनैव साध्यपक्षयोः विशिष्टधीः पर्वतो वह्निमान् इति धीर्भवति ।।

अस्य नियमस्य प्रयोजनम्– धूमावयवे न वह्निधीः । तस्य धूमावयवस्य वह्निव्याप्यो यो धूमः समवायेन तद्वत्त्वेऽपि संयोगेन धूमवत्त्वविरहात् ।।

(२) व्यतिरेकिस्थले– पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् इत्यत्र यत्र यत्र पृथिवीतरभेदाभावः (पृथिवीत्वाभावः) तत्र गन्धाभावः इति व्यतिरेकव्याप्ति ज्ञानानन्तरं व्यापकाभावात् व्याप्याभावः इति रीत्या पृथिव्यां गन्धाभावरूपस्य व्यापकस्याभावात् व्याप्यस्य पृथिवीत्वाभावस्याभावः पृथिव्यां सिध्यति । अत्रोभयत्र स्वरूपसंबन्ध एव व्यापकतावच्छेदकः व्याप्यतावच्छेदकश्च ।।

(३) प्रकृते जलं पृथिवीत्वाभाववत् तादात्म्येन जलात् इत्यत्र यत्र पृथिवीत्वाभावाभावः तत्र तादात्म्येन जलाभावः इति व्यतिरेकव्याप्तिः । अर्थात् यत्र पृथिवीत्वं तत्र जलभेदः सिध्यतीति भावः । अत्र व्यापकाभावात् व्याप्याभावः इत्यंशः जलस्य तादात्म्यसंबन्धेन व्याप्यत्वसाधकः इत्यवधेयम् । अनेन च पृथिवीत्वेन हेतुना जलादिभेदः साधयितुं शक्यते इति तत्त्वम् ।।

एतदाशयेनैव **गादाधर्याम्** **''पृथिवीत्वेनेतरभेदसाधनायेत्यादिः''** इति लिखितम् ।।

**तेन संबन्धेन** – संयोगसंबन्धेन । **जलादिभेदसाधनानुपयोगितयेति** । संयोगसंबन्धेन जलं जलान्तरे वर्तते । तत्र



जलभेदाभावात् संयोगेन जलस्य जलत्वावच्छिन्नभेदसाधकत्वं न संभवति इति भावः । तेन पृथिव्यां जलत्वावच्छिन्नभेदः साधयितुं न शक्यते इत्याशयः । ततश्च जलस्य तादात्म्यसंबन्धेन पृथिवीत्वाभावव्याप्यत्वे सत्येव जलस्य पृथिवीत्वाभावव्याप्यत्वं तत्र तत्र प्राचीनैरुक्तं संगच्छते इति सिद्धम् ।।

**पृथिवीत्वाभावस्येत्यादि** । पृथिवी जलादिभ्यो भिद्यते पृथिवीत्वात् इत्यत्र जलादिभेदव्यापकस्य पृथिवीत्वाभावस्य अभावेन पृथिवीत्वस्वरूपेण व्याप्यस्य जलादेः भेदः सिध्यति । तत्र व्यापकस्य पृथिवीत्वाभावस्य स्वरूपसंबन्धावच्छिन्नाभाव एव नियामकः, न तु पृथिवीत्वाभावनिष्ठकालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावः इत्येको नियमः । तथा तादृशपृथिवीत्वाभावाभावेन व्याप्यस्य जलादेः अन्योन्याभाव एव सिध्यति न तु अत्यन्ताभावः इत्यन्यो नियमः । अत्र किं नियामकम् इति शङ्कायां व्यतिरेक्यनुमाने येन संबन्धेन यस्य व्यापकत्वं गृह्यते तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावादेव येन यस्य व्याप्यत्वं गृहीतं तत्संबन्धावच्छिन्नप्रतियोगिताक एव तदभावःसिध्यतीति समाधानं वक्तुं तदुपयोगितया अन्वयिस्थले दृष्टान्तमाह– **यथाचेति दीधितिकारः** इत्याह ।

अन्वयिनि हि व्याप्यताघटकसंबन्धेन व्याप्यज्ञानात् व्यापकताघटकसंबन्धेनैव व्यापकं सिध्यति । तद्वत् प्रकृतेऽपि इति भावः । व्याप्यतावच्छेदकसंबन्धेनैव व्याप्यवत्ताज्ञानात् व्यापकताघटकसंबन्धेनैव व्यापकं सिध्यति इत्यत्र नियमद्वये प्रथमनियमस्य प्रयोजनमाह– **तेनेति** इत्यर्थः ।।

अत्र वक्ष्यमाणदोषद्वयं संगमयितुं **अनवतीर्णबाधस्य अभ्रान्तस्येति** । तथा हि– व्यापकताघटकसंबन्धेनैवेति नियमाभावे धूमावयवे वह्निव्याप्य-

धूमस्य समवायेन – समवायसंबन्धेन सत्त्वात् तत्र तादृशधूमवत्ताज्ञानात् संयोगेन वह्निसिद्धिः स्यादिति उक्तेः धूमावयवः न संयोगेन वह्निमान् इति बाधज्ञानादेव वारणं भवति । तथा भ्रान्तपुरुषस्य तत्रापि अनुमितेरिष्टत्वात् तदापादनं न संभवतीति च प्रत्यवस्थानं मा भूदिति एवं वक्तव्यमिति भावः ।।

व्याप्यताघटकसंबन्धेनेत्युक्तौ तु धूमावयवे संयोगेन धूमाभावान्न दोष इत्याह– **तस्येति** । व्यापकताघटकसंबन्धेनैव व्यापकं सिध्यतीति नियमस्य प्रयोजनम् पर्वते संयोगसंबन्धेन वह्निव्याप्यधूमवत्ताज्ञानात् समवायेन वह्निसिद्धि-वारणम् । तदुपपादयति– **पर्वतवृत्तिहेतुं प्रतीति** । पर्वतवृत्तिधूमालोकादिकं प्रति संयोगेन वह्नेः व्यापकत्वेऽपि समवायेन वह्नेः व्यापकत्वाभावात् न तेन संबन्धेन वह्निसिद्धिचापादनमिति भावः । **प्रकृतोपयुक्तेति । व्यापकताघटक-संबन्धेनैव** व्यापकस्याभावज्ञानात् व्याप्यताघटकसंबन्धेनैव व्याप्यस्याभावः सिध्यतीति नियमद्वयमित्यर्थः ।।

## दीधितिः

**कथमन्यथा** समवायेन वह्निविरहिणि महानसे संयोगेन, संयोगेन वा वह्निविरहिणि स्वावयवे समवायेन धूमो न निवर्तते, **निवर्तते च** संयोगेन वन्हि-विरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते ?

**तथा च** तादात्म्यसंबन्धेन जलादीनां **व्याप्यत्वग्रहात् व्यापकनिवृत्त्या** तादात्म्येनैव **तेषाम्** अभावः सिध्यति । **स एव** चान्योन्याभावः ।।

**इत्थमेव च** तादात्म्यात् वृक्षशिंशुपयोः व्याप्तिनिश्चय इति संगच्छते ।।



## गादाधरी

**एतन्नियमद्वयस्य** प्रयोजनान्तरानुरोधेनाप्यावश्यकत्वमिति दर्शयति–**कथमन्य-थेति** । **अन्यथा** एतादृशनियमानुपगमे, **इति नियमः कथमुपपद्यते** इत्यन्वयः । **महानसे संयोगेन धूमो न निवर्तत** इत्यन्वयः । महानसधर्मिकसिद्धिविषयसंयोगादि-संबन्धावच्छिन्ननिवृत्तिप्रतियोगी नेत्यर्थः । **निवर्तते चेति** । धूम इत्यनुषज्यते ।।

प्रकृतमाह–**तथाचेति** । **व्याप्यत्वग्रहात्** –स्वरूपसंबन्धावच्छिन्नपृथिवीत्वाभाव-निष्ठव्यापकतानिरूपितव्याप्यताग्रहात् । **व्यापकनिवृत्त्या**–स्वरूपसंनन्धावच्छिन्न-प्रतियोगिताकेनैव पृथिवीत्वाभावाभावेन **तेषां** जलादीनाम् । नन्वेतावतापि अत्यन्ताभाव-सिद्धिः कथं निराकृता इत्यत आह–**स एव चेति** । **सचान्योन्याभाव एवेति** योजना । **तादात्म्यसंबन्धावच्छिन्नाभावश्च** अन्योन्याभाव एव, नात्यन्ताभाव इत्यर्थः । **अतो नेतरात्यन्ताभावसिद्धिरिति** भावः । **तादात्म्यसंबन्धेन व्याप्तौ प्राचां संमतिमाह–इत्थमेव चेति** । तादात्म्यसंबन्धेन व्याप्तिस्वीकारेणैव । **इति ग्रन्थः संगच्छते** इत्यन्वयः ।।

## व्याख्या

पूर्वोक्तनियमद्वयस्य पूर्वोक्तप्रयोजनात् अन्यदपि प्रयोजनमस्तीति तन्निर्वाहायापि आवश्यकत्वं दर्शयतीत्याह–**एतन्नियमद्वयस्येति** । प्रथमनियमानभ्युपगमे महानसे, धूमव्यापकस्य वह्नेः समवायेन अभाववत्ताज्ञानात् व्याप्यस्य धूमस्य संयोगेन अभावः सिध्येत् इत्यर्थः । द्वितीयनियमानभ्युपगमे धूमावयवे धूमव्यापकवह्नेः संयोगेनाभाववत्ताज्ञानात् समवायेन धूमाभावः सिध्येत् इत्यर्थः । दीधितौ ''तादात्म्यसंवन्धेन जलादीनां व्याप्यत्वग्रहात् इत्यत्र किंनिरूपितव्याप्यत्वग्रहात् इत्याकाङ्क्षां पूरयति–**स्वरूपासंबन्धावच्छिन्नेति** । स्वरूपसंबन्धावच्छिन्ना या पृथिवीत्वाभावनिष्ठा व्यापकता तन्निरूपितव्याप्यताज्ञानात् जलादिकं पृथिवीत्वाभाव-

इत्याकारकज्ञानात् **व्यापकनिवृत्त्या**–पृथिवीत्वाभावाभावेन, पृथिवीत्वाभावनिष्ठस्वरूप-संबन्धावच्छिन्नप्रतियोगिताकाभावेनेति यावत् । तेषां जलादीनामभावः सिध्यति इति सामान्यतः अभावः इत्युक्त्या अत्यन्ताभाव-व्यावृत्तिर्न प्रतीयत इत्यतः तत्तात्पर्यार्थं स्वयमेवाह–**स एव चान्योन्याभाव इति** इत्याह टीकायां **नन्वेतावतापीत्यादिना** । एवमपि स एव चान्योन्याभाव इति यथाश्रुत**दीधित्या** तादात्म्यसंबन्धावच्छिन्नाभाव एवान्योन्याभावः नान्य इति प्रतीयते । तावता अन्यस्य अभावस्य अन्योन्या-भावत्वव्यवच्छेदसिद्धावपि प्रकृतस्य जलाद्यभावस्य अत्यन्ताभावत्वप्रतिक्षेपपरत्वं न सिध्यतीत्यतः प्रकृतानुगुणां योजनामाह–**स चान्योन्याभाव एवेति** । **एतद्विवृणोति** – **तादात्म्यसंबन्धावच्छिन्नाभावश्चेति** । अयमेवकारो न विशेष्यसंगतः, अपि तु विशेषणसंगतः । तस्य चायोगव्यवच्छेदपरत्वात् इति तात्पर्यम् । अत्र लोकानुभववत् संप्रदायानुमतिरप्यस्तीति दर्शयतीत्याह**तादात्म्यसंबन्धेन व्याप्तौ प्राचां संमतिमाहेति** । **अतो नेतरात्यन्ताभावसिद्धिरिति** । इतरपदं जलादिपरम् । जलाद्यत्यन्ताभावसिद्धिर्न, अपि तु जलाद्यन्योन्याभावस्यैव सिद्धिरिति तदर्थः ।।

## दीधितिः

**अत एव गोत्वत्वाग्रहदशायां** यत्र सास्नादिः सा गौरिति तादात्म्येन गोर्व्यापकत्व-ग्रहे सास्नादिना तादात्म्येन **गौः, तादात्म्येन गोर्व्यतिरेकाच्च** सास्नादिव्यतिरेकश्च **सिध्यति** ।।

## गादाधरी

ननु तादात्म्यसंबन्धेन व्याप्त्यनभ्युपगमे का क्षतिः । पृथिव्यां जलादिभेदसिद्धेः जलादिभेदाभावव्यापकीभूताभावप्रतियोगित्वेन पृथिवीत्वज्ञानादेव संभवात् । पृथिव्येकदेशे जलादिभेदप्रसिद्ध्या तादृशव्याप्तिग्रहसंभवस्य व्यतिरेकिणि वक्ष्यमाणत्वात् । **तादात्म्य-संबन्धेन धर्मिणो**ऽनुमितेरप्यनुभवसिद्धत्वे धर्मितादात्म्यनिष्ठव्यापकताज्ञानस्यैव



तद्धेतुतायाः स्वीकरणीयत्वात् । **असति प्रतिबन्धके** तत्तादात्म्यादिविधेयकानुमितौ तादात्म्येन तस्य विधेयत्वोपगमे क्षतिविरहात् इत्यत आह – **अत एवेति** । **अत एव** – तादात्म्येन व्याप्तिस्वी-कारादेव । **गोत्वत्वाग्रहदशायां गौः सिध्यति** इत्यन्वयः । अन्यथा तत्र गोत्वत्वरूपसाध्यतावच्छेदकानुपस्थित्या गोत्वसाध्यकानुमित्यौपयिकव्याप्तेः दुर्ग्रहतया गोसाध्यकानुमितेः, **गोतादात्म्यस्यापि** गोत्वरूपतया तन्निष्ठव्यापकताया अपि गोत्वत्वोपस्थितिमन्तरेण दुर्ग्रहतया तादात्म्यधर्मिकव्यापकताज्ञानाधीनतादात्म्य-संसर्गकगवानुमितेश्चासंभवेन अयं गौरित्याकारकानुमितेरनुभवसिद्धाया अपलापप्र-सङ्गादिति भावः ।।

## व्याख्या

**अत एवेति दीधितिग्रन्थम्** अवतारयति – **नन्विति** । पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् इत्यत्र पृथिवीत्वेन पृथिव्यां जलादिभेदसाधनाय तादात्म्यसंबन्धेन व्याप्तिः स्वीकरणीया इति महता प्रयासेन उपपादितम् । किमियता श्रमेण । तादात्म्येन व्याप्त्यनभ्युपगमेऽपि पृथिव्यामितरेभ्यो जलादिभ्यो भेदः साधयितुं शक्यते । तथा हि–पृथिवी जलादिभ्यो भिद्यते पृथिवीत्वात् । अत्र हेतौ साध्याभावव्यापकी-भूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानादेव पृथिव्यां जलादिभेदः सिध्यति । यत् जलादिभ्यो न भिद्यते न सा पृथिवी इति व्यतिरेकव्याप्तेराकारः । पृथिवीत्वं जलादिभेदा-भावव्यापकीभूताभावप्रतियोगि इति व्याप्तिज्ञानस्याकारः । एतादृशव्याप्तिविशिष्ट-पृथिवीत्ववती पृथिवी इत्याकारकपरामर्शादेव पृथिवी इतरभिन्ना इत्यनुमितिः सेत्स्यति । न चात्र साध्याप्रसिद्धिरिति शङ्कनीयम् । पृथित्वावच्छेदेन साध्याप्रसिद्धावपि पृथिवीत्वसामानाधिकरण्येन जलादिभेदप्रसिद्धेः, घटादौ पृथिव्येकदेशे जलादिभेदस्य प्रसिद्धेः इति **केवलव्यतिरेकिप्रकरणे** वक्ष्यमाणत्वात् इति भावः ।।

ननु तादात्म्यसंबन्धेन वह्निमदादिरूपधर्मिसाध्यकानुमितेरनुभवसिद्धत्वात् तदनुरोधेन तादात्म्यसंबन्धघटितव्याप्तिरावश्यकीति पूर्वमुक्तमेवेत्याशङ्क्य तत्रापि धर्मितादात्म्यहेत्वोः व्याप्तिज्ञानमेवानुमितेः कारणमिति स्वीक्रियते । अर्थात् धर्मितादात्म्यनिष्ठा या हेतुव्यापकता तत्प्रकारकज्ञानमेव धर्मिसाध्यकानुमितौ हेतुः इति स्वीक्रियते । वह्निमत्तादात्म्यं धूमव्यापकमित्याकारकज्ञानं कारणम्, न तु वह्निमत् धूमव्यापकमित्याकारकं ज्ञानं कारणमित्याह—**तादात्म्यसंबन्धेन धर्मिण** इति ।।

नन्वेवमपि व्याप्तिज्ञाने हेतुव्यापकतया यत् भाति तदेवानुमितौ विधेयतया भातीति नियमात् वह्निमत्तादात्म्ये धूमव्यापकत्वावगाहिव्याप्तिज्ञानात् अनुमितौ वह्निमत्तादात्म्यमेव विधेयतया भासेत, न तु तादात्म्येन वह्निमत् इत्याशङ्क्य वह्निमत्तादात्म्यविधेयकानुमितौ जायमानायां तादात्म्येन वह्निमदपि भासते, इत्युपगमे न काचित् क्षतिरिति समाधत्ते – **असति प्रतिबन्धक** इति । तथा च तादात्म्यसंबन्धेन व्याप्तिर्मास्तु इति शङ्का । तां समाधत्ते **दीधितौ अत एवेत्यादिनेति** भावः । **अत एव**–तादात्म्यसंबन्धेन व्याप्तिस्वीकारादेव **गोत्वत्वाग्रहदशायां गौः सिध्यतीत्यन्वयः** ।।

यत्र सास्नादिः सा गौः इति व्याप्तिज्ञानात् सास्नादिमत्त्वहेतुना अयं गौः इत्याकारकानुमितिः अनुभवसिद्धा । तादृशानुमितिश्च गोत्वत्वानुपस्थितिदशायां जायमानतया तादात्म्यसंबन्धेन गोसाध्यिका, न तु गोत्वसाध्यिका । तथात्वे ''गोत्वं सास्नादिव्यापकम्'' इत्याकारकज्ञानं कारणमिति वाच्यम् । तस्मिन् ज्ञाने सास्नादिव्यापकत्वं प्रति गोत्वस्य विशेष्यतया भानात् जातेर्यत्र विशेष्यतया भानं तत्र किंचिद्रूपेण भानमिति नियमात् गोत्वत्वेन गोत्वभानं वक्तव्यम् । ततश्च गोत्वत्वानुपस्थितिदशायामुक्तविधव्यापकताज्ञानासंभवात् गोत्वसाध्यकत्वमनुमितेर्न संभवतीति तादात्म्येन गोसाध्यकत्वं वक्तव्यम् । तच्च तादात्म्येन व्याप्तिस्वीकार



एवोपपद्यते । तदानीं गव्येय व्यापकत्वं व्याप्तिज्ञाने भासते । गोः गोत्वेन व्यापकताज्ञाने भानम् । गोत्वत्वं तु तत्र न भासते । अतः गोत्वत्वानुपस्थितिदशायां जायमाना इयं गौः इत्यनुमितिः तादात्म्येन व्याप्त्यनुपगमे न सिध्यतीति भावः ।।

ननु तादात्म्येन गोसाध्यकस्थले गोतादात्म्यधर्मिकव्यापकताज्ञानमेव कारणमस्तु, न तु गोत्वधर्मिकम् उक्तदोषात् इत्याशङ्क्याह–**गोता-दात्म्य-स्यापीति** । गोतादात्म्यस्यापि गोवृत्त्यसाधारणगोत्वरूपतया तद्धर्मिकहेतुव्यापकताज्ञानमपि गोत्वत्वानुपस्थितिदशायां न संभवतीति भावः । एवं च गोत्वत्वानुपस्थितिदशायां जायमाना अयं गौरित्याकारकानुमितिः तादात्म्यसंबधेन व्याप्तिस्वीकारादेव संभवतीति भावः ।।

## गादाधरी

**यद्यपि** गोत्वांशे गोत्वत्वं धर्मितावच्छेदकीकृत्य व्यापकतावच्छेदकत्वाव-गाहिग्रह एव गोत्वेन गोसाध्यकानुमितावपि हेतुः वाच्यः, **निधर्मितावच्छेदकक**व्यापकतावच्छेदकत्वग्रहस्य व्यभिचारज्ञानाप्रतिबध्यतया अनुमित्यजन-कत्वादिति तादात्म्येन गोत्वावच्छिन्नसाध्यकानुमितिरपि गोत्वत्वानुपस्थितिदशायां न संभवति; **तथापि वक्ष्यमाण**प्रतियोगिताधर्मिकोभयाभावघटितलक्षणा-भिप्रायेणेदमभिहितम् ।।

तन्मते–स्वरूपतः साध्यतावच्छेदकप्रकारिकायाम् अनुमितौ स्वरूपतः साध्यतावच्छेदकप्रकारकस्य साधनवन्निष्ठाभावप्रतियोगित्वत्वावच्छेदेन साध्यतावच्छेदकरूपावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावावगाहिज्ञानस्य हेतुतया तत्र गोत्वत्वज्ञानानपेक्षणेनानुपपत्त्यभावात् । **ईदृशयुक्त्या** तादात्म्येन व्यापकतासिद्धिवत् गोत्वत्वाग्रहदशायां यत्र गौस्तत्र सास्नादिरितिव्याप्तिग्रहाधीनगवादिहेतुकसास्नादिसिद्ध्यनुरोधात् तत्संबन्धेन व्याप्यतासिद्धिरपि द्रष्टव्या ।।

## व्याख्या

गोत्वत्वानुपस्थितिदशायां तादात्म्यसंबन्धेन गोसाध्यकानुमितेरप्यनुपपत्तिरिति शङ्कते–**यद्यपीत्यादिना** । हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिरिति मत्त्वा तादात्म्येन गोसाध्यकस्थले गोविशेष्यकसास्नाव्यापकत्वावगाहि व्याप्तिज्ञानं कारणम्, तत्र सास्नादिव्यापकत्वविशेष्यतया गोः गोत्वेन भानात् गोत्वत्वानुपस्थितिदशायामपि तादात्म्येन गोसाध्यकानुमितिः संभवतीति पूर्वमुक्तम् । तदुपरि पुनः शङ्कते–हेतुव्याकता-वच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं निष्कृष्टव्याप्तिः । तादात्म्येन गोसाध्य-कानुमितौ साध्यतावच्छेदकं भासते । तादृशगोत्वावच्छिन्नगोसाध्यकानुमितिं प्रति सास्नादिव्यापकतावच्छेदकं गोत्वम् इत्याकारकं ज्ञानं कारणम् । तत्र व्यापकता-वच्छेदकत्वधर्मितावच्छेदकतया गोत्वत्वभानमावश्यकम् । तथाच गोत्वत्वज्ञानाभावदशायां कथं गोत्वावच्छिन्नगोसाध्यकानुमितिर्भवितुमर्हतीति शङ्का । ननु व्यापकतावच्छेदकत्वं प्रति धर्मितया गोत्वभानेऽपि गोत्वे गोत्वत्वभानं कुतः? धर्मितावच्छेदकं गोत्वत्वं विनापि गोत्वभानं कुतो न भवतीत्यत्राह–**निर्धर्मितावच्छेदकेति** । गोत्वं सास्नादिमत्त्व-समानाधिकरणाभावप्रतियोगितावच्छेदकम् इत्याकारकगोत्वत्वावच्छिन्नविशेष्यकव्य-भिचारज्ञानप्रतिवध्यत्वं पूर्वोक्तव्यापकतावच्छेदकत्वप्रकारकगोत्वत्वावच्छिभविशेष्यक-व्याप्तिज्ञानस्य भवेत्, न तु स्वरूपतो गोत्वविशेष्यकव्यापकतावच्छेदकप्रकारकव्याप्ति-ज्ञानस्येति व्यभिचारज्ञानस्य व्याप्तिग्रहप्रतिबन्धकत्वं, व्याप्तिज्ञानस्य व्यभिचारज्ञानप्रति-वध्यत्वं च निर्वोढुं व्याप्तिज्ञाने गोत्वत्वेन गोत्वभानं स्वीकार्यम् । ततश्च गोत्वत्वानुपस्थिति-दशायां तादात्म्येन गोसाध्यकानुमितिः कथं निर्वहति इति शङ्का अवतिष्ठते ।।

तत्र समाधानमाह–**तथापि वक्ष्यमाणेत्यादिना** । प्रतियोग्यनधिकरणहेतुमन्निष्ठा-भावीयप्रतियोतिगतासामान्ये यद्धर्मावच्छिन्नत्वयत्संवन्धावच्छिन्नत्वोभयाभावः तद्धर्मा-वच्छिन्नसामानाधिकरण्यं हेतोः व्याप्तिः इति वक्ष्यमाणकल्पानुसारेण इदमुक्तम् ।।



तत्कल्पे यत्र यादृशं साध्यतावच्छेदकं विशिष्टम् अविशिष्टं वा तत्परत्वात् यत्पदस्य निरवच्छिन्नसाध्यतावच्छेदककानुमितौ निरवच्छिन्नसाध्यतावच्छेद-कावच्छिन्नघटितोभयाभावावगाहिव्याप्तिज्ञानस्यैव अनुमितिं प्रति हेतुत्वात् गोत्वत्वाद्यनुपस्थितिदशायामपि स्वरूपतो गोत्वावच्छिन्नत्वघटितोभयाभावावगाहि-व्याप्तिज्ञानात् स्वरूपतो गोत्वसाध्यतावच्छेदककानुमितिः निर्वहतीति भावः । एतदुक्तं भवति– निरुक्ताभावघटितव्याप्तौ यद्धर्मावच्छिन्नत्वयत्संवच्छावच्छिन्नत्वोभयाभावः प्रविष्टः। तत्र यद्धर्मपदेन विवक्षितं साध्यतावच्छेदकं प्रकृते गोत्वं, तत् अवच्छिन्नत्वांशे प्रकारतया भासते । अतः तस्य स्वरूपतो भानं भवितुमर्हति । जातेर्यत्र विशेष्यतया भानं तत्रैव किंचिद्रूपेण भानमिति नियमात् इति ।।

**ईदृशयुक्त्येति** । जातेर्यत्र प्रकारतया भानं तत्र स्वरूपतो भानमिति युक्त्या गोत्वत्वाग्रहेऽपि तादात्म्येन गोः व्यापकतासिद्धिवत् (साध्यत्वसिद्धिवत्), गोत्वत्वा-ग्रहेऽपि यत्र गौः तत्र सास्नादिः इति व्याप्तिग्रहाधीनायाः तादात्म्येन गवादिहेतुकायाः सास्नादिसिद्धेरनुरोधात् तादात्म्येन गवादेः व्याप्यत्वमपि सिध्यति इति भावः ।।

ततश्च इयं तादात्म्येन गौः सास्नादिमत्त्वात् इतिवत् इयं सास्नादिमती तादात्म्येन गोः इत्यपि अनुमानप्रयोगः कर्तुं शक्यत इति भावः । इत्थं च तादात्म्येन साध्यत्वं, तादात्म्येन हेतुत्वं च सिध्यतीति सारांशः ।।

**दीधितौ तु** एकत्रैव गोसाध्यकसास्नाहेतुकस्थले अन्वयव्याप्तिः व्यतिरेकव्याप्तिश्च प्रदर्शिता ।।

गादाधर्यां व्याख्यायां तु गोसाधनकसास्नादिसाध्यकस्थले यत्र गौः तत्र सास्नादिरिति अन्वयव्याप्तिमात्रं प्रदर्शितम् । यत्र सास्नाद्यभावः तत्र तादात्म्येन गोरभावः (गोभेदः) इति व्यतिरेकव्याप्तिर्न प्रदर्शिता । सा च ऊहनीयेति तात्पर्यम्–इति सूक्ष्मम् अवधेयम् ।।

## गादाधरी

**केचित्तु**–तादात्म्यसंबन्धेन व्यापकत्वानुपगमेऽपि गवान्यावृत्तित्वरूपव्याप्तिज्ञानात् गोत्वविधेयकानुमितिः निष्प्रत्यूहैव । तथा सति अयं गौः इत्याकारकतापि अनुमितेर्निर्वहति । स्वरूपतो गोत्वावगाहिनः गवान्यावृत्तित्वज्ञानात् स्वरूपत एव गोत्वविषयिण्याः तस्याः संभवात् ।।

**न चानवच्छिन्नविधेयतायाः** अक्लृप्तत्वात् तादात्म्यसंबन्धेन गोरेव विधेयत्वमुचितम्; **अयं गौरित्यादि**वाक्यजन्यबोधे तादात्म्यसंबन्धावच्छिन्न-विधेयतायाः क्लृप्तत्वात् इति वाच्यम् ।।

**अयं गौः** इत्याकारके इदंत्वावच्छिन्नविशेष्यकगोत्वादिप्रकारकप्रत्यक्षे या गोत्वादिप्रकारता तस्या एव विधेयतात्वोगमे अनुमितौ तत्कल्पने अतिरिक्तविधेयताकल्पनाभावात् ।।

**अस्तु वा** गवान्यावृत्तित्वरूपव्याप्तिज्ञानादेव तादात्म्येन गवानुमितिः, किं तादात्म्येन व्यापकतयेत्याशङ्कानिराचिकीर्षया उक्तम्–**गोत्वत्वाद्यग्रहदशाया-मिति** । गवेतरावृत्तित्वस्य हेतुभूतसास्नादावग्रहदशायामित्यर्थ इत्याहुः ।।

**तन्न** । गवेतरावृत्तित्वमात्रस्य **गोत्वत्व**शब्दार्थताविरहेण उदक्षरतायाः दुर्वारत्वात् । गोत्वत्वपदं तद्वृत्तिधर्मपरम् इति तु न सम्यक् । गोत्वत्वस्य विशिष्टगोवृत्तित्वरूपस्य स्वरूपतो भानासंभवेन तज्ज्ञानदशायां तद्वृत्तिधर्मभानस्य आवश्यकत्वात् ।।

## व्याख्या

स्वरूपतो गोत्वविधेयकानुमितिनिर्वाहाय तादात्म्यसंबन्धेन हेतुव्यापकत्वं स्वीकरणीयमिति **दीधितौ** उक्तम् । अत्र केचित्–तादात्म्येन व्यापक-त्वानङ्गीकारेऽपि गोत्वविधेयकानुमितिर्निर्वहति । यद्यपि हेतुव्यापकसाध्यसामाना-



धिकरण्यरूपव्याप्तिज्ञानमनुमितिहेतुरिति पक्षे व्यापकत्वविशेष्यतया भासमानस्य गोत्वस्य गोत्वत्वेन भानमावश्यकम् । अतः अनुमितावपि गोत्वत्वेनैव गोत्वभानं स्यात् । परं तु साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानं गोत्वत्वानुपस्थितिदशायामपि भावितुमर्हति । प्रकृते सास्नादिकं गवान्यावृत्ति इति व्याप्तिज्ञानस्य आकारः । गोत्ववदन्यावृत्तीति तदर्थः । अस्मिन् गोत्वस्य प्रकारतया भानात् स्वरूपेण भानम् । यत्र जातेः विशेष्यतया भानं तत्रैव किंचिद्रूपेण भानमिति नियमः । स्वरूपतो गोत्वभानादेव गोत्वविधेयकानुमितेः अयं गौः इत्याकारतापि उपपद्यते ।।

ननु वह्निमान् धूमात् इत्याद्यनुमितिषु वह्न्यादिनिष्ठविधेयतायाः वह्नित्वत्वादि-धर्मावच्छिन्नत्वस्यैव दर्शनात् तदनुरोधेन विधेयतायाः किंचिद्धर्मावच्छिन्नत्वमिति नियमात् ''अयं गौः'' इत्यत्र चानुमितौ गोत्वनिष्ठविधेयतायाः अनवच्छिन्नायाः स्वीकर्तुमशक्यत्वात् तादात्म्येन गोरेवात्र विधेयत्वं वक्तव्यम् । तदा गोनिष्ठविधेयतायाः गोत्वावच्छिन्नत्वात् पूर्वोक्तनियमः संगतो भवतीति नानुपपत्तिः इति शङ्कते–**न चानवच्छिन्नविधेयताया** इति ।।

ननु अनवच्छिन्नविधेयता यथा अप्रसिद्धा, तथा तादात्म्यसंबन्धावच्छिन्ना विधेयतापि अप्रसिद्धेति दोषसाम्यमिति शङ्कामपनुदति– **अयं गौरिति** । अयं गौरिति शाब्दबोधे समानविभक्तिकपदसमभिव्याहारात् तादात्म्यसंबन्धावच्छिन्नगोनिष्ठविधेयताशालिशाब्द-बोधस्य सर्वसंमततया तत्र तादात्म्यसंबन्धावच्छिन्नविधेयतायाः क्लृप्तत्वात् न दोषसाम्यमिति भावः ।।

समाधत्ते– **अयं गौरिति** । अयं गौरिति प्रत्यक्षे इदमर्थः विशेष्यः गोत्वं स्वरूपत एव प्रकारः । तथा च प्रत्यक्षे प्रसिद्धायाः गोत्वनिष्ठप्रकारतायाः अनुमितौ विधेयतात्वोप-गमेनानुमितौ अतिरिक्तविधेयत्वाकल्पनेनादोषादिति भावः ।।

ननु उक्तयुक्त्या गोत्वत्वाग्रहदशायां गोत्वविधेयकानुमितेः निर्वाहेऽपि तादात्म्येन गोरेव विधेयतानिर्वाहाय तादात्म्येन गोः व्यापकत्वमावश्यकमिति शङ्कायामाह– **अस्तु वेति** । स्वरूपतो गोत्वावगाहिगवान्यावृत्तित्वरूपव्याप्तिज्ञानादेव तादात्म्येन गोविधेयकानुमितिरस्तु, न तु तदर्थं सिद्धान्तव्याप्तिलक्षणमनुसृत्य तादात्म्येन गोर्व्यापकत्वम् इति शङ्कापरिहाराय **दीधितौ– गोत्वत्वाग्रहदशायाम्** इत्युक्तम् । तथा च **गोत्वत्वाग्रहदशायाम्**– गवान्यावृत्तित्वरूपव्याप्त्यग्रहदशायाम् व्यापकताघटित-व्याप्तिज्ञानस्यैव कारणतायाः वक्तव्यतया तत्र च गोत्वत्वेनैव गोत्वभानमिति अयं गौः इत्याकारक–स्वरूपतोगोत्वप्रकारकानुमितिर्न निर्वहतीति–स्वरूपतो गोत्वप्रकारक-गोविधेयकतादात्म्यसंसर्गकानुमितिर्ननिर्वहति इति तदर्थं तादात्म्येन गोरेव व्यापकत्व-मङ्गीकरणीयमिति भावः ।।

एतद्व्याख्यानं दूषयति–**तन्ने**त्यादिना । गवेतरावृत्तित्वमात्रस्य गोत्वत्वपदार्थत्वं नास्ति । गवेतरावृत्तित्वे निखिलगोवृत्तित्वं हि गोत्वत्वपदार्थः । तत्र एकदेशपरित्यागे उदक्षरत्वात्–यथाश्रुतशब्दार्थत्वाभावात्–इति अस्वरसः । अपि च गवेतरावृत्तित्वमात्रस्य गोत्वत्वशब्दार्थत्वे तस्य सास्नादिमत्त्वसाधारण्यात् गोत्वरूपजात्यसाधारणत्वाभावात् विशिष्टस्यैव गोत्वत्वशब्दार्थत्वमित्याशयः । ये तु उक्तदोषवारणाय गोत्वत्वाग्रहदशाया-मित्यत्र गोत्वत्वपदस्य तद्वृत्तिधर्मपरत्वमुपगम्य गोत्वत्वाज्ञानमुपपादयन्ति तेषां मतमनूद्य खण्डयति–**गोत्वत्वेति** । गोत्ववृत्तिधर्मस्य गवेतरासमवेतवविशिष्ट निखिलगोवृत्तित्व-रूपतया तस्यापि जात्यखण्डोपाध्यतिरिक्तस्य स्वरूपतो भानासंभवेन तज्ज्ञानदशायां तद्वृत्तिधर्मभानस्यावश्यकवात् तथा विवक्षायामयि अभिमतानिर्वाहादिति भावः ।।

## गादाधारी

**अपरे तु**–गोत्वत्वाग्रहदशायामपि गौःसिध्यतीत्यन्वयः । यदा गोत्वत्वमनुमितौ न भासते तदापि तत्र गौः भासत इत्यर्थः । स्वरूपतो गोत्वादिप्रकारिका गवाद्यनुमितिर्भव-



तीति यावत् । तादात्म्येन व्यापकतानुपगमे गोत्वस्यैव सास्नादिलिङ्गकानुमितौ भानस्य उपगन्तव्यतया विधेयतायाश्चावच्छिन्नत्वनियमेन स्वरूपतो गोत्वप्रकारकानु-मितेरनुभवसिद्धाया अनुपपत्तिरित्युपष्टम्भसंगतिः इति प्राहुः ।।

## व्याख्या

गोत्वत्वाग्रहदशायामित्यत्र ग्रहपदं भानार्थकम् । गौः सिध्यति इत्यस्य गौर्भासते इत्यर्थः । भानाभानयोश्चाधिकरणमनुमितिरिति व्याचक्षणानां मतमाह—**अपरे त्विति** । यदा गोत्वत्वमनुमितौ न भासते, तदापि तत्र गौर्भासते–गोत्वत्वभानं विनापि अनुमितौ गोर्भानमित्यर्थः । स्वरूपतो गोत्वप्रकारिका गोविषयकानुमितिर्भवतीति यावत् । तादात्म्येन व्यापकत्वानुपगमे व्याप्तिज्ञाने व्यापकत्वधर्मितया गोत्वस्य भानमङ्गीकार्यम् । ततश्च व्यापकताज्ञाने येन रूपेण यत् भासते तस्यैव तेन रूपेण विधेयतया अनुमितौ भानमिति नियमात् स्वरूपतो गोत्वप्रकारकानुमितेः अनुभवसिद्धायाः अनुपपत्तिः इति भावः । अस्मिन्मतेऽपि गोत्वत्वाग्रहदशायामित्यस्य गोत्वत्वा-भानदशायामित्यर्थवर्णनात् अस्वारस्यम् । अग्रहदशायामित्यस्य ज्ञानाभावदशायामित्यर्थः स्वारसिकः ।।

अपि च तादात्म्येन गौर्भासते इत्युक्त्यैव गोत्वत्वाविषयकत्वस्यानुमितौ लाभात् गोत्वत्वाग्रहदशायामित्यस्य वैयर्थ्यं चेत्यस्वरसः ।।

## गादाधरी

**यत्तु** अवच्छेदकांशे तादात्म्यसंबन्धेन स्वरूपतः साध्यतावच्छेदकप्रकारकज्ञानात्, अनवच्छेदकत्वांशे आधेयतासंबन्धेन स्वरूपतः तत्प्रकारकज्ञानाद्वा स्वरूपतः तत्प्रकार-कानुमितिः इत्युपगमेन गोत्वत्वाग्रहदशायामपि तादात्म्येन व्यापकताज्ञानात् अनुमितिर्निर्वहतीति नोक्तानुपपत्तिरिति ।।

**तदसत्** । अयं गौरित्यादिज्ञानानुव्यवसाये स्वरूपतो गोत्वादिविशेषितप्रकारिताप्रकारेण ज्ञानभानात्, समवायातिरिक्तेन निरूपितत्वसंबन्धेन गोत्वादेः स्वरूपतः प्रकारतायाः आवश्यकत्वेऽपि समवायातिरिक्तेनापरसंबन्धेन स्वरूपतः प्रकारतायाः अप्रामाणिकत्वात् । **अन्यथा** व्यापकताज्ञानहेतुतामते स्वरूपतो ज्ञानत्वादेः विधेयतावच्छेदकत्वानुपपत्त्या केवलान्वयिग्रन्थे तज्ज्ञानस्यानुमितिहेतुताखण्डनं **दीधितिकृतो** विरुध्येत । उक्तक्रमेणैव तन्निर्वाहात् । **न च तथापि** प्रतियोगिताधर्मिकोभयाभावघटितलक्षणाभिप्रायकतयापि न तद्ग्रन्थसंगतिरिति वाच्यम् । **प्रकारित्वांश** इव अवच्छेदकत्वांशेऽपि निरूपितत्वसंबन्धेन जातेः स्वरूपतः प्रकारताभिप्रायेण एतद्ग्रन्थसंगमनेऽपि अस्याप्रामाणिकत्वाभिप्रायेण अग्रिमव्यापकताज्ञानहेतुताखण्डनसंगतेः ।।

## व्याख्या

गोत्वत्वाग्रहदशायामित्यादिदीधितिग्रन्थस्य प्रकारान्तरेण व्याख्यानं कुर्वतां मतमाह– **यत्तु** इति । अयं तेषामाशयः–सास्नादिहेतुकां ''तादात्म्येन इयं गौः'' इत्याकारकतादात्म्यसंसर्गकगोविधेयकानुमितिं प्रति गोत्वं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकम् इत्याकारकं गोत्वरूपसाध्यतावच्छेदकविशेष्यकं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वप्रकारकं व्याप्तिज्ञानं न कारणम् । येन तस्मिन् ज्ञाने गोत्वस्य विशेष्यतया भानात् गोत्वत्वस्य गोत्वांशे भानमावश्यकमिति गोत्वत्वोपस्थितिरपेक्षिता स्यात् । किं तु हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं तादात्म्येन गोत्ववत् (गोत्वाभिन्न) इत्याकारकं प्रतियोगितानवच्छेदकविशेष्यकं गोत्वप्रकारकं व्याप्तिज्ञानं कारणम् । अस्मिन् व्याप्तिज्ञाने प्रकारतया भासमानस्य गोत्वस्य स्वरूपतो भानसंभवात् गोत्वत्वाग्रहदशायाम् उक्तव्याप्तिज्ञानात् गोत्वावच्छिन्नगोनिष्ठविधेयताकतादात्म्यसंसर्गकगवानुमितिः निर्वहति ।।



अथवा उक्तविधानुमितिं प्रति हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेकत्वं आधेयतासंबन्धेन गोत्ववत् (गोत्वनिष्ठम्) इत्याकारकव्याप्तिज्ञानं कारणम् । अस्य ज्ञानस्यापि स्वरूपतो गोत्वप्रकारकत्वात् गोत्वत्वस्य उपस्थितिः नापेक्षिता इति यत्तुकाराणामाशयः ।।

पूर्वं ज्ञानं अनवच्छेदकविशेष्यकम् तादात्म्येन गोत्वप्रकारकम् । द्वितीयज्ञानम् अनवच्छेदकत्वविशेष्यकम् आधेयत्वसंबन्धेन गोत्वप्रकारम् इति भेदः उभयत्रापि गोत्वस्य स्वरूपतोभानम् । उभयत्रापि गोत्वस्य प्रकारत्वात् विशेष्यतया भान एव गोत्वत्वज्ञानस्यापेक्षणात् इति सारम् ।।

तन्मतं खण्डयति–**तदसत्** इत्यादिना । अयं भावः–अयं गौः, अयं घटः, अयं पट इत्यादिप्रतीतियु गोत्वघटत्वादि–प्रकारकगोघटादिविशेष्यिकासु गोत्वघटत्वादिजातेः समवायेन स्वरूपतः प्रकारत्वमानुभविकम् ।।

तथा अयं गौरित्याकारकज्ञानविषयको योऽनुव्यवसायः गोत्वेन इमं जानामि इत्याद्याकारकः तस्मिन् गोत्वं गौः ज्ञानं च विषयः । गोत्वप्रकारकत्वेन गोविशेष्यकत्वेन ज्ञानं भासते । गोत्वस्य निरूपितत्वसंबन्धेन ज्ञाननिष्ठप्रकारितायां स्वरूपतो भानम् ।।

एवं च ज्ञानेषु समवायसंबन्धेन वा निरूपितत्वसंबन्धेन वा जातेः स्वरूपतो भानं (प्रकारत्वम्) आवश्यकम् । तथापि समवाय-निरूपितत्वाभ्यामतिरिक्तेन संबन्धेन स्वरूपतः जातेः प्रकारत्वे प्रमाणाभावात् गोत्वस्य तादात्म्यसंबन्धेन अनवच्छेदकांशे, आधेयत्वसंबन्धेन अनवच्छेदकत्वांशे स्वरूपतः प्रकारत्वासंभवेन **यत्तुकारोक्ता** रीतिः न संभवतीति ।।

**अन्यथेति** । समवायनिरूपितत्वाभ्यामतिरिक्तेन संबन्धेन जातेः स्वरूपतो भाने इत्यर्थः ।।

**केवलान्वयिग्रन्थे दीधितिकारेण** हेतुव्यापकताघटितव्याप्तिज्ञानस्य अनुमितिहेतुत्व-खण्डनावसरे अयं ज्ञानवान् आत्मत्वात् इत्यादिस्थले स्वरूपतः ज्ञानत्वविधेयतावच्छेदक-कानुमितिः अनुभवसिद्धा । व्यापकताज्ञानस्य अनुमितिहेतुत्वे ज्ञानरूपसाध्ये हेतुव्यापकताभाने साध्यतावच्छेदकस्य ज्ञानत्वस्य हेतुव्यापकतावच्छेदकतया भानमावश्वकम् । तादृशज्ञाने च आत्मत्वव्यापक-तावच्छेदकं ज्ञानत्वम् इत्याकारके व्यापकतावच्छेदकत्वविशेष्यतया ज्ञानत्वभानात् ज्ञानत्वत्वेन ज्ञानत्वभानं वक्तव्यम्। तथासति अनुमितावपि ज्ञानत्वत्वेनैव ज्ञानत्वस्य भानं स्यात् । व्यापकतावच्छेदकत्वज्ञाने साध्यतावच्छेदकस्य यादृशं भानं तादृशमेव भानमनुमितावपीति नियमात् । न तु स्वरूपतो ज्ञानत्वरूपविधेयतावच्छेदकस्य भानम् इति वक्ष्यते ।।

तन्न संगच्छते–तत्रापि **यत्तुकारोक्तरीत्या** अनवच्छेदकांशे तादात्म्येन ज्ञानत्व-प्रकारकात्, अनवच्छेदकत्वांशे आधेयतासंबन्धेन ज्ञानत्वप्रकारकाद्वा व्यापकताघटित-व्याप्तिज्ञानात् स्वरूपतो ज्ञानत्वप्रकारकानुमितेर्निर्वाहात् इति भावः ।।

ननु प्रतियोगिताधर्मिकोभयाभावावगाहिव्याप्तिज्ञानकारणतापक्षेऽपि केवलान्वयि-ग्रम्थस्था **दीधितिरसंगतैव** । ज्ञानवान् आत्मत्वात् इत्यत्र हेतुसमानाधिकरणा-भावीयप्रतियोगितायां ज्ञानत्वावच्छिन्नत्वघटितोभयाभावावगाहिज्ञानस्य हेतुताया वक्तव्यत्वात् । तत्रावच्छेद्यत्वांशे निरूपितत्वसंबन्धेन ज्ञानत्वस्य स्वरूपतो भानस्य स्वीकरणीयतया ज्ञानत्वत्वेन ज्ञानत्वभानाभावात् इति शङ्कते–**न च तथापीति** । समाधत्ते–**प्रकारित्वांश इवेति** ।।

अयं गौः इति ज्ञानानुव्यवसाये अहं गोत्वेनेमं जानामीत्याकारके प्रकारितायां निरूपितत्वसंबन्धेन स्वरूपतो गोत्वस्य प्रकारत्वात् अवच्छेद्यत्वांशेऽपि निरूपितत्व-संबन्धेन जातेः स्वरुपतः प्रकारत्वम् इत्यभिप्रायेण गोत्वत्वाग्रहदशायामिति प्रकृतग्रन्थाशयः ।।



तादात्म्यसंबन्धेन आधेयतासंबन्धेन वा जातेः स्वरूपतो भानं संभवतीत्याशयेन केवलान्वयिदीधितिग्रन्थाशयः । अतो न पूर्वापरविरोधः ।।

## गादाधरी

**परे तु** – गोत्वत्वाद्यग्रहदशायामपि स्वरूपतो भासमानगोत्वावच्छिन्ने हेतुमन्निष्ठभेद-प्रतियोगितानिरूपिततादात्म्यसंबन्धावच्छिन्नावच्छेदकत्वाभावरूपान्योन्याभाव-घटित-तादात्म्यसंबन्धावच्छिन्नव्यापकताज्ञानात् तादात्म्येन स्वरूपतो गोत्वप्रकारकानुमितिः संभवत्येव । **एकरूपेणा** अवच्छेदकेऽपि अवच्छेदकतानवच्छेदकरूपेण अवच्छेकत्वाभावं स्वीकृत्यैव अन्योन्याभावघटितलक्षणस्य ग्रन्यकृता यद्रूपावच्छिन्नभमित्यादिना परिष्करणीयत्वात् एतदभिप्रायेणैव तत्संगतेः ।।

**केवलान्वयिग्रन्थे** च **प्रतियोगिनि** प्रतियोगितानवच्छेदकरूपेण प्रतियोगित्वा-भावस्येव अवच्छेदकेऽपि अवच्छेदकतानवच्छेदकरूपेण अवच्छेदकत्वभानस्य अप्रामाणिकतया व्यापकताज्ञाने साध्यतावच्छेदकस्य स्वरूपतो भानं न संभवतीत्यभि-प्रायेण व्यापकताज्ञानहेतुतामते स्वरूपतो ज्ञानत्वादिप्रकारकानुमितेरनुपपत्तेर्वक्ष्यमाणतया न पूर्वापरग्रन्थविरोधः इति **प्राहुः** ।।

**तादात्म्येन गोर्व्यतिरेकाच्चेति** । तादात्म्यसंबन्धावच्छिन्न प्रतियोगिताकात् तादात्म्यसंबन्धघटितव्यापकताबच्छेदकगोत्वावच्छिन्नस्य भेदरूपाभावादित्यर्थः । समवायसंबन्धावच्छिन्नगोत्वाभावस्य साधकत्वेऽपि तत्प्रतियोगितावच्छेदकगोत्वत्वाद्य-ग्रहदशायां तदभावस्य ज्ञानासंभवेन ततः सास्नाभावसिद्ध्यसंभवादिति भावः ।।

(गोत्वावच्छिन्नत्वप्रकारकप्रतियोगिताज्ञाने अवच्छेद्यतायां निरूपितत्वसंबन्धेन स्वरूपतो गोत्वप्रकारकत्वं **दीधितिकारस्य** असंमतमेव । तथा सत्यपि अग्रिम-ग्रन्थविरोधात् इत्यवधेयम् ।।)

## व्याख्या

मतान्तरमाह—**परे त्विति** । अत्यन्ताभावघटितव्याप्तिवत् अन्योन्याभावघटितापि व्याप्तिः ग्रन्थकृता वक्ष्यते । सा च हेतुसमानाधिकरणभेदप्रतियोगितानिरूपिततादात्म्य-संबन्धावच्छिन्नावच्छेदकत्वाभाववत्साध्यसामानाधिकरण्यरूपा । पर्वतो वह्निमान् धूमात् इत्यत्र हेत्वधिकरणपर्वतवृत्तिः भेदः तादात्म्यसंबन्धेन घटविशिष्टघटभेदः (घटाभिन्नघटभेदः) तन्निरूपितप्रतियोगिता घटवन्निष्ठा तदवच्छेदकता घटनिष्ठा, सा तादात्म्यसंबन्धावच्छिन्ना, ततश्च पर्वतनिष्ठभेदप्रतियोगितानिरूपिततादात्म्यसंबन्धावच्छिन्नावच्छेदकतावद्घटभिन्नः वह्निः तत्सामानाधिकरण्यं धूमेऽस्तीति लक्षणसमन्वयः ।।

पर्वतो धूमवान् वह्नेरित्यत्र धूमाभिन्नधूमवद्भेदः वह्न्यधिकरणायोगोलकवृत्तिः तत्प्रतियोगितानिरूपिततादात्म्यसंबन्धावच्छेदकतावान् धूमः तद्भिन्नत्वं साध्ये धूमे नास्तीति नातिव्याप्तिः ।।

प्रकृते गोमान् सास्नादिमत्त्वात् इत्यत्र हेत्वधिकरणे गवि गवाभिन्नसास्नादिमान् न इति प्रतीतिसिद्धो भेदः न भवति, अपितु घटाभिन्नघटभेदः तन्निरूपितप्रतियोगिता-निरूपिततादात्म्यसंबन्धावच्छेदकतावान् घटत्वावच्छिन्नो घटः तद्भिन्नत्वं साध्ये गव्यस्तीति लक्षणसमन्वयः । अत्र व्याप्तिज्ञाने गोत्वस्य विशेषणतया भानात् स्वरूपतो भानम्, न तु गोत्वत्वेन । अतः गोत्वत्वाग्रहदशायामपि तादात्म्येन गौः सिध्यति—अनुमितिविषयो भवति । व्याप्तिज्ञाने साध्यस्य यादृशं भानं, तादृशमेव अनुमितावपि तस्य भानमिति नियमोऽपि रक्षितो भवतीति तेषामाशयः ।।

नन्वेवमपि सास्नादिमत्त्वसमानाधिकरणो यो भेदः नीलगवाभिन्नगोभेदः (हेत्वधिकरणे श्वेतगवि वर्तमानः) तन्निरूपितप्रतियोगितायां तादात्म्यसंबन्धेन नीलगोत्वावच्छिन्नस्या-वच्छेदकत्वात् गोत्वावच्छिन्नेऽप्यवच्छेदकत्वमावश्यकम् । विशिष्टशुद्धयोरनतिरेकात्



इत्याशङ्कायामाह—**एकरूपेणेति** । नीलगोत्वेन रूपेण अवच्छेदकेऽपि गवि गोत्वेन रूपेणावच्छेदकत्वाभावमभ्युपगम्यैव अन्योन्याभाव-घटितव्याप्तेः **यद्रूपावच्छिन्नमित्यादिना ग्रन्थकारेण** परिष्करणीयत्वात् ।।

नन्वेवं केवलान्वयिग्रन्थविरोधः कथं परिहरणीयः । ज्ञानवान् आत्मत्वा-दित्यत्रापि उक्तरीया व्यापकताज्ञानकारणतामते स्वरूपतो ज्ञानत्वभानसंभवात् इत्यत आह—**केवलान्वयिग्रन्थे चेति** । वह्निमान् धूमात् इत्यादौ धूमसमानाधिकरणवह्निविशेषा-भावप्रतियोगिनि–महानसीयवह्न्यभावप्रतियोगिनि वह्नौ वह्नित्वावच्छेदेन प्रतियोगित्वा-भानवत् अवच्छेदकेऽपि अन्यरूपेणावच्छेदकत्वाभानस्य अप्रामाणिकत्वाभिप्रायेण साध्यतावच्छेदकस्य स्वरूपतो भानं व्यापकताज्ञाने न संभवतीति व्यापकता-ज्ञानकारणतामते स्वरूपतो ज्ञानत्वप्रकारकानुमितेरनुपपत्तिः वक्ष्यत इति न विरोध इत्याह—**प्रतियोगिनी**त्यादिना । **प्राहुरिति** । अस्मिन्मते – सास्नादिमत्त्व-समानाधिकरणो यो भेदः गवाभिन्ननीलगोभेदः तत्प्रयोगितावच्छेदकत्वात् गोत्वा-वच्छिन्नस्याव्याप्तिः । सर्वत्र सद्धेतौ सामान्यतः उदासीनाभावस्य घटावच्छिन्न(घटाभिन्न) घटादिभेदरूपस्य प्रतियोगितावच्छेदकत्वं घटादौ वाच्यम् । तच्च न संभवति । गुरुधर्मस्य अभावप्रतियोगितानवच्छेदकत्वमते घटभेदप्रतियोगितायां लाघवेन समवायेन घटत्वस्यैवावच्छेदकत्वं, न तु समवायेन घटत्वविशिष्टस्य तादात्म्येन, गौरवात् इत्यस्वरसः । **तादात्म्येन गोर्व्यतिरेकादिति** दीधितिग्रन्थस्य यत्र तादात्म्येन गौर्नास्ति घटादौ तत्र सास्नाद्यभावः इत्यर्थमात्रविवक्षायां प्रकृतोपयोगाभावात् तादात्म्यसंबन्धघटित-व्यापकतावच्छेदकगोत्वावच्छिन्नस्येत्युक्तम् ।।

यद्यपि तादात्म्यसंबन्धावच्छिन्नगोत्वाभावस्यापि सास्नादिव्यतिरेकसाधकत्वं संभवति । तथापि तस्य गोत्वत्वावच्छिन्न प्रतियोगिताकत्वेन ज्ञायमानस्यैवा भावस्य साधकत्वात् गोत्वत्वाग्रहदशायां तादृशाभावज्ञानासंभवात् तदुपेक्षा ।।

## दीधितिः

**एवं च संयोगेन गगनादेरपि** द्रव्यत्वव्याप्यत्वम्, **वृत्त्यनियामकसंयोगमात्रस्या**भावप्रतियोगितावच्छेदकसंबन्धरूपत्वे **साध्यतावच्छेदकसंबन्धेन** प्रतियोग्यसंबन्धित्वाभिधाने वा **पृथिवीत्वादिव्यापकत्वमपि । तदभाववतोऽपि** पृथिव्यादेः संयोगेन **तत्संबन्धित्वात्** । **सिद्धिरपि** तस्य **तथैव** ; न तु वृत्तिनियामकसंबन्धेन । **तेनासंबन्धित्वात्**, अव्यापकत्वाच्च । **व्यक्तीभविष्यति** चेदमुपरिष्टात् ।।

## गादाधरी

**एवं च** – अधिकरणत्वस्थाने संबन्धित्वनिवेशे च **गगनादेरपीति तस्याधिकरणा**-प्रसिद्धावपि संयोगेन **तत्संबन्धिवृत्तित्वस्य** अभावे **तत्र च साध्यवत्संबन्धित्वस्य** प्रसिद्ध्या **यथोक्तव्याप्तिसत्त्वा**दिति भावः । **वृत्त्यनियामकसंयोगव्यावृत्तरूपेण** संयोगस्याभावप्रतियोगितावच्छेदकसंबन्धत्वेन साध्यतावच्छेदकसंबन्धस्य गगनीयसंयोगस्याभावप्रतियोगितानवच्छेदकतया प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशकल्पे तथाविधप्रतियोगित्वाप्रसिद्ध्या संयोगेन गगनस्य न व्यापकता निर्वहतीत्यत उक्तं – **वृत्त्यनियामकसंयोगमात्रस्येति** । **तादृशसंयोगसाधारणसंयोगत्वावच्छिन्नस्येत्यर्थः**।।

## व्याख्या

एतावता वृत्त्यनियामकसंबन्धेन साध्यस्थले साधनस्थले च व्याप्तेर्निर्वाहाय व्याप्तिघटकाधिकरणादिपदानि संबन्धिपराणीति सोदाहरणं न्यरूपि । अथ साध्यसामानाधिकरण्यशरीरे–साध्यसंबन्धिसंबद्धत्वशरीरे साध्यसंबन्धित्वनिवेशस्य पूर्वोक्तप्रयोजनात् अन्यत् प्रयोजनमप्याह **दीधितौ एवं च संयोगेन गगना-देरपीति** । अन्यथा इदं द्रव्यं संयोगेन गगनात् इत्यत्र गगनस्य अवृत्तिपदार्थतया गगनप्रतियोगिकसंयोगस्य वृत्त्यनियामकतया तेन साध्यगगनाधिकरणाप्रसिद्ध्या अधिकरणत्वघटितव्याप्तेः



तत्र दुर्घटत्वात् । संबन्धित्वनिवेशे तु फलितां व्याप्तिं तत्र उपपादयति व्याख्यायां–**तस्याधिकरणे**त्यादिना । **तस्य**–गगनस्य, अधिकरणाप्रसिद्धावपि **तत्संबन्धिवृत्तित्वस्य** हेतुभूतगगनसंबन्धिवृत्तित्वस्य अभावे घटाद्यभावे प्रसिद्ध्या **तत्र च**–हेतौ गगने च **साध्यवत्संबन्धित्वस्य**–साध्यभूतद्रव्यत्ववद्द्रव्यसंबन्धित्वस्य प्रसिद्ध्या **यथोक्तव्याप्तिसत्त्वात्**–हेतुसमानाधिकरणेत्यादिव्याप्तिसत्त्वात् । गगनादेरपि द्रव्यव्याप्यत्वं सिध्यतीति भावः । एवं संयोगेन गगनवत् पृथिवीत्वात् इति गगनस्य साध्यत्वमपि । तत्र वृत्त्यनियामकसंयोगमात्रस्येति **दीधितिस्थं** मात्रपदं नेतरव्यवच्छेदार्थकम्, अपि तु कात्स्न्यार्थकमित्याशयेन व्याचष्टे–**वृत्त्यनियामकसंयोगव्यावृत्तरूपेणेत्यादिना** । अयं भावःसंयोगः द्विविधः वृत्तिनियामकः वृत्त्यनियाकमश्चेति । घटादिसंयोगः वृत्तिनियामकः, गगनादिसंयोगः वृत्त्यनियामकः । तत्र वृत्तिनियामकसंयोगस्यैव अभावप्रतियोगितावच्छेदकत्वपक्षे गगनीयसंयोगस्य वृत्त्यनियामकतया अभावप्रतियोगितावच्छेदकत्वं नास्तीति हेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशकल्पे संयोगसंबन्धेन गगनसाध्यकपृथिवीत्वहेतुकस्थले इदं संयोगेन गगनवत् पृथिवीत्वात् इत्यत्र साध्यताबच्छेदकगगनीयसंयोगावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या **पृथिवीत्वादिव्यापकत्वमपीति** कथनं न संगच्छते । अतः मात्रपदं कृत्स्नार्थकमिति वक्तव्यम् । तत्रापि कृत्स्नस्य वृत्त्यनियामकसंयोगस्येत्यर्थे न स्वारस्यमिति विवक्षितमर्थमाह–**तादृशसंयोगसाधारणसंयोगत्वावच्छिन्नस्येत्यर्थ** इति। इत्थं च संयोगत्वेन रूपेण वृत्तिनियामकतदनियामकसंयोगानामभावप्रतियोगितावच्छेदकत्वमिति भावः । तथा च गगनीयसंयोगस्यापि अभावप्रतियोगितावच्छेदकत्वात् संयोगेन गगनसाध्यकपृथिवीत्वहेतुकस्थले हेतुसमानाधिकरणाभावः संयोगेन गगनाभावः न भवति, अपि तु घटाद्यभावः तन्निरूपितसंयोगसंबन्धावच्छिन्ना प्रतियोगिता घटादिनिष्ठा प्रसिद्धा–तदनवच्छेदकत्वं साध्यतावच्छेदके गगनत्वेऽस्तीति लक्षणसमन्वयः ।।

तथा च व्याप्तिघटकाधिकरणत्वस्थाने संबन्धित्वनिवेशपक्षे गगनादेरपि संयोगेन व्याप्यत्वं (हेतुत्वं) व्यापकत्वं (साध्यत्वं) च संभवतीति भावः ।।

## गादाधरी

**यद्वेत्याद्युक्तकल्पे** वृत्त्यनियामकसंयोगसाधारणरूपेण तादृशसंबन्धत्वविरहेऽपि न क्षतिः । तन्मते प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वानिवेशात् इत्याशयेनाह—**साध्यतावच्छेदकसंबन्धेनेति** । पृथिवीत्वादिव्यापकत्वमपीत्यत्र संयोगेन गगनादेरित्यनुषज्यते । **ननु** प्रतियोगितायां साध्यतावच्छेदक-संबन्धावच्छिन्नत्वानिवेशे पृथिव्यादिनिष्ठसमवायादिसंबन्धावच्छिन्नाभावप्रतियोगितया गगनादेर्न पृथिवीत्वादि-व्यापकतासंभवः इत्यत आह—**तदभाववतोऽपीति** । समवायादिना गगनाद्याभाव-वतोऽपीत्यर्थः । **तत्संबन्धित्वात्** गगनादिसंबन्धित्वात् । तथा च तादृशगगनाद्यभावो न साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेतुमन्निष्ठ इत्यभावान्तरमादाय लक्षणसत्त्वं निष्प्रत्यूहमिति भावः ।।

ननु संयोगेन गगनव्यापकत्वे **बाधाद्यनवतारदशायां** भ्रान्तस्य वृत्तिनियामक-संयोगेनैव कथं गगनानुमितिः इत्यत आह—**सिद्धिरपीति** । **तथैव**— वृत्त्यनियामक-संयोगेनैव । **तेनासंबन्धित्वादिति** । तथा च तादृशसंबन्धाव-गाहनेऽनुमितेः भ्रमतया तत्र भ्रमात्मकपरामर्शस्यापेक्षितत्वादिति भावः ।।

## व्याख्या

साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वनिवेशकल्पे उक्तविवक्षा नावश्य-कीत्यभिप्रायेणोक्तं **साध्यतावच्छेदकसंबन्धेनेत्यादिग्रन्थं** संगमयति—**यद्वेत्याद्युक्त-कल्ये** इति । प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वानिवेशे संयोगेन गगनवान् पृथिवीत्वादित्यत्र पृथिवीत्वरूपहेत्वधिकरणपृथिवीवृत्तिः यः समवायेन गगनाभावः तत्प्रतियोगित्वात् गगनस्य तदप्रतियोगित्वरूपं पृथिवीत्वव्यापकत्वं न स्यादिति



शङ्कापरिहाराय तदभाववतोऽपीत्याद्युक्तं **दीधितौ** इत्याह—**नन्विति** । तथाच समवायसंबन्धावच्छिन्नगगनाभावस्य पृथिवीत्वरूपहेतुसमानाधिकरणत्वेऽपि साध्यता-वच्छेदकवृत्त्यनियामकसंयोगसंबन्धेन गगनसंबन्धिपृथिवीवृत्तितया साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिवृत्तित्वरूपप्रतियोगिवैयधिकरण्याभावात् समवायसंबन्धेन गगनाभावस्य लक्षणघटकत्ववारणात् अभावान्तरमादाय तदप्रतियोगित्वरूपं व्यापकत्वं गगनस्य निर्वहतीति भावः । शिष्टं स्पष्टम् । **सिद्धिरपि तस्य तथैवेति** ग्रन्थमवतारयति—**ननु संयोगेनेति** । संयोगेन गगनस्य यदि पृथिवीत्वव्यापकत्वमङ्गीक्रियते तदा **बाधाद्यनवतार-दशायाम्**—वृत्तिनियामकसंबन्धेन गगनाभाववत् इति बाधाभावदशायां भ्रान्तस्य वृत्ति-नियामकसंयोगेन गगनवदिदम् इत्यनुमितिः कथं भवतीति शङ्कायामाह—**सिद्धिरपीति** । अनुमितिरपीत्यर्थः । **तथैव**—वृत्त्यनियामकसंयोगेनैव । **तस्य**—गगनस्य । वृत्तिनियामक-संबन्धेन गगनाभाववदिदमिति बाधज्ञानादेव वृत्तिनियामकसंबन्धेन गगनानुमितेर्वारणं भवतीति शङ्कावारणाय बाधानवतारदशायामित्युक्तम् । भ्रान्तस्य तादृशानुमितेरिष्टत्वात् अभ्रान्तस्येत्युक्तम् ।।

**तादृशसंबन्धावगाहने** —वृत्तिनियामकसंबन्धावगाहने । अविद्यमानसंबन्धावगाहने अनुमितेः भ्रमत्वनियमात् कारणीभूतपरामर्शस्यापि भ्रमत्वमावश्यकमिति, उक्तपरामर्शस्तु संयोगत्वशिष्टसंयोगेन गगने व्यापकत्वावगाही न भ्रमः । तथा च सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्वात् अनुमितावपि वृत्त्यनियामकसंयोगसंबन्धेनैव गगनस्य भानमिति भावः । **दीधितौ तेनासंबन्धित्वात्**—वृत्तिनियामकसंयोगेन गगनसंबन्धित्वाभावात् पक्षस्य इति भावः ।।

## गादाधरी

**यद्रूपावच्छिन्न**यत्संबन्धस्य व्यापकताघटकत्वं तद्रूपावच्छिन्नतत्संबन्धेनैवानु-मितिरिति नियमाभिप्रायेण दोषान्तरमाह—**अव्यापकत्वाच्चेति** । वृत्त्यनियामकेन संबन्धेनैव

गगनाद्यभावस्य प्रतियोगिसमानाधिकरणतया वृत्तिनियामकसंयोगेन प्रतियोगिव्यधिकरणाभावप्रतियोगितायाः गगने सत्त्वेन तत्संबन्धस्य व्यापकत्वाघटकत्वादित्यर्थः । तथा च व्यापकत्वाघटकसंबन्धस्या-नुमितावभानात् न तेनानुमितिप्रसङ्ग इति भावः ।।

ननु वृत्तिनियामकसंयोगेन गगनादिसंबन्धिनोऽप्रसिद्ध्या कथं तेन संबन्धेन गगनाद्यभावस्य प्रतियोगिवैयधिकरण्यमित्यत आह—**व्यक्तीभविष्यतीति** । वक्ष्यमाणो-**भयाभावघटित**प्रतियोगिवैयधिकरण्यं तत्रापि सुलभमिति भावः ।।

## व्याख्या

**यद्रूपावच्छिन्नेति** । संयोगत्वावच्छिन्नस्य वृत्त्यनियामकसंयोगस्य प्रकृते व्यापकताघटकतया तेनैव वृत्त्यनियामकसंयोगेनैव गगनस्यानुमितिर्भवेत्, न तु वृत्तिनियामकसंयोगन, तद्रूपावच्छिन्नस्य तस्य व्यापकत्वाघटकत्वात् इत्यर्थः । पूर्वोक्तगगनाभावस्य वृत्त्यनियामकसंबन्धेन गगनरूपप्रतियोगिसमानाधिकरणत्वेऽपि वृत्तिनियामकसंयोगेन गगनरूपप्रतियोगिव्यधिकरणतया तदभावप्रतियोगितायाः गगने सत्त्वेन तेन संबन्धेन गगनस्य व्यापकत्वाभावात् न वृत्तिनियामकसंबन्धेन गगनानुमिति-प्रसङ्गः । अयमाशयः—व्याप्तिज्ञाने यत् व्यापकतया भासते, तदेवानुमितौ विधेयतया भासते, तथा येन संबन्धेन व्यापकत्वं तेनैव विधेयत्वम् इत्यपि नियमः । एवं च प्रकृते वृत्तिनियामकसंयोगेन गगनस्यानुमितौ विधेयत्वमिष्टं चेत् तेन संबन्धेन तस्मिन् व्यापकताज्ञानस्यापेक्षिततया अभ्रान्तस्य च तादृशज्ञानासंभवात् न सल्लिङ्गकपरामर्शात् भ्रमानुमित्यापत्तिरिति ।।

**व्यक्तीभविष्यतीति** ग्रन्थमवतारयति—**ननु इति** । **उभयाभावघटितेति** । निरुक्त-प्रतियोगिप्रतियोगिकत्व—हेत्वधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभाववत्साध्यता-वच्छेदकसंबन्धसामान्यकत्वमेव अभावे प्रतियोगिवैयधिकरण्यम् । समवायादिसंबन्धा-



वच्छिन्नगगनाभावस्य च साध्यतावच्छेदकतयाभिमतवृत्तिनियामकसंयोगे गगनप्रति-योगिकत्वाभावेन तद्घटितोभयाभावसत्त्वेन तादृशोभयाभाववत्साध्यतावच्छेदकसंबन्ध-सामान्यकत्वरूपप्रतियोगिवैयधिकरण्यमक्षतमित्यर्थः ।।

## दीधितिः

**ननु अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्य विशेषणताविशेषेण अव्याप्यवृत्ति किमपि व्यापकं न स्यात्** । **स्वावच्छेदक**संबन्धेन प्रतियोगिमतः असंबन्धिनि काले वर्तमानस्य अभावस्य प्रतियोगितायां तत्संबन्धावच्छिन्नेत्यस्य **तेन संबन्धेन यत् प्रतियोगिसंबन्धिं तदन्यत्वस्य** च काले असंभवात् ।।

## गादाधरी

**कालिकविशेषणतया** घटादिसाध्यके महाकालत्वादिहेतौ **अप्रसिद्धिनिबन्ध-नाव्याप्तिं** शङ्कते—**नन्वित्यादिना** । खण्डकालवृत्त्येतत्कालत्वादिहेतुकस्थले अतीतानागतव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नतादृशसंबन्धावच्छिन्नाभाव एव हेतुमति प्रतियोगिव्यधिकरणः प्रसिद्ध इति नाव्याप्तिः । अतः **अष्टद्रव्यातिरिक्तद्रव्यात्मके**ति । जन्यमात्रस्य कालोपाधितामते द्रव्यात्मकस्यापि खण्डकालस्य संभवान्न महाकाल-पर्यन्तलाभ इत्यतोऽतिरिक्तान्तम् ।।

**यद्यपि** गगनदिगात्ममनसां नित्यतया खण्डकालत्वासंभवेन चतुर्द्रव्याति-रिक्तेत्युक्तावपि महाकाललाभः, तथापि यत्किञ्चिच्चतुर्द्रव्यातिरिक्तत्वस्य पृथिव्यादावपि सत्त्वात् पृथिव्यादिचतुष्टयातिरिक्तत्वस्य विशिष्याभिधान एव तल्लाभः । **तान्त्रिकैः** महाकालस्यैवाष्टद्रव्यातिरिक्तद्रव्यपदेनाभिधानात् तथाभिधाने विशिष्यानभिधानेऽपि नान्यपरत्वशङ्केति तथैवाभिहितम् । खण्डकालसाधारणमहावृत्तेर्हेतुत्वे खण्डकालरूपहेत्वधिकरण एव लक्षणघटकोक्ताभावप्रसिद्धिरिति **कालमात्रवृत्ती**त्यत्र

**मात्रपदम्** । **समवायादिना** कस्यचित् साध्यत्वे समवायादिना घटाद्यभाव एव महाकाले तेन संबन्धेन प्रतियोगिव्यधिकरणः प्रसिध्यतीति अतो **विशेषणताविशेषेणे**त्युक्तम् । **कालिकविशेषणतया** इत्यर्थः ।।

## व्याख्या

पूर्वं प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकसंबन्धनिवेशपक्षे अग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयम् । तथा च प्रतियोगितावच्छेदकसंवन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकाबच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः ।।

प्रतियोगिवैयधिकरण्यशरीरे साध्यतावच्छेदकसंबन्धनिवेशे अग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं न निवेशनीयम् । तथा च साध्यतावच्छेदककसंबन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इत्युक्तम् ।।

अथ पक्षद्वयेऽपि कालो घटवान् कालपरिमाणात्, अथवा महाकालत्वात् इत्यत्राव्याप्तिः इत्याशङ्कते**दीधितौ–ननु अष्टद्रव्यातिरिक्तेत्या**दिना । तथा हि – कालपरिमाणवति महाकाले कालिकसंबन्धेन घटस्य सत्त्वात् अयं सद्धेतुः। अत्र हेतुसामानाधिकरणाभाव इत्यनेन कालपरिमाणाधिकरणकाले वर्तमानस्य कालिकसंबन्धावच्छिन्नप्रतियोगिताकस्य अवृत्तिगगनाद्यभावस्य उपादाने प्रतियोगितावच्छेदककालिकसंबन्धेन स्वप्रतियोगिगगनाधिकरणस्य अप्रसिद्ध्या तदनधिकरणवृत्तित्वरूपं प्रतियोगिवैयधिकरण्यं अभावे न संभवति । कालिकसंबन्धेन वृत्तिमतां सर्वेषां काले सत्त्वात् तेन संबन्धेन घटाद्यभावः हेत्वधिकरणकालवृत्तिरेव न भवति । अतः समवायसंबन्धावच्छिन्नघटाद्यभाव एव ग्राह्यः । स च समवायेन घटानधिकरणकालवृत्तिः।



परं तु तदीयप्रतियोगितायां साध्यतावच्छेदकीभूत-कालिकसंवन्धाबच्छिन्नत्वं नास्तीत्यव्याप्तिः । लक्षणघटकाभावाप्रसिद्ध्या अव्याप्तिरिति यावत् ।।

अग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमनिवेश्य प्रतियोगिवैयधिकरण्यघटकप्रतियोग्यधिकरणे साध्यतावच्छेदकसंबन्धनिवेशपक्षेऽपि कालवृत्तेः समवायादिसंबन्धावच्छिन्नघटाघभाव स्यप्रसिद्धावपि तस्य साध्यतावच्छेदककालिकसंबन्धेन प्रतियोगिघटादिसंबन्धिकालवृत्तितया प्रतियोग्यनधिकरणस्य हेतुमतः अप्रसिद्ध्या अव्याप्तिः इति **दीधितिग्रन्थस्य** आशयः ।

अथ **दीधितिस्थ**पदानां प्रयोजनं **गादाधर्याम्** उच्यमानं पश्यामः । **कालिकविशेषणतयेति** । महाकालः कालिकसंबन्धेन घटवान् महाकालत्वात् इत्यर्थः । **अप्रसिद्धिनिबन्धनेति** । प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनेत्यर्थः । **दीधितिस्थस्य अष्टद्रव्यातिरिक्तेत्यादि**विशेषणत्रयस्य क्रमेण प्रयोजनमाह—**खण्डकालवृत्तीति** । खण्डकालवृत्ति यत् एतत्कालत्वं तद्धेतुकस्थले कालो घटवान् एतत्कालत्वात् इत्यत्र तादृशकालभिन्नकालीनवस्तूनां कालिकसंबन्धेन तत्काले असत्त्वात् तेषामेवाभावः तत्काले प्रतियोगिव्यधिकरणः प्रसिद्ध इति तमादाय लक्षणसमन्वयसंभवात् **अष्टद्रव्यातिरिक्ते**त्युक्तम् । जन्यद्रव्यात्मकखण्डकालस्य अष्टद्रव्यान्तर्गतत्वात् व्यवच्छेदः । सूर्यपरिस्पन्दरूपक्रियात्मकस्य खण्डकालस्य द्रव्यात्मकेत्यनेन व्यवच्छेदः । तथा च पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यात्मकः कालः महाकाल एव । न तु खण्डकाल इति भावः ।।

ननु कालातिरिक्तानामष्टद्रव्याणां मध्ये दिगात्ममनआकाशानां चतुर्णां द्रव्याणां नित्यतया कालत्वमसंभावितम् । पृथिव्यादिचतुष्टयेष्वेव जन्यानां कालत्वं संभावितम्। अतश्चतुर्द्रव्यातिरिक्तेत्येव कुतो नोक्तम् इत्याशङ्क्य समाधत्ते–**यद्यपीत्यादिना** ।

चतुर्द्रव्यातिरिक्तेत्युक्तौ घटपटकुड्यकुसूलरूपयत्किंचिच्चतुर्द्रव्यातिरिक्तत्वं पृथिव्यादावपि भवतीति तादृशचतुष्टयव्यावृत्त्यर्थं विशिष्य पृथिव्यादिचतुष्टयातिरिक्तत्वं वाच्यम् । तदपेक्षया लाघवात् अष्टद्रव्यातिरिक्तेत्युक्त-मिति भावः । नन्वेवमपि यत्किंचिदष्ट-द्रव्यातिरिक्तत्वं पृथिव्यादावप्यस्तीति तद्वारणाय विशिष्याभिधेयत्वे गौरवमेवेत्यत आह–**तान्त्रिकैरिति** । शास्त्रज्ञैः अष्टद्रव्यातिरिक्तद्रव्यपदेन परिभाषया महाकालस्यैव व्यवहारात् न विशिष्य वक्तव्यमिति तथैवोक्तमिति भावः । **मात्रपदानु**पादाने अष्टद्रव्यातिरिक्तद्रव्यात्मककालवृत्तिधर्मः खण्डकालमहाकालोभयवृत्तिकालत्वादिरपि भवति। तस्य हेतुत्वे हेत्वधिकरणे खण्डकाल एवं पूर्वोक्तरीत्या प्रतियोगिव्यधिकरणाभावः प्रसिध्यतीति **मात्रे**त्युक्तम् । **विशेषणताविशेषेणे**त्यस्य प्रयोजनमाह–**समवायादिनेति** । कालः समवायेन परिमाणवान् महाकालत्वात् इत्यत्र हेत्वधिकरणकालवृत्तिः समवायेन घटाद्यभाव एव प्रतियोगिव्यधिकरणः, साध्यतावच्छेदकीभूतसमवायसंबन्धेन घटादिरूप-प्रतियोग्यनधिकरणमहाकालवृत्तित्वादिति विशेषणताविशेषणेति विशेषपदम्, दैशिक-विशेषणताव्यावृत्त्यर्थं विशेषपदं कालिकविशेषणतापरमित्याह–**कालिकविशेषणतये**त्यर्थ इति । तथा च कालिकसंबन्धस्यैव साध्यतावच्छेदकसंबन्धतया तेन संबन्धेन प्रतियोग्यनधिकरणत्वं हेत्वधिकरणकालस्य न संभवति इति समवायसंबन्धावच्छिन्ना-भावोऽपि न लक्षणघटकः । तथा च प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिरिति भावः ।।

## गादाधरी

**व्याप्यवृत्तिसाध्यके** प्रतियोगिवैयधिकरण्यानुपादानेन केवलान्वयिनित्यवाच्यत्वा-**दिव्यापकतासंभव** इत्यतः **अव्याप्यवृत्तीति** । कालिकसंबन्धेनाव्याप्यवृत्तित्वं च **व्यतिरेकिमात्रस्यैव, केवलान्वयिनो**ऽप्यनित्यस्य विश्वविषयकजन्यज्ञानविषयत्वा-देर्बोध्यम् । **एतत् सर्वं** च वह्न्यव्याप्त्यभिप्रायेणाभिहितम् । अन्यवृत्तिहेतुके**ऽन्यसंबन्धेन**



साध्यतायां च हेतुमति सर्वत्र साध्यतावच्छेदकसंबन्धेन वृत्तिमन्मात्रस्यैव तेन संबन्धेन वृत्तित्वभ्रमदशायामनुमितिजनकज्ञानानुपपत्तिरपि द्रष्टव्या ।

**एवं** कालिकसंबन्धेन व्याप्यवृत्तिसाध्यकेऽपि साध्यस्य तेन संबन्धेन अव्याप्य-वृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्याघटितायाः प्रतियोगिवैयधिकरण्यघटितायाश्च दुर्ग्रहत्वात् महाकालत्वादिहेतुकानुमित्यनुपपत्तिरपि ।

## व्याख्या

**दीधितौ अव्याप्यवृत्ति किमपि व्यापकं न स्यात्** इत्यत्र अव्याप्यवृत्तीति पदस्य प्रयोजनमाह–**व्याप्यवृत्तिसाध्यके** इति । कालो घटवान् कालपरिमाणात् इत्यत्र घटः कालिकाव्याप्यवृत्तिः । घटस्य कदाचिदेव सत्त्वात्, कदाचिदसत्त्वाच्च । तथा च अव्याप्यवृत्तीत्यनुक्तौ कालो वाच्यत्ववान् महाकालत्वात् इत्यत्र काले वाच्यत्वस्य सदा सत्त्वात् व्याप्यवृत्ति भवति वाच्यत्वम् । पूर्वं ''**नोपादेयं च सर्वदैव व्याप्यवृत्तिसाध्यके तत्**'' इति व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याघटितैव व्याप्तिरित्युक्ततया हेतुसमानाधिकरणाभावाप्रतियोगिसाध्यसामानाधिकरण्यमेव तत्र व्याप्तिः। तथाच हेत्वधिकरणकालवृत्तिः अभावः न वाच्यत्वाभावः, अपितु घटाद्यभाव एव तदप्रतियोगित्वस्य वाच्यत्वे सत्त्वात् न हेतुव्यापकत्वाप्रसिद्धिः इत्यालोच्य अव्याप्यवृत्तीत्युक्तम् । अव्याप्यवृत्तिसाध्यके कालो घटवान् कालपरिमाणात् इत्यत्र प्रतियोगिवैयधिकरण्यघटितैव व्याप्तिर्वक्तव्या । साच तत्राप्रसिद्धेत्याशयः । अप्रसिद्धिं चानुपदमेव **दीधितौ स्वावच्छेदकसंबन्धेने**त्यादिना वक्ष्यति इति भावः । **केवलान्वयीति** सर्वदा सर्वत्र वर्तमानं यत् वाच्यत्वादि आदिपदेन ज्ञेयत्वं ग्राह्यम्, तस्य **वाच्यत्वादेः व्यापकतासंभवः**–कालपरिमाणरूपहेतुव्यापकत्वस्य संभवः । **व्यतिरेकिमात्रस्यैव**–मात्रपदं कात्स्न्यार्थकम्–अभावप्रतियोगिनः सर्वस्य घटादेः

कालिकाव्याप्यवृतित्वं भवति । एवकारेण केवलान्वयिनः वाच्यत्वादेः कालिकसंबन्धेनाव्याप्यवृत्तित्वं व्यवच्छिद्यते ।।

कालः परिमाणवान् महाकालत्वात् इत्यत्र साध्यस्य परिमाणस्य दैशिकाव्याप्यवृत्तित्वाभावात् (दैशिकव्याप्यवृत्तित्वात्) तत्रापि प्रतियोगिवैयधिकरण्याघटितव्यापकत्वप्रसिद्धिः इत्यतः **कालिकसंबन्धेने**त्युक्तम् । परिमाणस्यापि अनित्यस्य कालविशेषेऽभावात् कालिकाव्याप्यवृत्तित्वमेव । एवं केवलान्वयिनोऽप्यनित्यस्य विश्वविषयकजन्यज्ञानविषयत्वादेः कालान्तरेऽभावात् कालिकाव्याप्यवृत्तित्वमेवेति वाच्यत्वादेः साध्यत्वानुसरणम् । तथा च केवलान्वयि नित्यं च यत् वाच्यत्वादि व्याप्यवृत्ति, तत्साध्यकस्थले प्रतियोगिवैयधिकरण्यानुपादानेन साध्यस्य व्यापकत्वं संभवतीत्यतः यत्र व्याप्यवृत्तित्वं नास्ति घटादौ तत्साध्यके कालो घटवान् महाकालत्वात् इत्यत्र प्रतियोगिवैयधिकरण्याघटितव्याप्तिर्न संभवतीति भावः । तत्र व्याप्त्यसंभवं चानुपदमेव प्रदर्शयिष्यति । ननु विश्वविषयकजन्यज्ञानविषयत्वस्य अनित्यत्वे तस्य केवलान्वयित्वं कथमिति चेत्–कपिसंयोगाभावस्य केवलान्वयित्वानुरोधेन प्रतियोगिव्याधिकरणात्यन्ताभावाप्रतियोगित्वस्यैव केवलान्वयित्वरूपत्वात् ।।

अव्याप्तिर्द्विविधा वस्त्वव्याप्तिः ज्ञानाव्याप्तिश्चेति । तत्र वस्त्वव्याप्तिर्नाम वस्तुस्वरूपस्य क्वचिदसत्त्वम् । ज्ञानाव्याप्तिर्नाम तादृशवस्तुज्ञानस्य क्वचिदनुपपत्तिः । तथा चाष्टद्रव्यातिरिक्तेत्यादिस्थलविशेषानुसरणं वस्त्वव्याप्त्यभिप्रायेणाज्ञानाव्याप्तिस्तु अन्यत्रापि संभवतीत्याह–**एतत्सर्वमिति** । **अन्यवृत्तीति** । महाकालान्यवृत्तीत्यर्थः। **अन्यसंबन्धेनेति** । कालिकातिरिक्तसंबन्धेनेत्यर्थः । पर्वतो धूमाद्वह्निमान् इत्यत्रापि वृत्तिमत् सर्वं सर्वत्र संयोगसंबन्धेन वर्तते इति भ्रमदशायां कुत्रापि अभावे प्रतियोगिवैयधिकरण्यज्ञानासंभवात् तदानीं तत्र निरुक्तव्याप्तिज्ञानरूपकारणासत्त्वभ्रमेण ज्ञानाव्याप्तिरिति भावः ।।



कालिकसंबन्धेन वाच्यत्वादिव्याप्यवृत्तिसाध्यकेऽपि महाकालत्वादिहेतौ कालिकसंबन्धेन अव्याप्यवृत्तित्वभ्रमदाशायां हेत्वधिकरणवृत्तितया अभिमते साध्याभावे प्रतियोगिसामानाधिकरण्यज्ञानात्, अन्यत्र च प्रतियोगिवैयधिकरण्यज्ञानासंभवात् प्रतियोगिवैयधिकरण्यघटितव्यापकत्वं दुर्ग्रहम् । साध्ये हेतुसमानाधिकरणाभावप्रतियोगित्वज्ञानात् प्रतियोगिवैयधिकरण्याघटितव्यापकत्वं च दुर्ग्रहम् इति अत्र ज्ञानाव्याप्तिरप्यस्तीत्याह–**एवमिति** ।।

## गादाधरी

**स्वावच्छेदकसंबन्धेन स्वावच्छेदकविशिष्टा**नधिकरणहेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानिवेशकल्पे तादृशप्रतियोगित्वाप्रसिद्ध्यभिधानेनाव्याप्तिं स्फुटीकरोति–**स्वावच्छेदकेति** । **स्वं**–प्रतियोगिता । काले–महाकाले । तत्संबन्धावच्छिन्नत्वस्यकालिकसंबन्धावच्छिन्नत्वस्य । **असंभवादिति** योजना । कालिकसंबन्धेन वृत्तिमन्मात्रस्यैव महाकाले **वृत्तेः, अवृत्तेश्च** तेन संबन्धेन संवन्धिनोऽप्रसिद्ध्या कस्यापि कालिकसंबन्धानच्छिन्नाभावस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेतुमद्वृत्तित्वासंभवेन समवायादिसंबन्धावच्छिन्नघटाद्यभावस्य तथात्वात् तत्प्रतियोगितायाश्च समवायादिसंवन्धेनैवावच्छिन्नत्वात् इति भावः ।।

साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेतुमदृत्त्यभावीय संबन्धावच्छिन्नत्वाविशेषित प्रतियोगितानिवेशकल्पे तादृशसंबन्धेन प्रतियोग्यसंबन्धिहेतुमत एवाप्रसिद्ध्या अव्याप्तिरित्याह–**तेनेति** । **तेन संबन्धेन**–कालिकसंबन्धेन । गागनाद्यभावप्रतियोगिनः तेन संबन्धेन संबन्धित्वाप्रसिद्धिं स्फुटीकर्तुं प्रतियोग्यसंबन्धित्वस्येत्यनभिधाय **यत् प्रतियोगिसंबन्धि तदन्यत्वस्येत्यसमासेना**भिधानम् ।।

## व्याख्या

पूर्वमेव अत्रत्यः सर्वोऽपि विषयः व्याप्तिद्वयप्रदर्शनपूर्वकं विशदीकृतः । तत्र द्रष्टव्यम् । पङ्क्त्यर्थमात्रं लिख्यते–**स्वावच्छेदकसंबन्धेनेति** । प्रतियो-

गितावच्छेदकसंवन्धेनेत्यर्थः । **स्वावच्छेदकविशिष्टेति** । प्रतियोगितावच्छेदकधर्मविशिष्टेत्यर्भः । **वृत्तेः**–वर्तमानत्वात् । **अवृत्तेश्च**–अवृत्तिपदार्थस्य गगनादेश्च ।।

## गादाधरी

**अथ** कालिकसंबन्धेन महाकालान्यवृत्तित्वविशिष्टस्य तत्संबन्धावच्छिन्नाभाव एव महाकाले प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणः प्रसिद्धः । तमादायैव च लक्षणसमन्वयात् कथमव्याप्त्यभिधानम् । न हि महाकालान्यवृत्तित्वविशिष्टघटादिनिरूपितः कालिकसंबन्धः महाकाले संभवति । तद्धर्मिवृत्तित्वविशिष्टनिरूपितसंबन्धानुयोगितायाः तद्धर्मिनियतत्वात् । **अन्यथा** सत्त्वादिमति गुणादौ द्रव्यादिवृत्तित्वविशिष्टसत्ताद्यभावप्रत्ययानुपपत्तेः ।।

## व्याख्या

महाकालो घटवान् महाकालत्वात् इत्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धना या अव्याप्तिः दीधितौ प्रस्तुता तामुद्धर्तुं शङ्कते–व्याख्यायाम्–**अथेत्यादिना** । घटस्य कालिकसंबन्धेन कालवृत्तित्वेऽपि महाकालान्यवृत्तित्वविशिष्टघटः महाकाले कालिकसंबन्धेन नास्ति । यथा गुणे सत्तायाः सत्त्वेऽपि द्रव्यवृत्तित्वविशिष्टसत्ता नास्ति तद्वत् । कुतो नास्तीति शङ्कायां तद्धर्मिवृत्तित्वविशिष्टनिरूपितसंबन्धानुयोगिता तद्धर्मिण्येवेति नियमात् इत्युक्तम् । शुद्धसत्तानिरूपितसमवायानुयोगिता गुणे वर्तते, द्रव्यादिवृत्तित्वविशिष्टसत्तानिरूपितसमवायानुयोगिता गुणे नास्ति । एवं च हेत्वधिकरणमहाकालवृत्तिः महाकालान्यवृत्तित्वविशिष्टघटाभावः, स च प्रतियोगितावच्छेदकीभूतमहाकालान्यवृत्तित्वविशिष्टघटानधिकरणमहाकालवृत्तिः । तत्प्रतियोगितावच्छेदकं विशिष्टघटत्वं तदनवच्छेदकं साध्यतावच्छेदकं घटत्वं भवतीति नाव्याप्तिः इति । उक्तनियमानङ्गीकारे बाधकमाह–**अन्यथेति** । विशेष्याधिकरणे विशिष्टाभावानभ्युपगमे गुणे द्रव्यवृत्तित्वविशिष्टसत्ता नास्तीति प्रत्ययो न स्यादिति भावः ।



## गादाधरी

**न चैवं** ह्रदादिवृत्तित्वविशिष्टवह्न्याद्यभावादेः विषयितया संबन्धित्वं ज्ञाने न स्यात् । ज्ञानस्य ह्रदादिवृत्तित्वानिरूपकत्वादिति ह्रदो वह्निमान् इत्यादौ तादृशविशिष्टस्य बाधादिरूपस्य हेत्वाभासत्वं न स्यात् । **ज्ञाननिष्ठ**विषयितया यादृशविशिष्टवत्त्वम् अनुमितिप्रतिबन्धकतावच्छेदकं तादृशविशिष्टस्यैव तथात्वात् ।

**यदि च** तत्संबन्धेन तद्धर्मिसंबन्धित्वविशिष्टनिरूपितः तादृशसंबन्धः विशेषणकोटिप्रविष्टतद्धर्मिनियत इति संबन्धान्तरेण ह्रदादिवृत्तित्वविशिष्टनिरूपितविषयितासंबन्धो ज्ञाने संभवत्येवेत्युच्यते, **तदापि** इच्छादिविषयत्ववि-शिष्टघटादिनिरूपितविषयितासंबन्धस्य ज्ञानेऽसंभवात् इच्छाविषयत्वाभावादिसाध्यकघटादिपक्षकस्थले तादृशविशिष्टस्य बाधादिरूपस्य हेत्वाभासत्वानुपपत्तिर्दुर्वारैवेति वाच्यम् ।।

## व्याख्या

तद्धर्मिवृत्तित्वविशिष्टनिरूपितसंबन्धानुयोगित्वं तद्धर्मिण्येवेति नियमो यदि स्वीक्रियते, तदा ह्रदवृत्तित्वविशिष्टो यो वह्न्यभावः तन्निरुपितं विषयित्वं वस्तुतः ह्रदवृत्तित्वविशिष्टवह्न्यभावविषयके ज्ञाने अस्ति । तन्न स्यात् ज्ञानस्य तद्धर्मिभूतह्रदभिन्नत्वात् । तद्धर्मिपदेन ह्रदस्य ग्रहणे तस्य निर्विषयकतया तद्वृत्तित्वविशिष्टवह्न्यभावविषयकत्वं न स्यात् । ''ह्रदे वह्न्यभाव'' इति ज्ञानेऽपि ह्रदवृत्तित्वविशिष्टवह्न्यभावनिरूपितविषयिता नास्तीति कृत्वा ह्रदवृत्तित्वविशिष्टवह्न्यभावस्य हेत्वभासत्वं न स्यात् । यद्विषयकं विषयितया यद्विशिष्टं ज्ञानमनुमितिप्रतिप्रतिबन्धकं तस्यैव हेत्वाभासत्वात् इत्याशयेन शङ्कते–**न चैवमित्यादिना** । **एवम्** – तद्धर्मिवृत्तित्वविशिष्टनिरूपिताधिकरणतायाः तद्धर्मिनियतत्वे ।।

ननु अनुमितिप्रतिबन्धकयथार्थज्ञामविषयत्वं, हेत्वाभासत्तम् । उक्तस्थले ह्रदो वह्निमान् धूमात् इत्यत्र ''ह्रदे वह्न्यभावः'' इत्याकारकज्ञानं अनुमितिप्रतिबन्धकम्,

तद्विषयत्वस्य ह्रदवृत्तिवह्न्यभावे सत्त्वात् हेत्वाभासत्वममुपपद्यत एवेति शङ्कायामाह–**ज्ञाननिष्ठेति** । इच्छाव्यावृत्त्यर्थं **ज्ञानेति** । ज्ञाननिष्ठविषयितया यादृशविशिष्टविषयकत्वम् अनुमितिप्रतिबन्धकावच्छेदकतादृशविशिष्टस्यैव हेत्वाभासत्वम् । एतन्निकृष्टहेत्वाभास-लक्षणरीत्या ज्ञाने विषयितासंबन्धेन ह्रदवृत्तित्वविशिष्टवह्न्यभावसत्त्वे एव तादृशवह्न्य-भावस्य हेत्वाभासत्वं भवितुमर्हति । तादृशवह्न्यभावश्च उक्ततद्धर्मीत्यादिनियमानुरोधेन ज्ञाने भवितुं नार्हतीति तस्य हेत्वाभासत्वानुपपत्तिरिति भावः ।

ह्रदवृत्तित्वविशिष्टेत्यादिदृष्टान्तानुसारेण नियमं निष्कृष्य प्रकृते हेत्वाभासत्वोपपत्तिं शङ्कते–**यदि चेति** । तद्धर्मिवृत्तित्वं नाम तद्धर्मिसंबन्धित्वम् । येन संबन्धेन तद्धर्मिसंबन्धित्वं कस्यचित् तत्प्रतियोगिकतत्संबन्धानुयोगिता तस्यैवेति नियमः । यथा द्रव्यवृत्तित्वविशिष्टप्रतियोगिकसमवायसंबन्धेन द्रव्यसंबन्धित्वं सत्तायाः, तत्प्रतियोगिकतादृशविशिष्टसंबन्धानुयोगिता द्रव्यस्यैव, न गुणादेः । तद्वत् प्रकृते–ह्रदे वह्न्यभावः स्वरूपसंबन्धेन वर्तते, तेन संबन्धेन ह्रदसंबन्धित्वविशिष्टस्य वह्न्यभावस्य स्वरूपसंबन्धेन अन्यत्र ज्ञाने असत्त्वेऽपि स्वरूपादन्येन विषयितासंबन्धेन ज्ञाने सत्त्वम् इति स्वीकारे बाधकाभावात्–उक्तनियमविरोधाभावात् न ह्रदवृत्तित्वविशिष्टस्य वह्न्यभावस्य हेत्वाभासत्वानुपपत्तिः इति भावः ।।

तत्र समाधत्ते–**तदापीति** । घटः इच्छाविषयत्वाभाववान् पृथिवीत्वात् इत्यत्र इच्छाविषयत्वविशिष्टघटो बाधः । तस्य च ज्ञाने "इच्छाविषयत्वविशिष्टो घटः" इत्याकारके विषयितासंबन्धेन सत्त्वे एव ज्ञाननिष्ठविषयितया अनुमितिप्रतिबन्ध-कतावच्छेदकत्वेन हेत्वाभासत्वं संभवति । ज्ञाननिष्ठा यन्निरूपितविषयिता अनुमितिप्रतिबन्धकतावच्छेदिका तत्त्वं हि हेत्वाभासत्वम् । विषयितया इच्छासंबन्धित्वविशिष्टो घटः बाधः । तस्य तेनैव विषयितासंबन्धेन इच्छातिरिक्ते ज्ञाने असत्त्वात् हेत्वाभासत्वं दुर्घटम् ।



तस्मात् तद्धर्मिवृत्तित्वविशिष्टनिरूपितसंबन्धानुयोगिता तद्धर्मिण्येवेति नियमोऽ-सम्भवदुक्तिकः । तथा च महाकालो घटवान् महाकालत्वात् इत्यत्र महाकालान्य-वृत्तित्वविशिष्टघटोऽपि महाकाले वर्तत एवेति प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिः तदवस्थेति भावः ।

## गादाधरी

**विशिष्टनिरूपित**विषयितातिरिक्तसंबन्धस्यैव विशेषणीभूतसंबन्धितानिरूपकाधि-करणत्वनियतत्वोपगमात् तद्धर्मविशिष्टतन्निरूपितविषयितायां तदंशे तद्धर्मप्रकारकत्व-मात्रस्य अपेक्षितत्वात् "इच्छाविषयो घटः" इत्यादिज्ञाने इच्छाविषयत्वशिष्टघटादिनि-रूपितविषयितासत्त्वे वाधकाभावात् ।।

## व्याख्या

घटः इच्छाविषयत्वाभाववान् घटत्वात् इत्यत्र इच्छाविषयत्वविशिष्टघटस्य बाधरूपस्य यथा हेत्वाभासत्वं निर्वहति तथा पूर्वोक्तनियमं परिष्करोति–**विशिष्टनिरूपितेत्यादिना** । तथा च विशिष्टनिरूपितविषयितातिरिक्तसंबन्धेन तद्धर्मिसंवन्धी यः तस्य तद्धर्मिसंबन्धित्वविशिष्टस्य तेनैव संबन्धेन अन्यसंबन्धित्वं नास्तीति नियमः । यथा विशिष्टनिरूपितविषयितातिरिक्तेन शुद्धसमवायेन द्रव्यसंबन्धिनी सत्ता, तस्याः द्रव्यसंबन्धित्वविशिष्टायाः तेनैव शुद्धसमवाथेन द्रव्यान्यगुणसंबन्धित्वं नास्ति । विषयितासंवन्धस्थले तु तादृशनियमो न स्वीक्रियते । तद्धर्मिविशिष्टनिरूपितविषयितासत्त्वं प्रति तदंशे तत्प्रकारकत्वमात्रमपेक्ष्यते । इच्छाविषयो घट इत्याकारकबाधज्ञाने घटांशे इच्छाविषयत्वस्य प्रकारत्वात् तत्र इच्छाविषयत्वविशिष्टघटनिरूपितविषयितासत्त्वे बाधकाभावात् । उक्तज्ञाने तद्धर्मपदग्राह्यो य इच्छाविषयत्वरूपो धर्मः तद्विशिष्टघट-निरूपिता विषयिता वर्तते तां प्रति तदंशे घटांशे तत्प्रकारकत्वम् इच्छविषयत्वप्रकारकत्वम् इच्छाविषयो घट इति बाधज्ञाने वर्तते इति बाधस्य हेत्वाभासत्वं निर्व्यूढम् ।।

पूर्वोक्तसामान्यनियमश्च तद्धर्मिवृत्तित्वविशिष्टनिरूपितसंबन्धानुयोगिताया-स्तद्धर्मिनियतत्वमिति, पूर्वोक्तः सत्तावति गुणादौ द्रव्यवृत्तित्वविशिष्टसत्ताद्यभाव-प्रत्ययानुपपत्तेः इत्युक्तयुक्त्या स्वीकरणीय एव । ततश्च कालो घटवान् महा-कालत्वादित्यत्र महाकालान्यवृत्तित्वविशिष्टघटाभावमादाय लक्षणसमन्वयशङ्का युज्यत एवेतिभावः ।।

अत्रास्मत्पितृचरणाः कंचिदपूर्वं विषयं प्रास्तुवन् । तथाहि—अत्र भट्टाचार्यैः प्रसङ्गात् कृतः हेत्वाभासलक्षणनिष्कर्षः तदुपपादनप्रकारश्चावश्यं ज्ञातव्यः । तथाहि-सामान्यनिरुक्त्यादौ ज्ञाननिष्ठविषयितासंबन्धेन यादृशविशिष्टवत्त्वम् अनुमिति-प्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टत्वं हेत्वभासत्वमित्युक्तम् । तत्र च यादृशविशिष्टेत्यस्य यद्रूपावच्छिन्नेत्यर्थो वर्णितः । तदुपरि यद्रूपपदेन किं धर्तव्यम् - वह्न्यभावविशिष्टह्रदत्वं वा वह्न्यभावह्रदत्वोभयं वा । नाद्यः, वह्न्ययभाव-विशिष्टह्रदत्ववान् इति ज्ञानस्याप्रतिबन्धकत्वात्; न द्वितीयः, एकत्र द्वयमितिरीत्या वह्न्यभावह्रदत्वोभयावगाहिज्ञानस्याप्रतिबन्धकत्वात् इत्यादिविचारपूर्वकं क्लेशेन यद्रूपपदार्थविवेचनं च व्याख्यातृभिः क्रियते । अत्रत्यग्रन्थपर्यालोचने स्वरसत एव तेषां परिहारो भवति । तथाहि—यादृशविशिष्टपदेन वह्न्यभावविशिष्टह्रद एव ध्रियते। विषयितासंबन्धेन तादृशविशिष्टं कुत्र ज्ञाने वर्तते इति चेत्–ह्रदांशे वह्न्यभावप्रकारकज्ञान एव वर्तते, अर्थात् वह्न्यभावविशिष्टह्रद-निरूपितविषयिता ह्रदांशे वह्न्यभावप्रकारकज्ञान एव वर्तते, न तु एकत्र द्वयमिति रीत्या इत्यादिपूर्वोक्तज्ञानेषु इति गम्यते । तथा च वह्न्यभावविशिष्टह्रदे हेत्वाभासलक्षणसंगतेः पूर्वोक्तज्ञानव्युदासाय परिष्कारान्तरक्लेशो नावश्यक इति **अस्मदाचार्यैः** पाठप्रवचनकाले उक्तो विशेषः–इति ।

## गादाधरी

**न च** एतदनुरोधेनैव **विशेष्यवृत्तिघटकसंबन्धेन** विशेषणविशेष्योभयाधिकरणेऽपि **विशिष्टाधिकरणत्वं** स्वीक्रियते । प्रकृते च इच्छाविषयत्वतादृशघटयोर्द्वयोरपि



विषयितासंबन्धेन ज्ञाने सत्त्वात् तादृशविशिष्टाधिकरणत्वं ज्ञानेऽक्षतमेवेति नेच्छाविषयत्व-विशिष्टघटादेः हेत्वाभासत्वानुपपत्तिः । इत्थं च कालिकसंबन्धेन महाकालान्यत्वस्य महाकाले सत्त्वात् विशिष्टाधिकरणत्वं महाकाले वर्तत एवेति कथं **विशिष्टाभावः** प्रतियोगिव्यधिकरण इति वाच्यम् ।

## व्याख्या

पुनः शङ्कते–**न चेति** । घटः इच्छाविषयत्वाभाववान् घटत्वात् इत्यत्र इच्छाविषयत्व-विशिष्टघटस्य बाधत्वनिर्वाहार्थं तद्धर्मीत्यादिनियमस्य विषयितातिरिक्तसंबन्धपरतया यथा संकोचः क्रियते तथा तदनुरोधेनैव विशेष्यवृत्तिताघटकसंबन्धेन विशेषणविशेष्यो-भयाधिकरणेऽपि **विशिष्टाधिकरणत्वं** स्वीक्रियते । प्रकृते च "इच्छाविषयः घटः" इत्याकारकबाधज्ञाने विशेष्यस्य घटस्य विशेषणस्य इच्छाविषयत्वस्य च विषयितासंबन्धेन सत्त्वात् इच्छाविषयत्वविशिष्टघटस्य बाधस्य विषयितया ज्ञाने सत्त्वात् हेत्वाभासत्व-मक्षतम् । इत्थं च महाकाले महाकालान्यवृत्तित्वरूपविशेषणस्य घटरूपविशेष्यस्य च कालिकसंबन्धेन सत्त्वात् महाकालान्यवृत्तित्वविशिष्टघटाधिकरणत्वमपि वर्तत एवेति कथं महाकालान्यवृत्तित्वविशिष्टाभावः प्रतियोग्यनधिकरणकालवृत्तिः (प्रतियोगि-व्यधिकरणः) इत्याशङ्का ।।

**विशेष्यवृत्तिघटकसंबन्धेन**–विशेष्यं येन संबन्धेन वर्तते तेन संबन्धेन विशेष्य-वृत्तितावच्छेदकसंबन्धेनेति यावत् । **महाकालान्यत्वस्येति** पाठो दृश्यते । महाकालान्य-वृत्तित्वस्येति पाठो युक्तः । महाकालान्यवृत्तित्वविशिष्टघटाभावस्यैव प्रस्तुतत्वात् । **बिशिष्टाधिकरणत्वम्**–महाकालान्यवृत्तित्वविशिष्टघटाधिकरणत्वम् । **विशिष्टाभावः**–महाकालान्यवृत्तित्वविशिष्टघटाभावः ।।

## गादाधरी

**विशेष्यसंबन्धेनो**भयाधिकरणेऽपि विशिष्टाधिकरणत्वाङ्गीकारे घटपटोभयसंयुक्ते भूतले घटसमवायिकपालसंयुक्तत्वविशिष्टपटनिरूपिताधिकरणत्वप्रसङ्गात् । **इच्छाविषयत्वं**

**घटश्चेति** समूहालम्बनेऽपि तादृशविशिष्टाधिकरणत्वसत्त्वापत्त्या प्रतिबन्धकतातिरिक्तवृत्तितया तस्य हेत्वाभासत्वानुपपत्तितादवस्थ्यात् इति ।।

**न च** महाकालान्यवृत्तित्वविशिष्टघटाधिकरणत्वानुपगमे विश्वाधारत्वव्याघात इति शङ्कनीयम् । तादृशविशिष्टनिरूपिताधिकरणताविशेषस्य महाकाले असत्त्वेऽपि घटादेः घटत्वाद्यवच्छिन्ननिरूपिताधिकरणतासत्त्वेनैव सर्वाधारत्वोपपत्तेः ।।

## व्याख्या

न चेत्यादिशङ्कायाः समाधानमाह– **विशेष्यसंबन्धेनेति** । विशेष्यस्य यः संबन्धः तेन संबन्धेन विशेष्यविशेषणोभयाधिकरणेऽपि विशिष्टाधिकरणत्वाङ्गीकारे इच्छाविषयत्वविशिष्टघटरूपबाधस्य हेत्वाभासत्वनिर्वाहेऽपि, भूतले घटपटोभयसंयुक्ते घटसमवायिकपालसंयुक्तत्वविशिष्टपटनिरूपिताधिकरणत्वप्रसङ्गात् । कपालसंयुक्तेत्यस्य संयोगसंबन्धेन कपालविशिष्टेत्यर्थः । कथमिति चेत्– संयोगसंबन्धेन घटपटोभयाधिकरणे भूतले घटावयवभूतकपालोऽपि संयोगसंबन्धेन स्यादेव । तथा च विशेष्यस्य पटस्य यः संबन्धः संयोगः तेन संबन्धेन पटाधिकरणे भूतले तेनैव संबन्धेन कपालस्यापि सत्त्वात् भूतले कपालविशिष्टपटाधिकरणत्वप्रसङ्गात् इति भावः ।

ननु विशेष्यवृत्तितावच्छेदककालिकविषयत्वान्यतरसंबन्धेन विशेष्यविशेषणोभयाधिकरण एव विशिष्टाधिकरणत्वं नान्यसंबन्धेनेति नियमस्य परिष्कारे संयोगसंबन्धमादाय नोक्तप्रसङ्गः इत्यतो दोषान्तरमाह– **इच्छाविषत्वं घटश्चेति** । इच्छाविषयत्वं घटश्चेति समूहालम्बनज्ञानेऽपि विषयितासंबन्धेन विशेष्यस्य घटस्य विशेषणस्य इच्छाविषयत्वस्य च सत्त्वेन तत्र इच्छविषयत्वविशिष्टघटनिरूपिताधिकरणत्वापत्त्या तस्य ज्ञानस्य अनुमितिप्रतिबन्धकताविरहेण तादृशविषयितायाः अनुमितिप्रतिबन्धकतावच्छेदकत्वाभावात् इच्छाविषयत्वविशिष्टस्य घटस्य हेत्वाभासत्वानुपपत्तिः । यादृशविशिष्टनिरूपितविषयिता अनुमितिप्रतिवन्धकतानतिरिक्तवृत्तिः तादृशविशिष्टस्यैव हेत्वाभासत्वात् इति भावः । पुनः शङ्कते– **न चेति** । तद्धर्मिवृत्तित्वविशिष्टनिरूपितेत्यादिनियमानुसारेण महाकाले महाकालान्यवृत्तित्वविशिष्टघटनिरूपिताधिकरणत्वानङ्गीकारे तस्य सर्वाधारत्वमिति सिद्धान्तविरोध इति नाशङ्कनीयम् । महाकालान्यवृत्तित्वविशिष्टघटादिनिरूपिताधिकरणताविशेषस्य महाकालेऽभावेऽपि घटत्वाद्यवच्छिन्नघटादिनिरूपिताधिकरणतायाः सत्त्वेनैव तस्य सर्वाधारतायाः उपपत्तेरिति भावः ।



## गादाधरी

**अत्र केचित्** – कालिकसंबन्धेनाधारता महाकालस्यैव, न तु सूर्यक्रियादेः । इदानीं घटः, इदानीं पटः इत्यादिप्रतीत्या क्रियादिरूपकालोपाधीनां महाकालनिष्ठाधारतावच्छेदकत्वस्यैवावगाहनात् ।

**अत एव** तेषां कालविशेषणतया कालोपाधित्वप्रवादः । **तादृशप्रतीत्या** क्रियादावेव घटाद्याधारत्वावगाहित्वोपगमे तादृशप्रतीतीनामनुगताधारत्वावगाहित्वानुभवविरोधात् । कालत्वेनाखण्डोपाधिना सर्वक्रियादीनामनुगतेन तादृशानुभवोपपादने महाकालस्यैवाप्रामाणिकतापत्तेः–इति प्राचीनमताभिप्रायेणेयमव्याप्त्याशङ्का । तथा च सति कालिकसंबन्धेन महाकालान्यवृत्तित्वस्यैवाप्रसिद्ध्या तद्विशिष्टघटाद्यभावमादाय लक्षणगमनासंभवात् ।।

**न च–क्रियादेः** कालत्वानभ्युपगमेन तदभिप्रायेण चेदयं ग्रन्थः, तदा अष्टद्रव्यातिरिक्तद्रव्यात्मकतायाः अव्यावर्तकतया अभिधानासंगतिरिति– वाच्यम् ।

**तादृशद्रव्यात्मक** एव काल इति मतविशेषसूचकतया तत्संगतेः । तन्मात्रवृत्तित्वं च हेतोः **लक्ष्यतासूचनाय** अभिहितम् । इतरवृत्तेः व्यभिचारित्वात् ।।

## व्याख्या

महाकालो घटवान् महाकालत्वात् इत्यत्र कालिकसंबन्धेन साध्यस्थले कालिकसंबन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावाप्रसिद्ध्या अव्याप्तिरिति दीधित्युक्तं न संगच्छते इति अथेत्यादिना गादाधर्याम् आक्षेपः कृतः । इदानीं तामव्याप्तिं संगमयतां केषांचिन्मतमनुवदति–**अत्र केचित्** इत्यादिना । इदानीं घटः इदानीं पटः इत्यादिप्रतीतिः इदानींपदवाच्यमहाकालस्यैव कालिकसंबन्धेन घटपटाद्याधारत्वमवगाहते, न तु सूर्यक्रियादेः । इदानीमित्यस्य सूर्यक्रियाद्यवच्छिन्नमहाकाल इत्यर्थः । तथा च सूर्यक्रियादेः महाकालनिष्ठाधारतावच्छेदकत्वमेवावगाहते न तु घटाद्याधारत्वम् । आधारत्वं तु महाकालस्यैव । तत्र युक्तिमाह–**अत एवेति** । सूर्यक्रियादीनां कालोपाधिरित्येव प्रवादोऽस्ति, न तु काल इति । कालोपाधिरित्यस्य हि अखण्डमहाकालव्यावर्तकविशेषणमित्यर्थः । बाधकान्तरमप्याह–**तादृशप्रतीत्येति** । इदानीं घट इत्यादिप्रतीत्या इत्यर्थः । इदानीम् घटः इदानीम् पट इति इदानींपदेन अनुगताधारत्वविषयकः अनुभवः जायते । तादृशानुभवस्य क्रियाविषयकत्वे तासां क्रियाणां भिन्नभिन्नत्वात् अनुगतानुभवविषयत्वं न संभवति । कालत्वेन अखण्डोपाधिना अनुगतेन इदानीमित्यनुभवस्योपपादने महाकाल एवानावश्यकः स्यात् । अनुगतानुभवानुसारेण हि अतिरिक्तकालपदार्थः स्वीकार्यः । स च क्रियादिभिरेव निर्वहति चेत् अतिरिक्तकालकल्पनमप्रामाणिकमिति प्राचां मतम् । एतन्मताभिप्रायेणैव दीधितिकृतेयमव्याप्तिः अशङ्किता । तथा सति महाकालभिन्नस्य क्रियादेः कालिकसंबन्धेन किंचिदाधारत्वाभावात् तेन संबन्धेन महाकालान्यवृत्तित्वस्यैवाप्रसिद्ध्या महाकालान्यवृत्तित्वविशिष्टघटाभावमादाय लक्षणसमन्वयासंभवात् । घटाद्यभावानां स्वप्रतियोग्यधिकरणकालवृत्तितया प्रतियोगिवैयधिकरण्यासंभवाच्च अव्याप्तिरिति दीधित्युक्तं संगतमेवेति भावः ।।

अत्रानुपपत्तिं शङ्कते–**न च क्रियादेरिति** । तन्मते उक्तरीत्या क्रियादेः कालत्वाभावेन तद्व्यावर्तकम् अष्टद्रव्यातिरिक्तद्रव्यात्मकेति विशेषणं व्यर्थम् । कालमात्रेत्यत्रस्थकालपदेनैव



क्रियादिव्यावृत्तिसंभवात् इति भावः । तत्र समाधानमाह–**तादृशद्रव्यात्मक** इति । अष्टद्रव्यातिरिक्तद्रव्यात्मक एव काल इति ये वदन्ति तन्मतसूचनार्थं तत्कथनम् । तत्सूचनमपि किमर्थमितिचेत्– सामान्यतः कालो घटवान् महाकालत्वादित्यत्राव्याप्तिः इत्युक्ते मतान्तररीत्या अन्यत्रापि कालत्वसत्त्वेन व्यभिचारित्वशङ्का स्यात् । तथाचासद्धेतुत्वेन अलक्ष्यत्वात् अव्याप्तिर्वक्तुं न शक्येतेति सद्धेतुत्वसंपादनार्थं तादृशमतविशेषसूचनमावश्यकमिति भावः । **लक्ष्यतासूचनायेति** । सद्धेतुत्वसूचनायेत्यर्थः । सद्धेतौ लक्षणासत्त्वं हि अव्याप्तिः ।।

## गादाधरी

**अथवा** भवतु कालोपाधिरपि कालिकसंबन्धेनाधिकरणम् । तदधिकरणत्वसाधकश्च **इदानीं** घटः **इदानीं** पटः इत्यादिप्रत्ययो व्यवहारश्च । तस्य च अननुगतोपाधिमात्रविषयकत्वेऽनुगताधारत्वावगाहित्वानुपपत्त्या क्रियारूपोपाधिविशिष्टमहाकालस्य घटाद्याधारतावगाहित्वमावश्यकम् । विशिष्टे घटाद्याधारत्वावगाहित्वे विशिष्टान्तर्गतविशेषणेऽपि तदवगाहित्वमावश्यकमिति खण्डकालस्य कालिकसंबन्धेनाधारतासिद्धिः ।।

एवं च इदानीं महाकालान्यवृत्तित्वविशिष्टो घटः इति प्रत्ययादिः खण्डकाले विशिष्टाधारतायां मानं न त्वन्य इति तत्र तत्साधकप्रत्ययबलादेव **महाकालान्यवृत्तित्वानिरूपकस्यापि** महाकालस्य विशिष्टाधारत्वसिद्धिः दुर्वारैव । तथा च महाकाले विशिष्टघटाभावोऽपि विशिष्टप्रतियोगिसमानाधिकरणः । तादृशप्रतीत्यनभ्युपगमे खण्डकाले न विशिष्टप्रतियोग्यधिकरणत्वप्रसिद्धिरिति उक्तस्थलेऽव्याप्तिवारणमशक्यम् इत्याहुः ।।

## व्याख्या

ननु मतान्तररीत्या कालत्वस्य क्रियादौ सत्त्वे तन्मतरीत्या व्यभिचारोऽपि न शङ्कितुं शक्यते तत्र साध्यस्य घटस्य कालिकसंबन्धेन क्रियायां सत्त्वेन साध्याभावस्याभावात् इत्यस्वरसादाह—**अथवेति** ।।

इदानीमित्यादेः महाकालविषयकत्वे इदानीं घटः न तदानीम् इति प्रत्ययः एतत्क्रियाविशिष्टमहाकाले घट तत्क्रियाविशिष्टमहाकाले न घट इत्येवं क्लेशेनोपपादनीयः । तदपेक्षया उपाधेः क्रियाया एव कालिकसंबन्धेन आधारत्वं स्वीकर्तुमुचितम् । अनुगतप्रतीतिनिर्वाहार्थं परं तत्तत्क्रियाविशिष्टमहाकाले घटाद्याधारतावगाहित्वमावश्यकम् । विशिष्टे आधारत्वावगहित्वे विशेषणेऽपि आधारत्वावगाहित्वम् आवश्यकम्, न तु अवच्छेदकत्वमेव विशेषणस्येति वाच्यम् । असति बाधके विशिष्टेऽन्वयस्थले विशेषणेऽपि तत्संभवात् । तथा च खण्डकालस्यापि कालिकसंबन्धेन आधारत्वसिद्धिः । ततश्च खण्डकालस्य महाकालान्यवृत्तित्वविशिष्टघटाधारत्वसाधिका या इदानीं महाकालान्यवृत्तित्वविशिष्टो घटः इति प्रत्ययः स एव इदानींपदेन विवक्षिते क्रियाविशिष्टे महाकाले महाकालान्यवृत्तित्वविशिष्टघटमवगाहमानः महाकाले महाकालान्यवृत्तित्वविशिष्टघटसत्त्वे प्रमाणमिति तादृशविशिष्टघटरूपप्रतियोग्यधिकरणमहाकालवृत्तिः स विशिष्टाभावः प्रतियोग्यनधिकरणवृत्तिर्न भवतीति सुतरां शुद्धघटाद्यभावोऽपि तथा न भवतीति कृत्वा दीधित्युक्ता प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिः संगच्छत एवेति तात्पर्यम् । **महाकालान्यवृत्तित्वानिरूपकस्येति** । महाकालान्यनिरूपितवृत्तित्वस्य निरूपकः महाकालान्य एव यद्यपि, तथापि इदानीमित्यनेन उपाधिविशिष्टमहाकालवाचिना महाकालस्याधारत्वमवगाह्यते इति भावः ।।

अथवेत्यादिकल्प एव **गदाधरभट्टचार्याणां** निर्भरः । तथा हि–**चतुर्दशलक्षण्यां प्रथमस्वलक्षणे** प्रतियोगिसामानाधिकरण्यघटकसंबन्धविचारावसरे ''यदि च महाकालान्यत्वविशिष्टघटोऽपि महाकाले वर्तते । कथमन्यथा सिद्धान्तलक्षणे महाकालो घटवान् कालपरिमाणात् इत्यादौ महाकालान्यत्वविशिष्टघटाभावस्यैव प्रतियोगिव्यधिकरणस्य प्रसिद्धतया उभयाभावघटाभावस्यैव प्रतियोगिव्यधिकरणस्य प्रसिद्धतया



उभयाभावघटितप्रयोगिवैयधिकरण्यनिर्वचनायासस्य निष्प्रयोजनत्वापत्तेः इति ग्रन्थः संगच्छते – इति मत्पितृचरणाः प्राहुः ।।

## गादाधरी

**अन्ये तु**–कालिकसंबन्धः स्वरूपानतिरिक्तः । तथा च खण्डकाले महाकालानुयोगिकतादृशसंबन्धानां तत्तत्स्वरूपाणामनुगमकसंबन्धतावच्छेदकाभावेन प्रत्येकमेव संबन्धता । तथा च महाकालस्वरूपसंबन्धेनैव घटादेः महाकालत्वादिव्यापकता वाच्येति दुरुद्धरैवाव्याप्तिः । तादृशसंबन्धेन महाकालान्यवृत्तित्वस्य अप्रसिद्धेरिति वदन्ति ।

**तदसत्** । स्वरूपाणां प्रातिस्विकरूपेण संबन्धत्वे यत्किंचित्खण्डकालस्वरूपसंबन्धेन साध्यतायां तादृशखण्डकालमात्रवृत्तिहेतुकेऽपि प्रतियोगिव्यधिकरणाभावाप्रसिद्धिसंभवात् महाकालमात्रवृत्तिहेतुकानुधावनस्य निर्बीजत्वापातात् ।

## व्याख्या

कालो घटवान् कालत्वात् इत्यत्र दीधित्युक्ताव्याप्तिं संगमयतामन्येषां मतमनुवदति–**अन्ये तु** इत्यादिना । कालिकसंबन्धः तत्तत्कालस्वरूपान्नातिरिक्तः । खण्डकालानुयोगिकमहाकालानुयोगिककालिकसंबन्धानां तत्तत्कालस्वरूपत्वेन अननुगततया अनुगमकधर्मान्तरस्य संबन्धतावच्छेदकस्याभावेन प्रत्येकतत्तद्रूपेणैव कालिकसंबन्धस्य संबन्धता वक्तव्या । तथा च महाकालो घटवान् इत्यत्र महाकालस्वरूपेणैव कालिकसंबन्धेन घटस्य साध्यस्य महाकालत्वरूपहेतुव्यापकत्वं वक्तव्यम् । ततश्च तादृशसंबन्धेन घटस्य महाकालान्यवृत्तित्वं नास्तीति महाकालान्यवृत्तित्वविशिष्टघटरूपप्रतियोग्यप्रसिद्ध्या महाकालान्यवृत्तित्वविशिष्टघटाभावः प्रतियोगिव्यधिकरण इति वक्तुमशक्यतया घटाद्यभावस्य च प्रतियोग्यधिकरणकालवृत्तितया प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिः युक्तैवेति भावः ।।

तन्मतं खण्डयति–**तदसत्** इति । कालिकस्वरूपसंबन्धानां प्रत्येकरूपेण संबन्धत्वे यत्किंचित्खण्डकालपक्षकघटादिसाध्यकतत्कालत्वहेतुकस्थलेऽपि प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः वक्तुं शक्यते । कथमिति चेत्–तत्कालान्यवृत्तित्वविशिष्टघटाभावस्य ग्रहणे तत्कालान्यवृत्तित्वविशिष्टघटस्य तत्कालानुयोगिककालिकसंबन्धरूपसाध्यतावच्छेदकसंबन्धेन अधिकरणाप्रसिद्धिरिति प्रतियोग्यनधिकरणवृत्तित्वाप्रसिद्धिः । तत्कालवृत्तिघटाभावस्तु हेत्वधिकरणवृत्तिरेव न संभवतीति ।।

तथा च यत्किंचित्खण्डकालपक्षकघटादिसाध्यकतत्कालत्वरूपसद्धेतावपि प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिसंभवात् महाकालमात्रवृत्तिहेतुकस्थलानुधावनमसंगतं स्यात् इति अस्वारस्यमेतन्मते इति भावः ।।

## गादाधरी

**परे तु**–साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तावेव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिवैयधिकरण्यनिवेशः, न तु साध्यतावच्छेदकोपलक्षितसाध्यवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तौ । अन्यथा महाकाले पृथिव्यादिवृत्तित्वोपलक्षितजात्यनुमानानुपपत्तेः । साध्यतावच्छेदके प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वात् । इत्थं च साध्यतावच्छेदकोपलक्षितस्य यत्र साध्यता तत्रैवाव्याप्तिशङ्कापरोऽयं ग्रन्थः । तत्र यथाश्रुतप्रतियोगिवैयधिकरण्यस्यैव निवेशेन महाकालान्यवृत्तित्वविशिष्टघटाभावस्यापि लक्षणघटकत्वादित्याहुः । **तदपि न साधुः, अग्रिमविशिष्ट**पदोपादानतद्व्यावृत्तिप्रदर्शनादिविरोधात् ।।

## व्याख्या

कालो घटवान् महाकालत्वात् इत्यत्र प्रकारान्तरेणाव्याप्तिं संगमयतां मतमनुवदति–**परे तु** इत्यादिना । तेषामयमाशयः–अनुमितिः द्विविधा–साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयिणी, साध्यतावच्छेदकोपलक्षितवैशिष्ट्यविषयिणी चेति । तयोर्मध्ये



साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुमित्यौपयिकव्याप्तावेव प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यनिवेशः । न तु साध्यतावच्छेदकोपलक्षितवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तावपि । तत्र तु केवलप्रतियोगिवैयधिकरण्यस्यैव निवेशः । अन्यथा महाकालः पृथिव्यादिवृत्तित्वोपलक्षितजातिमान् महाकालत्वात् इत्यत्राव्याप्तिः स्यात् । तथा हि– हेत्वधिकरणे महाकाले पृथिव्यादिवृत्तित्वोपलक्षितद्रव्यत्वरूपजातिसत्त्वात् अयं सद्धेतुः । अत्र साध्यतावच्छेदकसंबन्धः कालिकसंबन्धः । हेत्वधिकरणमहाकालवृत्तिर्यः अभावः पृथिव्यादिवृत्तित्वविशिष्टद्रव्यत्वाभावः । काले द्रव्यत्वसत्त्वेऽपि पृथिव्यादिवृत्तित्वविशिष्टद्रव्यत्वाभावात् । स च पृथिव्यादिवृत्तित्वविशिष्टद्रव्यत्वत्वरूपं यत् प्रतियोगितावच्छेदकं तदवच्छिन्नानधिकरणकालवृत्तिः तादृशाभावप्रतियोगितावच्छेदकत्वमेव पृथिव्यादिवृत्तित्वोपलक्षितद्रव्यत्वत्वरूपे साध्यतावच्छेदकेऽस्तीत्यव्याप्तिः । उपलक्षणस्याप्यवच्छेदकतायाः एतद्ग्रन्थादौ समर्थितत्वात् । एतादृशाव्याप्तिवारणाय उपलक्षितवैशिष्ट्यावगाह्यनुमित्यौपयिकव्याप्तौ केवलप्रतियोगिवैयधिकरण्यमेव निवेशनीयम् । तथा सति पृथिव्यादिवृत्तित्वविशिष्टद्रव्यत्वाभावो न लक्षणघटकः । तस्य द्रव्यत्वरूपप्रतियोग्यधिकरणकालवृत्तित्वात् प्रतियोगिवैयधिकरणत्वाभावात् । इत्थं च साध्यतावच्छेदकोपलक्षितस्य धर्मस्य यत्र साध्यता कालः पृथिव्यादिवृत्तित्वोपलक्षितद्रव्यत्ववान् कालत्वात् इत्यादि तत्रैव अव्याप्तिप्रदर्शनपरोऽयं **दीधितिग्रन्थः** । तत्र च केवलप्रतियोगिवैयधिकरण्यस्यैव निवेशेन महाकालान्यवृत्तित्वविशिष्टघटाभावस्य वा पृथिव्यादिवृत्तित्वोपलक्षितद्रव्यत्वाभावस्य घटरूपप्रतियोगिसमानाधिकरणतया द्रव्यत्वरूपप्रतियोगिसमानाधिकरणतया च लक्षणाघटकतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनाव्याप्तेः संभवात् इति **परे तु** इत्यादिग्रन्थस्याशयः । तन्मतमपि न समीचीनम् इत्याह–**तदपि न साधु** इति । **अग्रिमविशिष्टेति** । अत्रैव अनुपदम् अनुवदिष्यमाणे **'न च तादृशसंबन्धेन''** इति शङ्काग्रन्थे प्रतियोगिताबच्छेदक-

विशिष्टेत्यस्य प्रयोजनं वक्ष्यते । तेन विशिष्टवैशिष्ट्यावगाह्यनुमित्यौपयिकव्याप्तावेव, उक्तस्थले कालो घटवान् कालपरिमाणात् अथ वा कालत्वात् इत्यत्रैव अव्याप्तेराशङ्क्यमानत्वात् तद्विरोधात् इति भावः ।।

## दीधितिः

**न च तादृशसंबन्धेन** हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमेव **वक्तव्यम्** । तथा चावृत्ति**गगनाद्यभावद्वारिकैव** तत्सिद्धिः । **सत्ताद्यधिकरण**कर्मादौ समवायेन ज्ञानसामान्यस्य **संयोगसामान्यस्य** च अवृत्तेर्नातिप्रसङ्गः ।।

## गादाधरी

**तादृशसंबन्धेन**–प्रतियोगितावच्छेदकसंबन्धेन साध्यतावच्छेदकसंबन्धेन वा । **वक्तव्यम्**–अभावविशेषणतया **अभावपूर्वप्रतीकेन** विवक्षणीयम् । **गगनाद्यभावद्वारिकैवेति** । तत्प्रतियोगिनः **कालिकसंबन्धेना**धिकरणाप्रसिद्ध्या तदनधिकरणत्वाप्रसिद्धावपि **वृत्तिमति** प्रसिद्धायाः कालिकसंबन्धेन महाकालवृत्तितायाः अभावस्य **तत्र** प्रसिद्धत्वात् इति भावः ।।

**ज्ञानवान्** सत्त्वात्, संयोगी सत्त्वात् इत्यादौ क्रमेण संबन्धविशेषनिवेशयत्किञ्चित्पदोपादनयोर्व्यावृत्तिमाह–**सत्ताद्यधिकरणेति** । **संबन्धविशेषानुपादाने** कर्मादौ समवायेन ज्ञानाभावप्रगियोगिनोऽवृत्तावपि विषयतासंबन्धेन वृत्तेः **तादृशाभावो** न लक्षणाघटकः स्यात् । कर्मादौ संयोगाभावप्रतियोगिनोऽसत्त्वेऽपि हेत्वधिकरणद्रव्यवृत्तितया हेत्वधिकरणवृत्तित्वसामान्याभावासत्त्वात् सोऽपि न तथा स्यादिति अभावान्तरमादायातिव्याप्तिप्रसङ्गात् इति भावः ।।

**यद्यपि** यत्किंचित्पदस्य व्यावृत्तिः ज्ञानसाध्यकेऽपि संभवति, **ज्ञानस्य समवायेनाव्याप्यवृत्तितया** तत्साध्यकेऽपि प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकत्वात्;



तथापि प्रसिद्धाव्याप्यवृत्तिसाध्यके व्यभिचारिणि संयोगी सत्त्वात् इत्यादौ तदनुक्तौ तत्र व्यावृत्तिर्न संभवतीति शङ्का स्यात्, तन्निराकरणाय तत्र तत्प्रदर्शनम् ।।

## व्याख्या

कालो घटवान् कालत्वात् इत्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति पूर्वमाशङ्कितम् । तत्परिहाराय व्याप्तिघटकस्य प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणेत्यन्तस्य परिष्कारं कृत्वा अप्रसिद्धिर्वारयितुं शक्यते इति **न च तादृशसंबन्धेन** इत्यादिग्रन्थः प्रवृत्तः । **तादृशसंबन्धेन**–प्रतियोगितावच्छेदकसंबन्धेन साध्यतावच्छेदकसंबन्धेन वा । **वक्तव्यम्**–अभावात् पूर्वम् अभावविशेषणतया प्रोक्तेन प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणेत्यनेन विवक्षणीयम् । **गगनाद्यभावद्वारिकेति** । तथा च प्रतियोगितावच्छेदकसंबन्धेन साध्यतावच्छेदकसंबन्धेन वा हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेद-काबच्छिन्नसामानाधिकरण्यं व्याप्तिः इति पर्यवसितम् । प्रतियोगितावच्छेदकसंबन्धेनेत्यस्य अवृत्ति इत्यत्र वृत्तावन्वयः । वृत्तीत्यस्य प्रतियोगिसामान्येऽन्वयः। वह्निमान् धूमात् इत्यादौ संयोगेन घटाद्यभावः लक्षणघटकः । तदीयप्रतियोगितावच्छेदकविशिष्टप्रतियोगिघटसामान्यं हेत्वधिकरणपर्वते प्रतियोगितावच्छेदकसंयोगसंबन्धेनावृत्तिः । संयोगेन वह्न्यभावस्तु न ग्राह्यः । तदीयप्रतियोगिनः वह्निसामान्यस्य हेत्वधिकरणवृत्तित्वाभावस्य असंभवात् पर्वतीयवह्नेः हेत्वधिकरणपर्वतवृत्तित्वात् । तथा च घटाभावप्रतियोगितानवच्छेदकत्वं वह्नित्वेऽस्तीति लक्षणसमन्वयः । धूमवान् वह्नेः इत्यादौ धूमाभावोऽपि लक्षणघटकः । तत्प्रतियोगिधूमसामान्यस्य हेत्वधिकरणीभूतायोगोलकावृत्तित्वात् । अतो नातिव्याप्तिः ।।

कालो घटवान् कालपरिमाणात् इत्यत्र अवृत्तिगगनाभाव एव लक्षणघटकः । तत्प्रतियोगिनः गगनस्य हेत्वधिकरणकालावृत्तित्वात् ।।

तथाच – यदभावीयप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसामान्यं हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिरूपितप्रतियोगितावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाभाववत् तदभावव्यक्तित्वं प्रतियोगिवैयधिकरण्यम् । **अभावपूर्वप्रतीकेनेति** । **मणिग्रन्थस्थ**व्याप्तिलक्षणघटकाभावशब्दात् पूर्वं विद्यमानेन प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणेतिशब्देनेत्यर्थः । यथाश्रुतप्रतियोगिवैयधिकरण्यस्य गगनाधिकरणाप्रसिद्ध्या गगनाभावेऽप्रसिद्धावपीत्यर्थः । उक्तविवक्षायां प्रसिद्धिः संभवतीत्याह–**कालिकसंबन्धेनेति** । **वृत्तिमति**– घटादौ । **तत्र**–गगनादौ ।।

उक्तपरिष्कारघटकदलानां प्रयोजनमाह–**ज्ञानवान्** इति । आत्मा ज्ञानवान् सत्त्वात् इत्यादावतिव्याप्तिवारणाय संबन्धविशेषनिवेशः, संयोगी द्रव्यत्वात् इत्यत्रातिव्याप्तिवारणाय हेत्वधिकरणे यत्किंचित्त्वनिवेशः इत्यर्थः । तदुपपादयति – **संबन्धविशेषानुपादाने** इत्यादिना । प्रतियोगितावच्छेदकसंबन्धेनेत्यनुपादाने आत्मा ज्ञानवान् सत्त्वात् इत्यत्र अतिव्याप्तिः । समवायेन ज्ञानाभाववति कर्मादौ सत्तायाः सत्त्वात् अयं व्यभिचारी । तत्र समवायसंबन्धावच्छिन्नज्ञानाभावमादायातिव्याप्तिर्वारणीया । परं तु ज्ञानाभावप्रतियोगिनः ज्ञानस्य हेत्वधिकरणे सत्ताधिकरणे कर्मादौ विषयतासंबन्धेन वृत्तितया अवृत्तित्वं नास्तीति अवृत्तिगगनाद्यभावमादाय तद्प्रतियोगित्वं ज्ञानेऽस्तीत्यतिव्याप्तिः । तद्वारणाय प्रतियोगितावच्छेदकसंबन्धेनेत्युक्तम् । तदुक्तौ च समवायेन ज्ञानाभावोऽपि लक्षणघटकः तत्प्रतियोगिनः ज्ञानस्य हेत्वधिकरणे कर्मादौ प्रतियोगितावच्छेदकसमवायेनावृत्तित्वात् । ज्ञानाभावप्रतियोगित्वमेव ज्ञानेऽस्तीति नातिव्याप्तिः ।।

एवं हेत्वधिकरणे यत्किंचिदिति विशेषणानुपादाने द्रव्यं संयोगि सत्त्वादित्यादावतिव्याप्तिः । अत्रापि साध्यतावच्छेदकसंबन्धः समवायः । समवायेन संयोगरूपसाध्याभावाधिकरणे कर्मादौ सत्तायाः सत्त्वात् अयं व्यभिचारी । अत्रापि समवायसंबन्धावच्छिन्नसंयोगाभावमादायैवातिव्याप्तिर्वारणीया । परं तु संयोगाभावप्रतियोगिनः संयोगस्य सत्तारूपहेत्वधिकरणीभूतद्रव्यवृत्तितया हेत्वधिकरणावृत्तित्वं नास्तीति अवृत्तिगगनाद्य-



भावमादायातिव्याप्तिः स्यात् । तद्वारणाय यत्किंचिद्व्यक्तीत्युक्तम् । तन्निवेशे च समवायसंबन्धावच्छिन्नसंयोगाभावोऽपि लक्षणघटकः, तत्प्रतियोगिनः संयोगस्य प्रतियोगितावच्छेदक-समवायसंबन्धेन हेत्वधिकरणीभूतकर्मादिरूपयत्किंचिद्व्यक्त्यवृत्तित्वात् । अतो नातिव्याप्तिरिति भावः ।।

**तादृशाभावः**–समवायसंबन्धावच्छिन्नज्ञानाभावः । **यद्यपीत्यादि** । अत्रायमाशयः– ज्ञानवान् सत्त्वात् इत्यादावनिव्याप्तिवारणाय संबन्धविशेषनिवेशः । संयोगी सत्त्वात् इत्यत्रातिव्याप्तिवारणाय यत्किंचित्त्वनिवेश इति विभागः कुतः? ज्ञानवान् सत्त्वात् इति एकत्र स्थल एव संबन्धविशेषनिवेशयत्किंचित्त्वनिवेशयोः प्रयोजनं वक्तुं शक्यते । प्रतियोगितावच्छेदकसंबन्धानिवेशे ज्ञानवान् सत्त्वात् इत्यत्रातिव्याप्तिः उपपादितैव । यत्किंचित्त्वानिवेशेऽपि तत्रैव अतिव्याप्तिः । हेत्वधिकरणे आत्मनि समवायसंबन्धावच्छिन्नज्ञानाभावप्रतियोगिनः ज्ञानस्य प्रतियोगितावच्छेदकसमवायसंबन्धेन वर्तमानतया हेत्वधिकरणवृत्तित्वसामान्याभावरूपस्य हेत्वधिकरणावृत्तित्वस्य असत्त्वेन लक्षणाघटकतया अवृत्तिगगनाभावमादाय अतिव्याप्तिः । यत्किंचिद्व्यक्तीत्युक्तौ तु कर्मादिव्यक्त्यवृत्तित्वात् प्रतियोगिनः ज्ञानस्य समवायसंबन्धावच्छिन्नज्ञानाभावस्यापि लक्षणघटकतयानातिव्याप्तिरिति वक्तुं शक्यत्वात् इति । अत्र मध्ये काचन शङ्का– ज्ञानवान् सत्त्वात् इत्यस्य व्याप्यवृत्तिसाध्यकतया तत्र प्रतियोगिवैयधिकरण्याघटितव्याप्तेरेव पूर्वमुक्ततया तत्र प्रतियोगिवैयधिकरण्ययघटकपदप्रयोजनं वक्तुं न शक्यते इति । तत्समाधानायोक्तं **ज्ञानस्य समवायेनाव्याप्यवृत्तितयेति** । कालिकाव्याप्यवृत्तितयेत्यर्थः । आत्मनि सुषुप्तिकाले समवायेन ज्ञानाभावात् ।।

यद्यपीति शङ्कां समाधत्ते–**तथापीति** । स्पष्टोऽर्थः । **तदनुक्तौ** यत्किंचित्त्वनिवेशप्रयोजनानुक्तौ । **व्यावृत्तिः**–अतिव्याप्तिवारणरूपं प्रयोजनम् । एतादृशस्थले बुद्धेरवधानमावश्यकम् ।

## गादाधरी

**केचित्तु** – संयोगसाध्यके आदिपदग्राह्यगुणान्यत्वविशिष्टसत्ताहेतुकस्थले साध्यतावच्छेदकसंबन्धस्यैव व्यावृत्तिप्रदर्शनपरम् – **संयोगसामान्यस्य चेति** । विषयितायाः वृत्त्यनियामकत्वे प्रतियोगिवैयधिकरण्ये संबन्धित्वानिवेशपक्षे पूर्वस्थलीयव्यावृत्त्यसंगतेरित्यस्वरसादेव संयोगाभावस्य कालिकसंबन्धेनैव सर्वत्र कर्मणि प्रतियोगिसामानाधिकरण्यसत्त्वात् अतिव्याप्तिप्रसक्तिरिति वदन्ति ।।

तदसत् । **उक्तास्वरसेन पूर्वमपि** ज्ञानसाध्यकं परित्यज्य स्थलान्तरानुसरणात् अत्र निर्बीजतादृशस्थलपरित्यागेन संदर्भविरोधात् । **आदिपदेन** हेतोः साध्यस्य च विशेषशब्देनोपादानस्यायुक्तत्वाच्च ।।

## व्याख्या

**दीधितौ सत्ताद्यधिकरणकर्मादौ इति** आदिपदं प्रयुक्तम् । अग्रे **ज्ञान-सामान्यस्य संयोगसामान्यस्य चेति** वर्तते । सत्तादीत्यनेन हेतुर्विवक्षितः । ज्ञानसामान्यस्य संयोगसामान्यस्य इति पदाभ्यां साध्यं विवक्षितम् । भट्टाचार्यैः ज्ञानवान् सत्त्वात् संयोगवान् सत्त्वात् इति स्थलद्वयेऽपि सत्ताया एव हेतुत्वमाश्रित्य व्याख्यानं कृतम्। तदपेक्षया सत्ताद्यधिकरणेत्यत्र आदिपदेन द्वितीयसाध्यस्थले हेतुप्रदर्शनपरत्वमेव युक्तम्। अन्यथा आदिपदस्य वैयर्थ्यात् । अपि च **दीधितिग्रन्थस्य** स्थलद्वयेऽपि प्रतियोगितावच्छेदकसंबन्धनिवेशस्यैव प्रयोजनकथनमेव **दीधितिकार**विवक्षितम् इति मन्यमानानां मतमनुवदति–**केचित्तु** इत्यादिना । तथाच सत्तादीत्यत्र आदिपदेन गुणान्यत्वविशिष्टसत्तायाः परिग्रहः। तथा च अयं संयोगी गुणान्यत्वविशिष्टसत्त्वात् इत्यत्रापि प्रतियोगितावच्छेदकसंबन्धस्य वा साध्यतावच्छेदकसंबन्धस्य वा निवेशस्य प्रयोजनमुच्यते, न तु एकत्र संबन्धनिवेशस्य अपरत्र यत्किंचित्त्वनिवेशस्येति । तथा हि – प्रथमस्थले ज्ञानवान् सत्त्वात् इत्यत्र विषयतायाः वृत्त्यनियामकत्वे प्रतियोगिवैयधि-



करण्यशरीरे संबन्धित्वानिवेशे च ज्ञानाभावमादाय व्यावृत्त्यसंभवात् स्थलान्तरानुसरणमिति पूर्वमुक्तमेव । तस्मात् अस्वरसादेव संयोगी गुणान्यत्वविशिष्टसत्त्वात् इति स्थलान्तरानुसरणम् । साध्याभावस्य संयोगसामान्याभावस्य प्रतियोगी यः संयोगः तस्य कालिकसंबन्धेन गुणान्यत्वविशिष्टसत्तारूपहेत्वधिकरणे कर्मणि सत्त्वेन हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यवृत्तित्वं नास्तीति तदवृत्तिप्रतियोगिकत्वं संयोगाभावस्य नास्तीति तस्य लक्षणाघटकतया अभावान्तरम् अवृत्तिगगनाभावमादायातिव्याप्तिः स्यात् । अतः प्रतियोगितावच्छे-दकसंबन्धेनेत्युक्तम् । तदुक्तौ च समवायसंबन्धावच्छिन्नसंयोगाभावस्य लक्षणघटकतया तत्प्रतियोगिनः संयोगस्य हेत्वधिकरणकर्मणि कालिकसंबन्धेन सत्त्वेऽपि प्रतियोगितावच्छेदकसमवायसंबन्धेनावृत्तित्वात् संयोगाभावस्यापि लक्षणघटकतया तत्प्रतियोगित्वमेव साध्यतावच्छेदके संयोगेऽस्तीति नातिव्याप्तिः ।।

संयोगी गुणान्यत्वविशिष्टसत्त्वात् इत्यत्र हेतौ गुणान्यत्वेति विशेषणानुपादाने शुद्धसत्तायाः हेतुत्वे सत्तारूपहेत्वधिकरणे नित्यगुणे कालिकसंबन्धेन संयोगस्यावृत्तित्वात् संयोगाभावस्यापि हेत्वधिकरणावृत्तिप्रतियोगिकत्वेन लक्षणघटकतया तत्प्रतियोगित्वमेव संयोगेऽस्तीति अतिव्याप्तेरप्रसक्त्या गुणान्यत्वविशिष्टसत्तायाः हेतुत्वानुसरणम् । साध्यतावच्छेदकसंबन्धस्येत्येतत् प्रतियोगितावच्छेदकसंबन्धस्याप्युपलक्षणम् ।।

एतन्मतं दूषयति – **तदसत्** इत्यादिना । **उक्तास्वरसेन**–विषयतायाः-वृत्त्यनियामकत्वे व्यावृत्त्यसंगत्या । **पूर्वमपीत्यादि** । पूर्वं प्रतियोग्यसामानाधिकरण्यघटितलक्षणे प्रतियोगितावच्छेदकसंबन्धस्य प्रतियोग्यसामानाधिकरण्यशरीरे प्रवेशस्य प्रयोजनकथनपरे ''ज्ञानवान् द्रव्यत्वात्, विशेषगुणवान् मनोन्यद्रव्यत्वात्'' इत्यत्र विषयतायाः वृत्त्यनियामकत्वपक्षे पूर्वस्थलं परित्यज्य विशेषगुणसाध्यकस्थलमनुसृतम् । प्रकृते वृत्त्यनियामकत्वपक्षे स्थलान्तरमनुस्रियते चेत् पूर्वोक्तस्थलमेवानुस्रियेत, उपस्थितत्वात्, न तु भवदुक्तं स्थलान्तरम् । अतो नैवं व्याख्यानं युक्तम् ।।

ननु एकेन लिखितयोः परस्परग्रन्थयोः परस्परोपलक्षणत्वात् पूर्वमपि ''संयोगी गुणान्यत्वविशिष्टसत्त्वात्'' इति, अत्रापि ''विशेषगुणवान् मनोऽन्यद्रव्यत्वात्'' इति स्थलं गृह्यत एवेति न पूर्वापरग्रन्थविरोधः इति शङ्कायामाह – **आदिपदेनेति** । **अत्र**–सत्त्वादीत्यत्र सामान्येन आदिपदेन हेत्वन्तरग्रहणस्य संयोगरूपविशेषशब्देनैव साध्यग्रहणस्य च वाक्यस्वारस्यविरुद्धत्वात् । लोके हि स्वरसतः वह्न्यादिसाध्यकधूमादिहेतुकेत्येव प्रयुज्यते, न तु एकत्र आदिशब्दः सामान्यरूपः अपरत्र विशेषशब्दश्चेति । अतो नेदं व्याख्यानं युक्तम् इति भावः ।।

## दीधितिः

भूतत्वमूर्तत्वोभयत्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्तादिकं तु **न मनोगुणादिवृत्ति, संयोगसामान्यं च** न यत्किंचिद्द्रव्यावृत्तीति वाच्यम् ।

## गादाधरी

प्रतियोगितावच्छेदकविशिष्टत्वोपादानस्य पूर्वोक्तस्थल एव व्यावृत्तिं स्मारयति– **भूतत्वेति** । **यद्यपि पूर्वं** विशिष्टसाध्यकेऽतिव्याप्तिदर्शनोत्तरं विशिष्टस्या-तिरिक्ततापक्षे तदसंगतेरस्वरसादुभयसाध्यकातिव्याप्तिर्दर्शिता, **तथापि द्वन्द्वे** अल्पाक्षरस्य पूर्वनिपातनियमात् उभयत्वविशिष्टान्तस्य प्रागभिधानम् । **अत्र** पूर्वस्थले द्वित्वावच्छिन्नप्रतियोगितायाः व्यासज्यवृत्तित्वोपगमेऽतिव्याप्तिर्न संभवतीत्यस्वरसेनैव द्वितीयस्थलातिव्याप्त्यवतारणं **पूर्वाभिप्रायविरोधादनुपादेयम्** ।।

## व्याख्या

प्रतियोगितावच्छेदकसंबन्धेन हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वं प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणेत्यनेन विवक्षितमिति **दीधितौ** उक्तम् । तत्र प्रतियोगितावच्छेदकविशिष्टेति दलस्य सामान्यपदस्य च प्रयोजनं भूतत्वमूर्तत्वेत्यादिना उक्तम् ।।



तथा हि – प्रतियोगितावच्छेदकविशिष्टेत्यनुपादाने हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यवृत्तिप्रतियोगिसामान्याको योऽभावः इति स्यात् । तथा सति भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इत्यत्र नातिव्याप्तिः । भूतत्वमूर्तत्वोभयाभाववति मनसि मूर्तत्वसत्त्वात् अयं व्यभिचारी हेतुः । अत्र भूतत्वमूर्तत्वोभयाभावमादाय अतिव्याप्तिर्वारणीया । प्रतियोगितावच्छेदकविशिष्टेत्यनुपादाने उभयाभावप्रतियोगिनः उभयस्य प्रत्येकानतिरेकात् प्रतियोगिसामान्यान्तर्गतस्य मूर्तत्वस्य हेत्वधिकरणमनोवृत्तितया हेत्वधिकरणमनोव्यक्त्यवृत्तित्वं नास्तीति तदवृत्तिप्रतियोगिकः भूतत्वमूर्तत्वोभयाभाव न भवतीति स न लक्षणघटकः, अपि तु तदवृत्तिघटाभाव एव तत्प्रतियोगितानवच्छेदकं मूर्तत्वभूतत्वोभयत्वरूपं साध्यतावच्छेदकं भवतीत्यतिव्याप्तिः स्यात् । तद्वारणाय प्रतियोगितावच्छेदकविशिष्टेत्युक्तम् । उभयत्वविशिष्टं भूतत्वमूर्तत्वोभयं मनसि नास्तीति हेत्वधिकरणमनोऽवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वं भूतत्वमूर्तत्वोभयाभावेऽस्तीति तस्य लक्षणघटकतया नातिव्यप्तिः ।।

एवं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्रापि गुणकर्मान्यत्वविशिष्टसत्ताभाववति गुणे कर्मणि च जातेः सत्त्वात् व्यभिचारिणि गुणकर्मान्यत्वविशिष्टसत्ताभावप्रतियोगिसत्तायाः गुणे कर्मणि च सत्त्वेन हेत्वधिकरणावृत्तिप्रतियोगिकः गुणकर्मान्यत्वविशिष्टसत्ताभावो न भवतीति घटाद्यभावान्तरमादायातिव्याप्तिः स्यात् । प्रतियोगितावच्छेदकविशिष्टेत्युक्तौ तु प्रतियोगितावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तायाः गुणाद्यवृत्तितया तस्या अभावोऽपि लक्षणघटक इति नातिव्याप्तिः ।।

एवं प्रतियोगिसामान्येत्यत्र सामान्यपदानुपादाने इदं संयोगि द्रव्यत्वात् इत्यत्र सद्धेतावव्याप्तिः । अत्र साध्याभावस्य संयोगसामान्याभावस्य–संयोगत्वावच्छिन्नप्रतियोगिताकाभावस्यापि लक्षणघटकत्वं स्यात् । तत्प्रतियोगिनः यत्किंचित्कप्यादिसंयोगस्य हेतुद्रव्यत्वाधिकरणयत्किंचिद्भूतलादिद्रव्यावृत्तितया तदवृत्तितादृशसंयो-

गप्रतियोगिकत्वात् । तत्प्रतियोगितावच्छेदकत्वं साध्यतावच्छेदकस्य संयोगत्व-स्येति । अतः सामान्यपदोपादानम् । संयोगसामान्यं हेत्वधिकरणावृत्ति न भवति इति संयोगसामान्याभावो न लक्षणघटकः, अपि तु गगनाद्यभाव एव, तत्प्रतियोगितान-वच्छेदकत्वं संयोगत्वेऽस्तीति नाव्याप्तिः इति **दीधिति**ग्रन्थस्य भावः । भूतत्वमूर्तत्वोभयत्व-विशिष्टं, गुणकर्मान्यत्व-विशिष्टसत्तात्वविशिष्टसत्तादिकं इति च्छेदः ।।

**गादाधर्यां यद्यपि पूर्वमिति** । इतः पूर्वं ''प्रतियोग्यसामानाधिकरण्यं च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यम्'' इत्यादिग्रन्थेन प्रतियोगितावच्छेदक-विशिष्टपदस्य विशिष्टसत्तासाध्यकस्थले प्रथमं व्यावृत्तिं प्रदर्श्य विशिष्टातिरिक्ततापक्षे अतिव्याप्त्यसंगतिमालोच्य भूतत्वमूर्तत्वोभयसाध्यकस्थले अतिव्याप्तिर्दर्शिता । संप्रति तादृशपदस्यैव प्रयोजनकथनावसरे **भूतत्वमूर्तत्वोभयत्वे**त्यादिग्रन्थेन पूर्वक्रमव्यत्यासेन कथनं कुत इति शङ्का । तत्र सामाधानमाह – **तथापि द्वन्द्व** इति । असति बाधके द्वन्द्वसमासे अल्पाचूकपदस्यैव पूर्वं प्रयोगः । अत एव ''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'' इत्यत्र दर्शपदस्य पूर्वं प्रयोगः । लोकेऽपि कृष्णार्जुनाविति साधुप्रयोगः, न तु अर्जुनकृष्णाविति । युधिष्ठिरार्जुनौ इत्यत्र ज्येष्ठत्वं बाधकम् । एवं च तादृशनियमानुसारेण भूतत्वमूर्तत्वोभयत्वस्य प्रागभिधानम् । गुणकर्मान्यत्वविशिष्ट-सत्तात्वविशिष्टेत्यपेक्षया भूतत्वमूर्तत्वोभयत्वविशिष्टेत्यस्याल्पाच्कत्वादिति भावः। वाक्यलेखने जागरूकः खलु **शिरोमणिः** ।।

अत्रैव मतान्तरमाह–**अत्रे**त्यादिना । भूतत्वमूर्तत्वोभयत्वावच्छिन्नसाध्य-कस्थले उभयाभावीयप्रतियोगितायाः व्यासज्यवृत्तित्वपक्षे प्रकृतपरिष्कारे प्रतियोगितावच्छेदक-विशिष्टेत्यनुपादानेऽपि यत्किंचिद्धेत्वधिकरणावृत्तिप्रतियोगितापर्याप्त्यधिकरणकत्वमिति निवेशेन अतिव्याप्तिवारणं संभवति, भूतत्वमूर्तत्वोभयाभावीयप्रतियोगिता-पर्याप्त्यधिकरणस्य भूतत्वमूर्तत्वोभयस्य हेत्वधिकरणमनोऽवृत्तित्वेन उभयाभावस्य



लक्षणघटकत्वात् तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके उभयत्वे सत्त्वात् । अतो गुणकर्मान्यत्वविशिष्टसत्तासाध्यकस्थलानुसरणमिति केचिदाहुः । तन्न समीचीन-मित्याह–**पूर्वाभिप्रायविरो-धादनुपादेयमिति** । यद्यत्र एवमभिप्रायो वर्ण्यते, तर्हि पूर्वं प्रतियोगिवैयधिकरण्यघटितलक्षणे प्रतियोगितावच्छेदकविशिष्टेति विशेषणव्यावृत्तिः विशिष्टातिरिक्तत्वपक्षे विशिष्टसाध्यकस्थले न संभवतीति उभयत्वावच्छिन्नसाध्यकस्थले प्रदर्शिता । इदानीं प्रतियोगितापर्याप्तिं निवेश्यातिव्याप्तिवारणे पूर्वमपि तथा निवेश्य वारणसंभवात् तत्र प्रतियोगितावच्छेदकविशिष्टेत्यस्य प्रयोजनकथनं विरुध्यते । विशिष्टातिरिक्तत्वस्य प्रागभिप्रेतस्यात्रापि त्यक्तुं शक्यत्वात् इति भावः ।।

## गादाधरी

**न मनोगुणादिवृत्तीति** । **एकविशेषावच्छिन्ने** तद्वृत्तित्वसत्त्वेऽपि तद्वृत्तितान-वच्छेदकविशेषान्तरावच्छिन्ने तत्र तद्वृत्तित्वाभाबोऽक्षत एव । एकरूपावच्छिन्न एव तत्तदभावयोर्विरोधेनावृत्तेः इति **अभिमानः** ।।

**न चैवं विशिष्टान्तानुपादानेऽपि** सत्तादौ विशिष्टसत्तात्वादिना गुणाद्यवृत्तित्वसत्त्वेन विशिष्टसत्ताद्यभावस्य लक्षणघटकतया अतिव्याप्त्यप्रसक्तेर्न विशिष्टान्तव्यावृत्तिसंभवः इति वाच्यम् । **प्रतियोगिनि** किंचिद्रूपावच्छिन्ने हेत्वधिकरणयत्किंचिद्व्यक्ति-वृत्तित्वाभावस्य लक्षणघटकत्वे सत्तावान् द्रव्यत्वादित्यादावपि सत्तात्वाद्यवच्छिन्नाभावस्य लक्षणघटकत्वापत्त्या अव्याप्त्यापत्तेः हेत्वधिकरणावृत्तित्वस्य तद्वृत्तिभिन्नत्वरूपस्यैव निवेशनीयतया विशिष्टसत्तावान् जातेः इत्यादौ विशिष्टसत्ताद्यभावस्य लक्षणघटकत्वा-निर्वाहेण अतिव्याप्तिवारणासंभवात् व्यावृत्तिसंगतेः ।।

सामान्यपदप्रयोजनम् आह–**संयोगसाभान्यं चेति** । संयोगी द्रव्यत्वात् इत्यादौ संयोगत्वावच्छिन्नाभावप्रतियोगियत्किंचित्संयोगव्यक्तेः हेत्वधिकरणयत्किंचिद्घटादि-

व्यत्त्यवृत्तित्वसत्त्वेऽपि तत्प्रतियोगिसामान्ये तदसत्त्वेन तादृशाभावस्य लक्षणाघटकतया नाव्याप्तिरित्यर्थः ।

## व्याख्या

ननु गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र विशिष्टस्य शुद्धानतिरिक्ततया सत्तायां गुणवृत्तित्वसत्त्वे गुणकर्मान्यत्वविशिष्टसत्तायामपि गुणवृत्तित्वाभावो न संभवति। एवमुभयस्य प्रत्येकानतिरिक्ततया मूर्तत्वे मनोवृत्तित्वसत्त्वे भूतत्वमूर्तत्वोभयत्वविशिष्टेऽपि मनोवृत्तित्वाभावो न संभवति । तथा च कथं न गुणावृत्ति, न मनोवृत्तीत्युच्यते इति शङ्कायामाह–**एकविशेषाबच्छिन्न** इति । सत्तात्वावच्छिन्ने गुणवृत्तित्वसत्त्वेऽपि गुणवृत्तितानवच्छेदकगुणान्यत्ववि-शिष्टसत्तात्वावच्छिन्ने गुणवृत्तित्वाभावः, मूर्तत्वत्वावच्छिन्ने मनोवृत्तित्वसत्त्वेऽपि मनोवृत्तितानवच्छेदकभूतत्वमूर्तत्वोभयत्वावच्छिन्ने मनोवृत्तित्वाभावो भवितुमर्हत्येव । एकरूपावच्छिन्न एव तत्तद्वृत्तित्वतदभावयोर्विरोधादिति भावः । वस्तुतो विशेष्यवृत्तिधर्मप्रतियोगिकस्य विशिष्टानुयोगिकस्याभावस्यानङ्गीकारात् **अभिमानः** इत्युक्तम् ।।

**न चैवमिति** । धर्मभेदेन एकस्मिन्नेव वृत्तित्वतदभावयोः सौलभ्ये प्रतियोगि-तावच्छेदकविशिष्टेत्यनुक्तावपि वस्तुतो विशिष्टसत्तादौ विशिष्टसत्तात्वादिना गुणवृत्तित्वाभावस्यापि सत्त्वात् हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगिकत्वस्य विशिष्टाभावोभयाभावयोः सत्त्वेन तयोर्लक्षणघटकतया अतिव्याप्तिवारणसंभवात् प्रतियोगितावच्छेदकविशिष्टेत्यस्य वैयर्थ्यमेवेति शङ्कितुराशयः । **विशिष्टान्तानुपादानेऽपि**– प्रतियोगितावच्छेदकविशिष्टेत्यस्यानुपादानेऽपि ।।

समाधत्ते–**प्रतियोगिनी**त्यादिना । अयमाशयः–हेत्वधिकरणीभूतयत्किं-चिद्व्यक्त्यवृत्तिस्वप्रतियोगिसामान्यक इत्यस्य हेत्वधिकरणीभूतयत्किंचिद्व्यक्ति-निरूपितवृत्तित्वप्रतियोगिकात्यन्ताभाववत्प्रतियोगिसामान्यक इति नार्थः, येनोक्तशङ्का



स्यात् । कुतो न तथा अर्थ इति चेत्–श्रूयताम् । सत्तावान् द्रव्यत्वात् इत्यत्र सद्धेतौ सत्ताभावोऽपि लक्षणघटकः स्यात् । तत्प्रतियोगिन्यां सत्तायां, हेत्वधिकरणी-भूतयत्किंचित्पृथिव्यां सत्तात्वेन सत्तायाः सत्त्वेऽपि पृथिव्यन्यत्वविशिष्टसत्तात्वेन सत्तायाः अवृत्तेः हेत्वधिकरणीभूतयत्किंचित् पृथिवीनिरूपितवृत्तित्वाभाववती सत्ता भवति तत्प्रतियोगिकश्च सत्ताभाव इति सत्ताभावस्यापि लक्षणघटकतया तत्प्रतियोगिता-वच्छेदकत्वमेव सत्तात्वरूपे साध्यतावच्छेदकेऽस्तीत्यव्याप्तिः स्यात् । तद्वारणाय अवृत्तिपदेन वृत्त्यत्यन्ताभावो न विवक्षणीयः, अपि तु वृत्तिभेद एव विवक्षणीयः । तथाच हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिरूपितवृत्तित्ववद्भिन्न – प्रतियोगिसामान्यको योऽभावः स एव प्रतियोग्यसमानाधिकरणहेत्वधिकरणवृत्त्यभाव इत्यस्यार्थः । तथा निष्कर्षे च भेदस्य व्याप्यवृत्तितया किंश्चिद्रूपेण वृत्तिमति रूपान्तरेण वृत्तिमद्भेदो वक्तुं न शक्यत इति संयोगी द्रव्यत्वात् इत्यत्र सत्ताभावप्रतियोगिन्यां सत्तायां सत्तात्वेन पृथिवीनिष्ठायां रूणान्तरेण–पृथिव्यन्यत्वविशिष्टसत्तात्वेन पृथिवीवृत्तिमद्भेदः न संभवतीति हेत्वधिकरणीभूतपृथिवीनिरूपितवृत्तिमद्भिन्नप्रतियोगिकत्वाभावात् सत्ताभावो न लक्षणघटक इति नाव्याप्तिः । तथा च प्रकृते गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्रापि तुल्यन्यायेन गुणकर्मान्यत्वविशिष्टसत्तायां हेत्वधिकरण–जात्यधिकरण-गुणनिरूपितवृत्तित्वं सत्तात्वेन रूपेण वर्तत इति तादृशवृत्तित्ववद्भेदः नास्तीति तादृशभेदवत्प्रतियोगिकत्वं गुणकर्मान्यत्वविशिष्टसत्ताभावे न संभवतीति तस्य लक्षणाघटकतया अभावन्तरमादाय अतिव्याप्तिः स्यात् । तद्वारणाय प्रतियोगितावच्छेदक-विशिष्टप्रतियोगिकेति विशेषणमावश्यकम् । एतन्निवेशे च हेत्वधिकरणी-भूतयत्किंचिद्व्यक्त्यवृत्तीत्यत्र न भेदः विवक्षणीयः । अपि तु अत्यन्ताभाव एव । तथाच हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिरूपितवृत्तित्वाभाववान् योऽभावः इति अभावान्तार्थः संपद्यते । गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र गुणकर्मान्यत्व-

विशिष्टसत्ताभावः लक्षणघटकः । स च उक्तविशेषणविशिष्टः । तत्प्रतियोगितावच्छेदक-गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नस्य हेत्वधिकरणीभूतगुणवृत्तित्वाभावात् – तादृश-वृत्तित्वाभाववत्प्रतियोगितावच्छेदक विशिष्टसत्तात्वविशिष्टप्रतियोगिकत्वात् । अतो नातिव्याप्तिः । सत्तावान् द्रव्यत्वात् इत्यत्र सत्तात्वावच्छिन्नाभावः न लक्षणघटकः तत्प्रतियोगितावच्छेदकसत्तात्ववि-शिष्टसत्तारूपप्रतियोगिनः हेतुभूतद्रव्यत्वाधि-कणयत्किंचित् द्रव्यावृत्तित्वविरहात् (सत्तायाः द्रव्यवृत्तित्वात्) । अतो नाव्याप्तिः । गगनाद्यभावमादाय लक्षणसमन्वयसंभवादिति भावः ।।

**सामान्यदपप्रयोजनमिति** । हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यवृत्तिप्रतियोगिता-वच्छेदकविशिष्टप्रयोगिसामान्यकेत्यत्र सामान्यपदप्रयोजनमाहेत्यर्थः । सामान्यपदानुपादाने संयोगी द्रव्यत्वादित्यत्र संयोगत्वावच्छिन्नाभावप्रतियोगियत्किंचित्संयोगस्य तदनधिकरणी-भूतहेत्वधिकरणावृत्तित्वेन संयो-गसामान्याभावस्य लक्षणघटकतया अव्याप्तिः स्थादिति तद्वारणाय सामान्यपदोपादानम् । तदुपादाने च संयोगसामान्ये हेत्वधिकरणव्यक्त्य-वृत्तित्वासत्त्वेन संयोगाभावस्य लक्षणाघटकतया नाव्याप्तिरिति भावः ।।

## दीधितिः

**विशिष्टस्यानतिरिक्तत्वात्** ।।

## गादाधरी

विशेष्यवृत्तेः विशिष्टानुयोगिकोऽभावोऽप्रामाणिक इत्याशयेन दूषयति–**विशिष्टस्या-नतिरिक्तत्वादिति** । **तथा** च उभयत्वादिविशिष्टस्य मूर्तत्वादेः शुद्धमूर्तत्वानतिरिक्ततया मूर्तत्वादिवृत्तेः मनोवृत्तित्वादेः अभावस्य उभयत्वादिविशिष्टेऽपि तस्मिन्नसंभवात् भूतत्व-मूर्तत्वोभयवान् मूर्तत्वात् **इत्यादौ** अतिव्याप्तिः विशिष्टान्तोपादानेऽपि दुर्वारेति भावः ।।

**न च** भूतत्वमूर्तत्वोभयं न मनसि, गुणान्यत्वविशिष्टसत्ता न गुणे इत्यादिसर्वानुभव-सिद्धप्रतीतिबलात् **द्वित्वविशिष्टसत्तात्वाद्यवच्छिन्ने मनोगुणादिवृत्तित्वाभावसिद्धेः** आवश्यकत्वात् नातिव्याप्तिरिति वाच्यम् । तादृशप्रतीत्या मनोगुणाद्यधिकरणकद्वित्व-विशिष्टसत्तात्वाद्यवच्छिन्नाभावस्यैवावगाहनात् ।।



## व्याख्या

**विशेष्यवृत्तेरिति** । विशेष्यवृत्तिधर्मप्रतियोगिकविशिष्टानुयोगिकाभावोऽप्रामाणिक इत्यर्थः । पूर्वं तु रूपभेदेनाभावो भवतीत्यभिप्रायेणोक्तम् । रूपभेदेनाप्यभावो न स्यात् इतीदानीमुच्यते । फलितमाह–**तथा चेति** । भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इत्यत्र हेतुभूतमूर्तत्वाधिकरणे मनसि भूतत्वमूर्तत्वोभयत्वविशिष्टस्य मूर्तत्वस्यापि सत्त्वमावश्यकम् । विशेष्ये मूर्तत्वे वर्तमानस्य मनोवृत्तित्वस्याभावः भूतत्वमूर्तत्वोभयत्व-विशिष्टेऽपि मूर्तत्वे न भवति । तथा च हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वा-भाववत्प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वनिवेशेऽपि भूतत्वभूर्तत्वोभयत्वावच्छिन्न-प्रतियोगिकाभावो लक्षणघटको न भवति इति अभावान्तरमादायातिव्याप्तिः ।।

एवं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र विशेष्यसत्तायां जात्यधि-करणीभूतगुणवृत्तित्वसत्त्वात् विशिष्टसत्तायामपि गुणवृत्तित्वमावश्यकम् । ततश्च जात्यधिकरणगुणवृत्तित्वाभाववत्प्रतियोगितावच्छेदकविशिष्टसत्तारूपप्रतियोगिकत्वं गुणकर्मान्यत्वत्तिविशिष्टसत्ताभावे नास्तीति तस्य लक्षणाघटकतया अभावान्तर-मादायातिव्याप्तिरिति भावः ।।

तत्र शङ्कते–**न चेति** । ''भूतत्वमूर्तत्वोभयं न मनसि'' इति प्रतीत्या भूतत्व-मूर्तत्वोभयत्वविशिष्टे मनोवृत्तित्वाभावावगाहनात् कथं तादृशविशिष्टे मनोवृत्तित्वं स्यात् । एवं ''गुणकर्मान्यत्वविशिष्टसत्ता न गुणे'' इति प्रतीत्या विशिष्टसत्तायां कथं गुणवृत्तित्वं स्यात् । तथा च तादृशप्रतीतिभ्यां मनोवृत्तित्वाभावस्य उभयत्वविशिष्टे, गुणवृत्तित्वाभावस्य गुणकर्मान्यविशिष्टे च सिद्ध्या हेत्वधिकरणावृत्तिविशिष्टप्रतियोगिकत्वमुक्ताभाव-योरावश्यकमिति शङ्का ।।

समाधानं तु – तादृशप्रतीतिः उभयत्वविशिष्टे मनोवृत्तित्वाभावं वा, गुणकर्मान्यत्व-विशिष्टे गुणवृत्तित्वाभावं वा नावगाहते, अपि तु मनसि भूतत्वमूर्तत्वोभयत्वावच्छिन्ना-भावमवगाहते, गुणे विशिष्टसत्तात्वावच्छिन्नाभावमवगाहते इति भावः ।।

**उभयत्वादिविशिष्टस्येति** । आदिपदेन गुणकर्मान्यत्वं गृह्यते । तथा च भूतत्वमूर्तत्वोभयत्वविशिष्टस्य मूर्तत्वस्य गुणकर्मान्यत्वविशिष्टसत्तायाश्चेत्यर्थः । एवमग्रेऽपि आदिपदार्थो ज्ञेयः । **इत्यादाविति** । आदिपदेन गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यस्य ग्रहणम् । **द्वित्वविशिष्टेति** । उभयत्वावच्छिन्ने मूर्तत्वे विशिष्टसत्तात्वा-बच्छिन्नसत्तायां चेत्यर्थः । **मनोगुणादिवृत्तित्वाभावसिद्धेः**–मनोवृत्तित्वाभावस्य गुणवृत्तित्वाभावस्य च सिद्धेः ।।

## गादाधरी

**जातौ न किंचित् समवैतीति** निश्चयदशायां जातौ न **भूतत्वमूर्तत्वोभयं,** न वा विशिष्टसत्ता इति प्रतीतिवत् मनसि गुणे न किञ्चित् समवैतीति भ्रमदशायामपि तादृशप्रतीतेरानुभाविकतया मनोगुणादिसमवेतत्वाभावस्य तद्विषयत्वासंभवेन मनोगुणाद्यधिकरणकाभावस्य तद्विषयताया आवश्यकत्वात् तादृशभ्रमाभाव-कालीनतदाकारप्रतीतावपि तस्यैव विषयत्वौचित्यात् । अन्यथा कल्पनागौरवापत्तेः ।।

भूतत्वमूर्तत्वोभयं न मनोवृत्ति, गुणाद्यन्यत्वविशिष्टसत्ता न गुणवृत्तिः इत्यादि-प्रत्ययाश्च तादृशोभयत्वविशिष्टसत्तात्वादौ मनोगुणादिवृत्तित्वावच्छेदकत्वाभावं तादृशवृत्तित्वे तादृशोभयत्वविशिष्टत्वाद्यवच्छेद्यत्वाभावं वावगाहन्ते । **तत्र तादृशाभावस्य क्लृप्तत्वात्** ।।

## व्याख्या

ननु भूतत्वमूर्तत्वोभयं न मनसि, गुणान्यत्वविशिष्टसत्ता न गुणे इति प्रतीत्योः उभयत्वविशिष्टे मनोवृत्तित्वाभावः, विशिष्टसत्तायां गुणवृत्तित्वाभावः विषयः; अथवा



मनसि उभयत्वावच्छिन्नाभावो विषयः, गुणे च विशिष्टसत्ताभावः विषयः इत्यत्र विनिगमकाभावात् उभयविधाभावविषयकत्वस्यापि संभवात् अन्यतरविषय-कत्वे मनोगुणाद्यधिकिरणकाभावविषयकत्वे किं विनिगमकमिति शङ्कायामाह – **जातौ न किंचित्समवैतीति** । जातौ न किंचित् समवैति इति प्रतीतिरस्ति । तस्यां प्रतीतौ जातिनिरूपितसमवायसंवन्धावच्छिन्नवृत्तिमदभावः न विषयः । जातिनिरुपितसमवाय-संवन्धाबच्छिन्नवृत्तेरप्रसिद्धेः, प्रतियोग्यप्रसिद्ध्या अभावाप्रसिद्धेरिति यावत् । अपि तु जात्यधिकरणकः समवेताभावः विषयः ।।

तथा तत्समानाकारायां जातौ न भूतत्वमूर्तत्वोभयं, नवा गुणकर्मान्यत्व-विशिष्टसत्ता इति प्रतीतावपि जात्यधिकरणकः भूतत्वमूर्तत्वोभयाभावः, जात्यधिकरणकः गुणकर्मान्यत्वविशिष्टसत्ताभाव एव विषयः ।

एवमेव मनसि न भूतत्वमूर्तत्वोभयं, गुणे न गुणान्यत्वविशिष्टसत्ता इति प्रतीतावपि मनोऽधिकरणकः भूतत्वमूर्तत्वोभयाभावः, गुणाधिकरणकः गुणान्यत्वविशिष्टसत्ताभावः एव विषयः । न तु मनोऽवृत्तित्वं गुणावृत्तित्वं वा उभयत्वावच्छिन्ने विशिष्टसत्तात्वावच्छिन्ने च विषयः । तथा च प्रतियो-गितावच्छेदकोभयत्वविशिष्टस्य गुणान्यत्वविशिष्ट-सत्तात्वविशिष्टस्य च मनोऽवृत्तित्वे गुणावृत्तित्वे च प्रमाणाभावात् पूर्वोक्तहेत्वधिकरणी-भूतयत्किंचिद्व्यक्त्यवृत्ति – प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वरूपप्रतियोगि-वैयधिकरण्याभावात् उभयत्वावच्छिन्नाभाव – विशिष्टसत्ताभावयोः लक्षणाघटकतया अभावान्तरमादाय उभयसाध्यकस्थले विशिष्टसाध्यकस्थले च व्यभिचारिणि अतिव्याप्तिः इति **सार्वभौमपरिष्कारो** न युक्त इति **दीधितिकाराणामा**शयः ।।

ननु भवतु नाम ''भूतत्वमूर्तत्वोभयं न मनसि'', ''गुणान्यत्वविशिष्टसत्ता न गुणे'' इति प्रतीत्योः मनोगुणाद्यधिकरणकतत्तादृशाभावविषयकत्वम् । अथापि 'भूतत्वमूर्तत्वोभयं न मनोवृत्ति'' ''गुणान्यत्वविशिष्टसत्ता न गुणवृत्तिः'' इति

प्रतीत्योः मनोगुणादिवृत्तित्वाभावस्यैव स्पष्टं विषयत्वात् तादृशाभावयोर्लक्षणघटक-तया (हेत्वधिकरणावृत्तिप्रतियोगिकतया) अतिव्याप्तिवारणं संभवतीति शङ्कायामाह–**भूतत्वमूर्तत्वोभयमिति** । तादृशप्रतीत्योः उभयत्वे मनोवृत्तितावच्छेदकत्वाभावः गुणान्यत्वविशिष्टसत्तात्वे गुणवृत्तितावच्छेदकत्वाभावश्च विषयः, न तु मनोवृत्तित्वाभावः गुणवृत्तित्वाभावश्च विषयः । अथवा मनोवृत्तित्वे उभयत्वाव-च्छिन्नत्वाभावः, गुणवृत्तित्वे विशिष्टसत्तात्वावच्छिन्नत्वाभावः विषय इत्यर्थः ।।

प्रतीतिस्वारस्यविरुद्धतया किमर्थमेवं कल्प्यत इत्यत आह–**तत्र तादृशा-भावस्य क्लृप्तत्वादिति** । **तत्र** भूतत्वमूर्तत्वोभयत्वे गुणकर्मान्यत्वविशिष्टसत्तात्वे च **तादृशाभावस्य** – मनोवृत्तितावच्छेदकत्वाभावस्य गुणवृत्तितावच्छेदकत्वाभावस्य च, एवं मनोवृत्तित्वे गुणवृत्तित्वे च उभयत्वावच्छिन्नत्वाभावस्य गुणान्यत्वविशिष्टसत्तात्वा-वच्छिन्नत्वाभावस्य चेत्यर्थः । **क्लृप्तत्वादिति** । विशिष्टसत्तादौ गुणादिवृत्तित्वाभाववादिनापि अस्याभावस्य स्वीकृतत्वादिति भावः ।।

## गादाधरी

न च यत्किंचिद्धेत्वधिकरणवृत्तितानवच्छेदकप्रतियोगितावच्छेदककत्वमेव विवक्ष-णीयम् । उभयत्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकोभयत्वादेश्च मनोगुणादिवृत्तितान-वच्छेदकत्वात् तादृशाभावसंग्रहेण नातिव्याप्तिरिति वाच्यम् ।।

**गुणान्यत्व**विशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकस्य वैशिष्ट्यसहितसत्तात्वस्य गुणादिवृत्तितावच्छेदकशुद्धसत्तात्वाद्यनतिरिक्ततया तदनवच्छेद**कत्वा**संभवेन उक्तविवक्षयापि तादृशाभावसंग्रहासंभवात् ।।

## व्याख्या

**विवक्षणीयम्** – प्रतियोगिव्यधिकरणहेतुसमानाधिकरणेत्यनेन विवक्षणीयम् ।

तथाच यत्किंचिद्धेत्वधिकरणवृत्तितानवच्छेदकप्रतियोगितावच्छेदककात्यन्ताभाव



प्रतियोगितानवच्छेदकसाध्यताबच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । वह्निमान् धूमात् इत्यत्र यत्किंचिद्धेतुधूमाधिकरणं पर्वतः तदृत्तितानवच्छेदकं घटत्वादि तदेव प्रतियोगितावच्छेदकं यस्य सः अभावः घटाद्यभावः तत्प्रतियो-गितावच्छेदकं घटत्वादि, अनवच्छेदकं वह्नित्वं तदवच्छिन्नवह्निसामानाधिकरण्यं धूमेऽस्तीतिलक्षणसमन्वयः ।।

धूमवान् वह्नेरित्यत्र यत्किंचिद्वह्न्यधिकरणमयोगोलकं तदृत्तितानवच्छेदकं धूमत्वं तत् प्रतियोगितावच्छेदकं यस्य सोऽभावः धूमाभावः तत्प्रतियोगितावच्छेदकमेव धूमत्वमिति नातिव्याप्तिः ।।

भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इत्यत्र यत्किंचिद्धेत्वधिकरणं मनः तदृत्तितानवच्छेदकं भूतत्वमूर्तत्वोभयत्वं, तत् प्रतियोगितावच्छेदकं यस्य सोऽभावः भूतत्वमूर्तत्वोभयाभावः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकमुभयत्वमिति नातिव्याप्तिः ।।

गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः इत्यत्र यत्किंचिज्जातिरूपहेत्वधिकरणं गुणः तद्वृत्तितानवच्छेदकं गुणकर्मान्यत्वविशिष्टसत्तात्वं तदेव प्रतियोगितावच्छेदकं यस्य सः अभावः गुणकर्मान्यत्वविशिष्टसत्ताभावः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं विशिष्टसत्तात्वमिति नातिव्याप्तिः इति भावः । एतन्मनसि निहितं चेत् मूलं स्पष्टं भवेत् । अयं परिष्कारोऽपि न पूर्वोक्ताव्याप्तिवारणाय समर्थ इत्याह–**गुणान्यत्वेत्यादिना**। गुणकर्मान्यत्वविशिष्टसत्तात्वं नाम गुणकर्मान्यत्ववैशिष्ट्यविशिष्टसत्तात्वं, तस्य शुद्धसत्तात्वानतिरिक्ततया शुद्धसत्तात्वरूपे विशेष्ये हेत्वधिकरणगुणवृत्तिता-वच्छेदकत्वसत्त्वेन उक्तवैशिष्ट्यविशिष्टे सत्तात्वेऽपि तादृशावच्छेदकत्वाभावरूपमन-वच्छेदकत्वं न संभवति । विशेष्यवृत्तिधर्मप्रतियोगिकविशिष्टानुयोगिकाभावानङ्गीकारात्। तथा च विशिष्टाभावस्य लक्षणाघटकतया अभावान्तरमादाय घटाद्यभावं गगनाद्यभावं वा आदाय अतिव्याप्तिर्दुर्वरिति भावः ।।

## दीधितिः

**समवायेन** जातेः साध्यत्वे मेयत्वादावतिव्याप्तेश्च । **जातिमन्निष्ठतादृशाभाव-प्रतियोगितायाः** जातित्वेनानवच्छेदात् । **जातिशून्ये च तादृशसंबन्धेन** वृत्तेः **अप्रसिद्धेः**।।

## गादाधरी

**यदभावीय**प्रतियोगितावच्छेदकतायां यत्किंचिद्धेत्वधिकरणवृत्तितावच्छेदकत्व-पर्याप्त्यवच्छेदकावच्छिन्नपर्याप्तताविरहः तादृशाभावनिवेशे दर्शितातिव्याप्तिपरिहारः संभवतीत्याशङ्क्य दूषणान्तरमाह—**समवायेनेति** । **जातिमन्निष्ठतादृशा-भावेति** । जातिमन्निष्ठो यो घटत्वाद्यभावः तस्यैव पटाद्यसमवेतप्रतियोगिकत्वेन तत्प्रतियोगितायां जातित्वस्य अनवच्छेदकत्वादित्यर्थः । जातिमदवृत्तेः जातित्वावच्छिन्नभावस्य तादृशत्वं न संभवतीति स्फुटयति—**जातिशून्ये चेति** । **तादृशसंबन्धेन** समवायेन । **अप्रसिद्धेरिति** । तथा च जातिमदवृत्तिः योऽभावः तत्प्रतियोगितासामान्ये हेतुमद्यत्किंचित्पदेन जातिशून्यमेवोपादाय अवृत्तित्वान्तं घटनीयम् । तच्च न संभवति । प्रतियोग्यप्रसिद्ध्या तदप्रसिद्धेरिति नासौ लक्षणघटक इति भावः ।।

## व्याख्या

प्रतियोगितावच्छेदकसंबन्धेन हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यवृत्तिप्रतियोगि-तावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वं प्रतियोग्यनधिकरणहेत्वधिकरण-वृत्तीत्यन्तस्यार्थः इति **सार्वभौम**परिष्काररीत्या भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इत्यत्र गुणकर्मान्यत्व-विशिष्टसत्तावान् जातेरित्यत्र चातिव्याप्तिपरिहारः संभवतीति आशङ्क्य **विशिष्टस्यान-तिरिक्तत्वात्** इत्यनेन तत्खण्डनं कृतम् । पुनरपि स्थलान्तरेऽतिव्याप्तिरुच्यते **समवायेनेत्यादिना दीधितौ** । तेन पूर्वोक्तदोषः किंचित्परिष्कृत्य वारयितुं शक्यत इत्यवगम्यते । तमेव परिष्कारमाह—**यदभावीयेत्यादिना** । लक्षणघटकत्वेनाभिमताभाव-प्रतियोगितावच्छेदकतायां यत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकत्वपर्याप्त्यवच्छेदका-



वच्छिन्नापर्याप्तस्वप्रतियोगितावच्छेदकताकत्वम् अभावे विशेषणमित्यर्थः । गुणकर्मान्यत्व-विशिष्टसत्तावान् जातेरित्यत्र यत्किंचित् हेत्वधिकरणं जात्यधिकरणं गुणः, तद्वृत्तिताबच्छेदकत्वपर्याप्तिः शुद्धसत्तात्वे एव सत्त्वेन तन्निष्ठपर्याप्तिरवच्छेदकं शुद्धसत्तात्व-निष्ठतद्व्यक्तित्वम् । लक्षणघटकाभावः गुणकर्मान्यत्वविशिष्टसत्ताभावः तत्प्रतियो-गितावच्छेदकता च वैशिष्ट्यसत्तात्वोभयपर्याप्ता । अतः तत्पर्याप्त्यवच्छेदकमुभय-त्वमेव न सत्तात्वनिष्ठतद्व्यक्तित्वमिति गुणकर्मान्यत्वविशिष्टसत्ताभावप्रतियोगिता-वच्छेदकतायाः हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिवृत्तितावच्छेदकत्व पर्याप्त्यवच्छेदका-वच्छिन्नपर्याप्तिरहितत्वेन विशिष्टसत्ताभावस्य लक्षणघटकतया तत्प्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदके विशिष्टसत्तात्वे अस्तीति नातिव्याप्तिः ।।

एवमेव भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इत्यत्र यत्किंचिद्धेत्वधिकरणं मूर्तत्वा-धिकरणं मनः तद्वृत्तितावच्छेदकत्वपर्याप्तेः मूर्तत्व एव सत्त्वेन तन्निष्ठपर्याप्त्यवच्छेदकं मूर्तत्वत्वं, लक्षणघटकाभावः भूतत्वमूर्तत्वोभयाभावः तत्प्रतियोगितावच्छेदकता भूतत्वमूर्तत्वोभयत्ववैशिष्ट्यमूर्तत्वत्वोभयपर्याप्ता । अतः तत्पर्याप्त्यवच्छेदकं भूतत्वमूर्तत्वोभयत्ववैशिष्ट्यमूर्तत्वत्वोभयमेव, न मूर्तत्वमिति भूतत्वमूर्तत्वोभयत्व-विशिष्टमूर्तत्वाभावप्रतियोगितावच्छेदकतायाः हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिवृत्ति-तावच्छेदकत्वपर्यप्त्यवच्छेदकावच्छिन्नपर्याप्तिरहितत्वेन भूतत्वमूर्तत्वोभयत्ववि-शिष्टमूर्तत्वावच्छिन्नाभावस्य लक्षणघटकतया तत्प्रतियोगितावच्छेदकत्वमेव साध्यता-वच्छेदके उभयत्ववैशिष्ट्यमूर्तत्वत्वयोरस्तीति नातिव्याप्तिरिति भावः । भूतत्वमूर्तत्वो-भयत्वेति लेखनीये भूतत्वमूर्तत्वोभयत्वविशिष्टमूर्तत्वेति लिखित्वा उपपादनं कृतम् । अत्र कारणं तु पूर्ववृत्तिः—भूतत्वमूर्तत्वोभयत्वविशिष्ट—गुणकर्मान्यत्वविशिष्टसत्तात्व-विशिष्ट**सत्तादिकं** तु इति वाक्यमेवेति सुधीभिरवधेयम् । तत्रत्यादिपदेन मूर्तत्वस्यैव विवक्षणात् ।।

**जातिमन्निष्ठ** इत्यादि । समवायेन जातिमान् मेयत्वात् इति व्यभिचारी हेतुः । समवायेन जात्यभाववति सामान्यादौ मेयत्वसद्भावात् । अत्र हेतुसमानाधिकरणत्वेन यदि जात्यभावो गृह्यते, तदा यत्किंचिद्धेत्वधिकरणेत्यनेन जातिशून्यं जात्यादिकमुपादाय तदवृत्तिजातिरूपप्रतियोगिकत्वेन प्रतियोगिवैयधिकरण्यं तस्य वाच्यम् । तन्न संभवति । जातिशून्ये प्रतियोगितावच्छेदकसमवायसंबन्धेन वृत्तेः अप्रसिद्धेः । यदि हेतुसमानाधिकरणाभाव इत्यनेन घटत्वाद्यभावो गृह्यते हेत्वधिकरणपटाद्यसमवेतप्रतियोगिकतया (पटादिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाभाववत्प्रतिगिकतया) तस्य लक्षणघटकत्वेऽपि तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके जातित्वे अस्तीत्यतिव्याप्तिरिति भावः ।।

## दीधितिः

**संयोगादि**साध्यकगुणकर्मान्यत्वादौ च **अतिव्याप्तिः** । अद्रव्ये **हेतुमति** तादृशसंबन्धेन वृत्तेः **अप्रसिद्धेः** । **द्रव्ये** च संयोगादेरपि वृत्तेः ।।

## गादाधरी

जातेः व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्यविशेषणस्य प्रयोजनविरहेणानिवेशेनोक्तदोषानवकाश इति अव्याप्यवृत्तिसाध्यक एवातिव्याप्तिमाह–**संयोगादीति** । **अतिव्याप्तिरिति** । संयोगत्वावच्छिन्नाभावस्य हेत्वधिकरणयत्किञ्चिद्व्यक्त्यसमवेतप्रतियोगिसामान्यकत्वासंभवेन लक्षणाघटकत्वादिति भावः । तदसंभवमेव स्फुटयति–**हेतुमतीति** । सामान्यादावित्यर्थः । **अप्रसि-द्धेरिति** । तथा च यत्किंचिद्व्यक्तीत्यनेन न सामान्याद्युपादानसंभव इति भावः। **द्रव्य** इति । तथा च द्रव्यमपि यत्किंचिद्व्यक्तिपदेनोपादाय तादृशाभावस्य न तथात्वं शक्योपादानमिति भावः ।।



## व्याख्या

समवायेन जातिमान् मेयत्वात् इति स्थलमुपेक्ष्य संयोगादिसाध्यकस्थलानुधावने बीजमाह—**जातेर्व्याप्यवृत्तितयेति** । **हेत्वधिकरणयत्किंचिद्व्यक्त्यसमवेतेत्यादि** । हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वशून्येत्यर्थः । तथाच संयोगी गुणकर्मान्यत्वादित्यत्र हेतुसमानाधिकरणसंयोगाभावग्रहणे हेत्वधिकरणयत्किंचिद्व्यक्तीत्यनेन द्रव्यग्रहणे तत्र संयोगस्य समवेतत्वात् (समवायसंवन्धावच्छिन्नवृत्तित्वाभाववत्प्रतियोगिकत्वं) न संभवति । यत्किंचिद्व्यक्तीत्यनेन सामान्यादिग्रहणे तत्समवेतत्वस्य तन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्याप्रसिद्ध्या तमादायापि असमवेतप्रतियोगिकत्वं न संभवतीति उदासीनघटाभावमादायातिव्याप्तिरिति भावः ।।

अत्रेदमालोचनीयम् । **सार्वभौमोक्त**प्रतियोगिव्यधिकरणहेतुसमानाधिकरणान्तपरिष्कारे **दीधितौ** त्रयो दोषाः प्रदर्शिताः । तत्र प्रथमदोषपरिहारायकंचित्परिष्कारं कृत्वा द्वितीयदोषोऽवतारितः । परं तु द्वितीयतृतीयदोषौ अपरिष्कृतरीतावेव प्रदर्शितौ । परिष्कृतरीत्या तौ दोषौ भवतो न वा इति । समाधानं तु – परिष्कारेऽपि यत्किंचिद्वृत्तितावच्छेदकेति वर्तते । तत्र प्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वस्य वा साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य वा निवेशावश्यकतया **दीधित्युक्त**दोषा भवन्त्येव ।।

## दीधितिः

**मैवम्** । **साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्व**-हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्यो**भयाभावस्य विवक्षितत्वात्** ।।

**धूमसंयोगे** वह्नयधिकरणायोगोलकानु**योगिकत्वस्य चैत्रान्यत्व**विशिष्टैतद्दण्डसंयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य गुणकर्मान्यत्वविशिष्टसत्तासमवाये च जात्यधिकरणगुणानुयोगिकत्वस्य **विरहान्नातिप्रसङ्गः** ।।

## गादाधरी

**साध्यतावच्छेदकसंबन्धसामान्ये उभयाभावस्य विवक्षितत्वात्** इति योजना । तथा च स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाववत्सध्यतावच्छेदकसंबन्धसामान्यकत्वमभावे, स्वप्रतियोगितावच्छेदकेत्यत्र स्वावच्छेदकत्वं प्रक्षिप्य तादृशाभाववत्साध्यतावच्छेदकसंबन्धसामान्यकत्वं प्रतियोगितायां वा विशेषणं देयमिति भावः ।।

**जलादिसंयोगे** वह्न्यादिप्रतियोगिकत्वधूमवदनुयोगिकत्वोभयाभावसत्त्वेऽपि साध्यतावच्छेदकसंबन्धसामान्यान्तर्गततत्तद्धूमाधिकरणानुयोगिकवह्निसंयोगे वह्निप्रतियोगिकत्वतत्तदधिकरणानुयोगिकत्वोभयाभावासत्त्वान्न वह्न्यभावस्य लक्षणघटकतेति घटाद्यभावमादाय वह्निमान् धूमात् इत्यादौ लक्षणसमन्वयः ।।

घटवान् महाकालत्वात् इत्यादौ पुनः अवृत्तिगगनादेरभाव एव लक्षणघटकः । कालिकसंबन्धसामान्ये तत्प्रतियोगिकत्वाभावेनोभयाभावसौलभ्यात् । **हेत्वधिकरणानुयोगिक**साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वाभावनिवेशे जातिमान् मेयत्वात् इत्यादौ उक्तातिव्याप्तिवारणमशक्यम् । सामान्यानुयोगिकसमवायाप्रसिद्ध्या जात्याश्रयानुयोगिकसमवाये च जात्यादिप्रतियोगिकत्वसत्त्वेन जातित्वाद्यवच्छिन्नाभावस्य च प्रतियोगिव्यधिकरणत्वानुपपत्तेः ।।

एवं निरुक्तप्रतियोगिकसाध्यतावच्छेदकसंबन्धसामान्ये हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्याभावनिवेशे ''घटवान् महाकालत्वात्'' इत्यादौ अव्याप्तिवारणमशक्यम्, गगनत्वविशिष्टप्रतियोगिकालिकसंबन्धाप्रसिद्धेः गगनाभावस्य प्रतियोगिव्यधिकरणत्वानुपपत्तेः इति उभयाभावानुसरणम् ।।

## व्याख्या

एतावता कालो घटवान् महाकालत्वात् इत्यत्र प्रतियोगिव्यधिकरणा-भावाप्रसिद्ध्या अव्याप्तिः स्थिता । तां परिहर्तुं **मैवम्** इत्यादिना **दीधितौ** परिष्कारः प्रदर्शितः ।



ततः द्वेधा लक्षणं पर्यवस्यतीत्याह–**गादाधर्याम्**–स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाववत्साध्यतावच्छेदकसंबन्धसामान्यकाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इत्येकम् ।।

स्वावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाववत्साध्यतावच्छेदकसंबन्धसामान्यकप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः इति द्वितीयं लक्षणम् ।।

तत्र वह्निमान् धूमात् इत्यत्र प्रथमलक्षणसमन्वयः इत्थम्–स्वं–घटाद्यभावः तत्प्रतियोगितावच्छेदकं घटत्वादि, तद्विशिष्टघटादिप्रतियोगिकत्वं साध्यतावच्छेदकसंयोगसंबन्धे अस्ति । परं तु हेत्वधिकरणीभूतपर्वतानुयोगिकत्वं नास्ति । घटादेः संयोगसंबन्धेन पर्वतेऽभावात् । अतः तदभावप्रयुक्तोभयाभाववत्संयोगसामान्यकोऽभावः घटाद्यभावः, तत्प्रतियोतावच्छेदकं घटत्वादि, अनवच्छेदकं वह्नित्वं तदवच्छिन्नवह्निसामानाधिकरण्यं धूमेऽस्तीति समन्वयः । पर्वतो धूमवान् वह्नेः इत्यत्र व्याभिचारिणि स्वं धूमाभावः तत्प्रतियोगितावच्छेदकं धूमत्वम्, तद्विशिष्टधूमप्रतियोगिकत्वं साध्यतावच्छेदकसंयोगसंबन्धे अस्ति । परं तु हेत्वधिकरणीभूतायोगोलकानुयोगिकत्वं नास्ति । अयोगोलके संयोगसंबन्धेन धूमाभावात् । अतः तदभावप्रयुक्तोभयाभाववत्संयोगसामान्यकोऽभावः धूमाभावोऽपि तत्प्रतियोगितावच्छेदकमेव धूमत्वरूपं साध्यतावच्छेदकमिति नातिव्याप्तिः ।।

कालो घटवान् महाकालत्वात् इत्यत्र अवृत्तिगगनाद्यभावमादाय समन्वयः कार्यः । तथा हि – स्वं गगनाभावः तत्प्रतियोगितावच्छेदकं गगनत्वम्, तद्विशिष्टगगनप्रतियोगिकं साध्यतावच्छेदककालिकसंबन्धे नास्तीति तदभावप्रयुक्तोभयाभावत्कालिकसंबन्धकोऽभावः गगनाभावः तत्प्रतियोगितानवच्छेदकं साध्यतावच्छेदकं घटत्वमिति लक्षणसमन्वयः।

घटाभावस्तु न लक्षणघटकः, तत्प्रतियोगिघटप्रतियोगिककालिकसंबन्धे हेत्वधिकरण-कालानुयोगिकत्वघटप्रतियोगिकत्वोभयोः सत्त्वेन उभयाभावविरहात् ।।

द्वितीयलक्षणरीत्या – वह्निमान् धूमादित्यत्र **स्वं** – घटाद्यभावीया प्रतियोगिता तदवच्छेदकं घटत्वादि, तद्विशिष्टघटादिप्रतियोगिकत्वं संयोगसंबन्धे अस्ति, परं तु हेत्वधिकरणपर्वतानुयोगिकत्वं नास्तीति तदभावप्रयुक्तोभयाभाव- वती प्रतियोगिता घटाद्यभावीया प्रतियोगिता तदनवच्छेदकं वह्नित्वमिति समन्वयः । धूमवान् वह्नेः इत्यत्र **स्वं** – धूमाभावीयप्रतियोगिता, तदवच्छेदकं धूमत्वं तद्विशिष्टप्रतियोगिके संयोगे हेत्वधिकरणायोगोलकानुयोगिकत्वं नास्तीति निरुक्तोभयाभावविशिष्टा प्रतियोगिता धूमाभावीया प्रतियोगिता तदवच्छेदकमेव साध्यतावच्छेदकमिति नातिव्याप्तिः ।।

कालो घटवान् कालत्वात् इत्यत्र स्वपदेन अवृत्तिगगनाभावप्रतियोगितामादाय समन्वयः कार्यः । तदवच्छेदकगगनत्वविशिष्टगगनप्रतियोगिकत्वस्य कालिकसंवन्धे-ऽभावात् । इतः परं दलप्रयोजनं वक्तव्यम् । प्रथमरीत्या सर्वं ज्ञातं चेत् द्वितीयरीत्या सर्वं सुज्ञानमिति तथैव सर्वं प्रतिपाद्यते ।।

अत्र **साध्यतावच्छेदकसंबन्धसामान्ये** इत्यत्र सामान्यपदप्रयोजनं दर्शयति– **जलादिसंयोग** इति । सामान्यपदानुपादाने जलसंयोगे स्वपदग्राह्यवह्न्यभाव-प्रतियोगिताबच्छेदकवह्निप्रतियोगिकहेत्वधिकरणपर्वतानुयोगिकत्वोभयाभावसंत्त्वेन तादृशोभयाभाववत्संयोगकत्वसत्त्वेन वह्न्यभावस्थ लक्षणघटकतया तत्प्रतियोगिता-वच्छेदकमेव वह्नित्वमिति वह्निमान् धूमादित्यत्राव्याप्तिः स्यादिति तद्वारणाय सामान्यपदोपादानम् । तदुपादाने च सामान्यान्तर्गतवह्निसंयोगे उभयाभावासत्त्वात् न वह्न्यभावस्य लक्षणघटकता । अपि तु घटाद्यभावस्यैवेति नाव्याप्तिः ।।

उभयाभावेत्यनिवेश्य एकविशिष्टे अपराभावनिवेशे दोषमाह–**हेत्वधिकरणा-नुयोगिकेति** । हेत्वधिकरणानुयोगिकसाध्यतावच्छेदकसंबन्धसामान्ये स्वप्रतियोगि-



तावच्छेदकविशिष्टप्रतियोगिकत्वाभावनिवेशे जातिमान् मेयत्वात् इत्यत्र हेत्वधिकरणेत्यनेन सामान्यग्रहणे तदनुयोगिकसाध्यतावच्छेदकसमवायसंबन्धाप्रसिद्ध्या, मेयत्वाधिकरणं यत् जातिमद्द्रव्यादि तदनुयोगिकसमवायग्रहणे तत्र साध्यतावच्छेदकजातित्वविशिष्टजाति-प्रतियोगिकत्वस्यैव सत्त्वेन तदभावविरहात् जातित्वावच्छिन्नाभावस्य प्रतियोगिव्यधि-करणत्वानुपपत्त्या लक्षणाघटकतया अभावान्तरमादायातिव्याप्तिः स्यात् ।।

एवं स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रतियोगिकसाध्यतावच्छेदकसंबन्ध-सामान्ये हेत्वधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वाभावनिवेशे उक्तस्थले जातिमान् मेयत्वात् इत्यत्र जात्यभावप्रतियोगितावच्छेदकजातित्वविशिष्टजातिप्रतियोगिकसमवायसंबन्धे मेयत्वरूपहेत्वधिकरणसामान्याद्यनुयोगिकत्वाभावेन जात्यभावस्य लक्षणघटकतया अतिव्याप्तिवारणेऽपि ''कालो घटवान् महाकालत्वात्'' इत्यत्राव्याप्तिस्तदवस्थैव । गगनत्वविशिष्टगगनप्रतियोगिककालिकसंबन्धाप्रसिद्धेः गगनाभावस्य लक्षणाघटकत्वात् घटाद्यभावानां च निरुक्तप्रतियोगिवैयधिकरण्याभावात् प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरिति भावः ।।

तस्मात् एकविशिष्टे अपराभावमनिवेश्य पूर्वोक्तरीत्या उभयाभावनिवेश इति भावः ।।

## गादाधरी

यत्किंचित्पदप्रयोजनमाह–**धूमसंयोग** इति । **अयोगोलकानुयोगिकत्वस्येति** । **विरहान्नातिप्रसङ्ग** इत्यग्रेतनेनान्वयः । साध्यतावच्छेदकसंबन्धसामान्यान्तर्गतधूमसंयोगे धूमप्रतियोगिकत्ववह्निमदनुयोगिकत्वयोरुभयोरेव सत्त्वेन तत्सामान्योभयाभावस्य दुर्घटत्वात् यत्किंचित्पदानुपादाने धूमवान् वह्नेरित्यत्रातिव्याप्तिः स्यात् । हेत्वधिकरणस्य हेतुमत्त्वेन न निवेशः, किंतु तद्व्यक्तित्वेन यत्किंचिदेकहेतुमद्व्यक्तेर्निवेशः इत्येतल्लाभार्थकतदुपादाने पुनः हेत्वधिकरणायोगोलकानुयोगिकत्वस्य धूमसंयोगेऽभावात् **अन्यसंयोगे च**

धूमप्रतियोगिकत्वस्याभावात् **संयोगसामान्यस्यैव उभयाभाववत्त्वात्** धूमत्वावच्छिन्नाभावोऽपि लक्षणघटक इति नातिप्रसङ्ग इत्यर्थः ।।

## व्याख्या

हेत्वधिकरणे यत्किंचित्त्वमनुपादाय हेत्वधिकरणानुयोगिकत्वनिवेशे धूमवान् वह्नेरित्यत्रातिव्याप्तिः । साध्यतावच्छेदकसंबन्धसामान्यान्तर्गतधूमसंयोगे धूमप्रतियोगिकत्ववह्निमन्महानसाद्यनुयोगिकत्वयोरुभयोरपि सत्त्वेन उभयाभावस्य दुर्घटतया धूमाभावस्य लक्षणाघटकतया अभावान्तरम्–घटाद्यभावमादायातिव्याप्तिः स्यात् । तद्वारणाय हेत्वधिकरणे यत्किंचित्त्वनिवेशः । यत्किंचित्पदं हेत्वधिकरणस्य तत्तद्व्यक्तित्वेन निवेशपरम् । तथा च विशिष्य यत्किंचिद्धेत्वधि-करणानुयोगिकत्वनिवेशे धूमसंयोगे हेत्वधिकरणायोगोलकानुयोगिकत्वाभावात् अन्यघटादिसंयोगे च धूमप्रतियोगिकत्वाभावेन संयोगसामान्ये पूर्वोक्तोभयाभावसत्त्वात् धूमत्वावच्छिन्नाभावोऽपि लक्षणघटक इति तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकमिति नातिव्याप्तिरिति भावः ।।

**अन्यसंयोगे चेति** । घटादिसंयोगे चेत्यर्थः । **संयोगसामान्यस्येति** । संयोगसामान्ये इत्यर्थः । **उभयाभाववत्त्वात्** - निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावसत्त्वात् ।।

## गादाधरी

प्रतियोगितावच्छेदकविशिष्टार्थकनिरुक्तपदप्रयोजनं संयोगेन चैत्रान्यत्वविशिष्टैतद्दण्डत्वेन चैत्रनिष्ठदण्डसाध्यके एतद्दण्डहेतौ समवायेन विशिष्टसत्तासाध्यके जात्यादिरूपहेतौ च अतिव्याप्तिवारणरूपं दर्शयति– **चैत्रान्यत्वेति** । निरुक्तपदानुपादाने संयोगसामान्यान्तर्गतचैत्रनिष्ठैतद्दण्डसंयोगे हेत्वधिकरणचैत्रानुयोगिकत्वविशिष्टैतद्दण्डाभावप्रतियोग्येतद्दण्डप्रतियोगिकत्वयोः समवाय-सामान्यान्तर्गतगुणानुयोगिकसत्तासमवाये च हेत्वधिकरणगुणानुयोगिकत्वविशिष्टसत्ताभावप्रतियोगिसत्ताप्रतियोगिकत्वयोः द्वयोरेव सत्त्वेन तादृशाभावस्य लक्षणघटकता न स्यादिति प्रसक्तातिव्याप्तेः तदुपादानान्नावकाशः । चैत्रे गुणादौ च संयोगेन समवायेन च विशिष्टदण्डविशिष्टसत्तावैशिष्ट्याप्रत्ययात् तदनुयोगिकसंयोगसमवाययोः विशिष्टदण्डविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकत्वानभ्युपगमेन अन्यानुयोगिकयोश्च तयोः चैत्रगुणाद्यनुयोगिकत्वाभावेन उभयाभावस्य अक्षततया विशिष्टसाध्याभावस्यापि लक्षणघटकत्वात् इत्यर्थः ।।



## व्याख्या

**दीधितिस्थनिरुक्तप्रतियोगिप्रतियोगिकत्वेत्यत्र** निरुक्तपदं पूर्वोक्तप्रतियोगितावच्छेदकविशिष्टार्थकम् । तस्य प्रयोजनं स्थलद्वये प्रदर्शितम् ।।

मैत्रः चैत्रान्यत्वविशिष्टैतद्दण्डवान् एतद्दण्डात् इत्येकं स्थलम् । चैत्रान्यत्वविशिष्टैतद्दण्डाभाववति चैत्रे एतद्दण्डरूपहेतुसत्त्वात् अयं व्यभिचारी । अत्र चैत्रान्यत्वविशिष्टैतद्दण्डाभावमादाय तत्प्रतियोगित्वमेव विशिष्ट–एतद्दण्डरूपे साध्येऽस्तीति अतिव्याप्तिर्वारणीया । यदि उक्तपरिष्कारे निरुक्तपदं न स्यात्, तदा स्वप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगि कत्वोभयाभाववत्साध्यतावच्छेदककसंबन्धसामान्यकत्वमभावविशेषणं स्यात् । तथा सति उक्तस्थले साध्यतावच्छेदकसंवन्धः संयोगसंबन्धः । तत्र हेत्वधिकरणी-भूतचैत्रानुयोगिकत्वमस्ति । तथा स्वप्रतियोगिप्रतियोगिकत्वमप्यस्ति । स्वं चैत्रान्यत्वविशिष्टदण्डाभावः । तत्प्रतियोगी एतद्दण्डः, विशिष्टशुद्धयोरनतिरेकात् तत्प्रतियोगिकत्वं चास्ति, स्वप्रतियोगिकत्वं हेत्वधिकरणानुयोगिकत्वं चास्ति इति तदुभयाभावात् चैत्रान्यत्वविशिष्टदण्डाभावो न लक्षणघटक इति अभावान्तरमादायातिव्याप्तिः स्यात् । तद्वारणाय स्वप्रतियोगितावच्छेदकविशिष्टेति प्रतियोगिविशेषणम् । तस्मिन् सति चैत्रानुयोगिकसंयोगे एतद्दण्डप्रतियोगिकत्वसत्त्वेऽपि चैत्रान्यत्वविशिष्टैतद्दण्डप्रतियोगिकत्वं नास्ति । चैत्रे चैत्रान्यरूपविशेषणाभावात् ।

तथा चोभयाभावसत्त्वात् तादृशोभयाभाववत्संयोगसामान्यकोऽभावः चैत्रान्यत्वविशिष्ट-दण्डाभावोऽपि तत्प्रतियोगित्वमेव साध्ये चैत्रान्यत्वविशिष्टदण्डेऽस्तीति नातिव्याप्तिः ।।

एवं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिवारणमपि प्रयोजनम् । गुणकर्मान्यत्वविशिष्टसत्तारूपसाध्याभाववति गुणे कर्मणि च जातिरूपहेतुसत्त्वात् अयं व्यभिचारी । अत्रापि विशिष्टसत्ताभावमादायातिव्याप्तिर्वारणीया । स्वप्रतियोगिता-वच्छेदकविशिष्टेत्यनुपादाने तत्रातिव्याप्तिः स्यात् । हेतुतावच्छेदकसमवायसंबन्धे, विशिष्टसत्ताभावप्रतियोगी शुद्धसत्तापि, विशिष्टशुद्धयोरनतिरेकात् इति स्वप्रतियोगिसत्ता-प्रतियोगिकत्वमस्ति । हेत्वधिकरणगुणानुयोगिकत्वं चास्ति । सत्तासमवायस्य गुणे सत्त्वात् । तथा च उक्तोभयाभाववत्साध्यतावच्छेदकसंबन्धकत्वं नास्तीति गुणकर्मान्यत्व-विशिष्टसत्ताभावो न लक्षणघटक इत्यभावान्तरमादायातिव्याप्तिः स्यात् । तद्वारणाय स्वप्रतियोगितावच्छेदकविशिष्टेत्यर्थकं निरुक्तपदम् । तदुपादाने च गुणकर्मान्यत्व-विशिष्टसत्तात्वविशिष्टप्रतियोगिकत्वं साध्यतावच्छेदकसमवायसंबन्धे गुणानुयोगिकसमवाये नास्तीति तदभावप्रयुक्तोभयाभाववत्साध्यतावच्छेदकसंबन्धकोऽभावः गुणकर्मान्यत्व-विशिष्टसत्ताभावोऽपि तत्प्रतियोगित्वमेव साध्ये विशिष्टसत्तायामस्तीति नातिव्याप्तिरिति भावः ।।

अत्र स्थलद्वयप्रदर्शनं साध्यतावच्छेदक संबन्धभेदप्रयुक्तम् व्युत्पादनार्थम् । संयोगसमवाययोः विशिष्टप्रतियोगिकत्वं नास्तीत्यत्र प्रतीतिद्वयं प्रमाणतया प्रदर्शितम् । उपपादनं स्पष्टम् ।।

## गादाधरी

**अथ** अत्र संयोगेन घटादौ साध्ये घटत्वादावतिव्याप्तिः । संयोगसामान्यान्तर्गतघटपटादिसंयोगे घटाद्यनुयोगिकत्वघटादिप्रतियोगिकत्वोभयसत्त्वेन **घटादिनिष्ठ**-घटाद्यभावस्य लक्षणाघटकत्वात् ।।



**न च** स्वस्मिन् संयोगेन स्वविशिष्टबुद्ध्यनुदयात् अन्यत्र घटादिविशिष्टबुद्धिमात्र-नियामके घटसंयोगे घटप्रतियोगिकत्वमात्रं घटेऽन्यविशिष्टधीमात्रनियामकसंयोगे च तदनुयोगिकत्वमात्रमिति घटानुयोगिकत्वतत्प्रतियोगिकत्वोभयं न कुत्रापि संयोगे अस्ति । न हि समवायेन संयोगाधिकरणत्वमेव संयोगानुयोगित्वम् । **तथा सति** तत्संबन्धानुयोगिताया एव तद्विशिष्टबुद्धिनियामकताप्रयोजकत्वेन स्वस्मिन्नपि स्वविशिष्टबुद्ध्यापत्तेर्दुर्वारत्वात् । किं तु संबन्धान्तरमेवेति वाच्यम् ।।

**येन संबन्धेन** घटेऽन्यविशिष्टधीः तेनापि संबन्धेनान्यत्र कदाचित् घटविशिष्ट-बुद्धिजननात् एकत्रैव संयोगे घटानुयोगिकत्वघटप्रतियोगिकत्वयोरावश्यकत्वात्, यस्मिन् संबन्धे यत्प्रतियोगिकत्वविशिष्टे यदनुयोगिकत्वं तत्संबन्धेन तस्यैव तद्विशिष्टप्रमितेः, स्वप्रतियोगिकत्वविशिष्टे च संयोगे स्वानुयोगिकत्वानुपगमेन स्वस्मिन् तेन संबन्धेन स्वविशिष्टप्रमापत्त्यनवकाशदिति चेत्–

## व्याख्या

पूर्वोक्तरीत्या अभावविशेषणीभूतस्य प्रतियोग्यसमानाधिकरणहेतुसमानाधि-करणेत्यन्तस्य साध्यतावच्छेदकसंबन्धानुयोगिकोभयाभावघटितपरिष्कारे कृतेऽपि क्वचित् अतिव्याप्तिः भवतीति शङ्कते – **अथेति** । अयं संयोगेन घटवान् घटत्वात् इति अनुमानम् । संयोगेन घटाभाववति घटान्तरे घटत्वसत्त्वात् अयं हेतुः व्यभिचारी । अत्र हेतोः घटत्वस्य अधिकरणं घटासंयुक्तघटः तत्र वर्तमानः संयोगेन घटाभावः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं घटत्वमिति अतिव्याप्तिवारणं कार्यम् । पूर्वोक्तपरिष्काररीत्या तु अतिव्याप्तिरेव भवतीति शङ्का । तथा हि– अत्र साध्यतावच्छेदकसंयोगसामान्यान्तर्गतः घटपटसंयोगोऽपि । तस्य द्विनिष्ठत्वेन तस्मिन् संयोगे हेत्वधिकरणघटानुयोगिकत्वघटप्रतियोगिकत्वोभयसत्त्वेन उभयाभावघटित-प्रतियोगिवैयधिकरण्याभावेन घटाभावस्य लक्षणाघटकत्वात् अभावान्तरमादायातिव्याप्तिः

इति शङ्का । **घटादिनिष्ठेति** । घटत्वरूपहेत्वधिकरणे घटे विद्यमानस्य घटाभावस्य उक्तपरिष्काररीत्या लक्षणाघटकत्वात् इति भावः ।।

तत्र परिहारं शङ्कते–**न चेति** । घटपटसंयोगस्य द्विनिष्ठत्वेऽपि तादृशसंयोगमादाय पटे घटविशिष्टबुद्धिवत् घटे घटविशिष्टबुद्धेरनुदयेन अन्यत्र पटे घटवत्ताबुद्धिमात्रप्रयोजके तादृशसंयोगे घटप्रतियोगिकत्वमेव । एवं घटे अन्यपटमात्रधीनियामके संयोगे घटानुयोगिकत्वमात्रमेव । तथा च घटप्रतियोगिकत्वघटानुयोगिकत्वोभयं न कुत्रापि संयोगेऽस्ति । तथा च उभयाभावो भवितुमर्हति इति भावः ।।

ननु घटस्य यद्वस्तुना पटेन संयोगोऽस्ति स तावत् एक एव द्विनिष्ठः उभयप्रतियोगिकः उभयानुयोगिकश्च । समवायेन संयोगाधारत्वं हि संयोगानुयोगित्वम् इत्यत्राह–**तथा सतीति** । तत्संबन्धानुयोगिताया एव तद्विशिष्टबुद्धिनियामकत्वे स्वस्मिन्नपि स्वविशिष्टबुद्ध्यापत्तेः दुर्वारत्वात् । अतः तत्संबन्धानुयोगित्वं तदाधारत्वं न । किं तु संबन्धान्तरम् । तच्च यत्र विशिष्टबुद्धिः भवति तन्मात्रवृत्तीति भावः ।।

न चेत्यादिशङ्कां समाधत्ते–**येन संबन्धेनेति** । यद्घटोपरि पटः स्थापितः तदा तादृशो घटपटसंयोगः घटे पटविशिष्टबुद्धिनियामकः । स एव घटः पूर्वसंयोगमविनाश्य पटोपरि व्यत्यस्य स्थापितश्चेत् तदा पूर्वं पटवैशिष्ट्यबुद्धिनियामक एव स संयोगः पटे घटवैशिष्ट्यबुद्धिनियामकश्चेति तत्र एकस्मिन्नेव संयोगे घटानुयोगिकत्वघटप्रतियोगिकत्वोभयसत्त्वात् । तर्हि स्वस्मिन् स्वविशिष्टबुद्धिः कथं वारणीयेति चेत्–एवम् । यस्मिन् संबन्धे यत्प्रतियोगिकत्वविशिष्टे यदनुयोगिकत्वं तस्यैव तद्विशिष्टबुद्धिः–यथा घटवद्भूतले घटप्रतियोगिकत्वविशिष्टसंयोगानुयोगित्वात् भूतलस्य घटविशिष्टबुद्धिः । स्वप्रतियोगिकत्वविशिष्टसंयोगे च स्वानुयोगिकत्वानुपगमेन स्वस्मिन् स्वविशिष्टबुद्धेर्नापत्तिः ।।



एवं च संयोगेन घटवान् घटत्वात् इत्यत्र पूर्वोक्तरीत्या अतिव्याप्तिर्दुर्वारेति पूर्वपक्षः स्थितः ।।

### गादाधरी

न । **संयोगेन** अधिकरणांशे आधेयस्यैव विशिष्टबुद्धिर्जन्यते । न तु आधेयांशे आधारस्य । आधाराधेयभावानापन्नयोः वृत्त्यनियामकसंयोगिनोश्च संयोगेन विशिष्टबुद्धेरप्रामाणिकत्वात् । आधेयत्वानुपस्थितिकालीने भूतले घट इत्यादिप्रत्यये घटांशे भूतलादेः प्रकारत्वेऽपि आधेयताया एव संसर्गतोपगम्यते, न तु संयोगस्य । एवं सति वृत्त्यनियामकस्य गगनादिसंयोगस्य संबन्धत्वानुपपत्तिः, विशिष्टबुद्धिनियामकस्यैव संबन्धत्वात् इति चेत्-का क्षतिः ।।

एवं च येन संयोगेनान्यत्र घटविशिष्टबुद्धिः जन्यते घटस्य तत्संयोगाश्रयानाधारत्वेन घटे न तेन अन्यविशिष्टबुद्धिर्जन्यते इति संयोगमात्र एव तत्प्रतियोगिकत्वतदनुयोगिकत्वोभयाभावस्याक्षतत्वात् ।।

### व्याख्या

तस्मिन् पूर्वपक्षे समाधानमाह–**संयोगेनेति** । संयोगस्य द्विनिष्ठत्वेऽपि संयोगेन घटाद्यधिकरणभूतलादावेव घटादिबुद्धिः जायते, न तु आधेये घटादौ भूतलादिविशिष्टबुद्धिः इत्यनुभवात् । आधाराधेयभावस्थल एव विशिष्टबुद्धेः उदयात् यथा भूतलं घटवत् इति तत्रैव संयोगस्य संसर्गत्वम् । आधाराधेयभावरहितस्थले संयोगसत्त्वेऽपि तस्य संसर्गत्वं नेष्यते । एवं च येन संयोगेनान्यत्र घटविशिष्टबु-द्धिर्जायते, तत्र तेनैव संयोगेन घटे अन्यविशिष्टबुद्धिर्न जायते । अन्यं प्रति घटस्यानाधारत्वात् । तथा च संयोगसामान्य एवोभयाभावोऽक्षत इति उभयाभाववत्संयोगकत्वात् घटाभावस्य लक्षणघटकतया तत्प्रतियोगित्वमेव घटेऽस्तीति नातिव्याप्तिरिति भावः ।।

## गादाधरी

**अथ** यद्घटस्य अधोवस्थितपटे येन संयोगेन घटविशिष्टबुद्धिर्जाता तेनैव च संयोगेन पटेन समं परिवृत्त्य स्थापिते तद्घटे पटविशिष्टबुद्धिरपि जन्यते, तत्संयोगे घटानुयोगिकत्वघटप्रतियोगिकत्वोभयोरावश्यकत्वात् संयोगेन घटसाध्यके तद्घटतत्पटान्यतरत्वादावतिव्याप्तिर्दुर्वारैवेति चेत्—

**एवं सति** साध्यतावच्छेदकसंबन्धानुयोगितासामान्ये निरुक्तप्रतियोगिकत्व-विशिष्टनिरूपितत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठत्वोभयाभाव एव विवक्षणीयः। स्वस्मिन् स्वविशिष्टबुद्ध्यनुदयेन स्वप्रतियोगिकत्वविशिष्टसंयोगनिरूपितत्वस्य स्वनिष्ठानुयोगितायामसत्त्वात्, संयोगीयानुयोगितासामान्ये घटप्रतियोगिकत्वविशिष्ट-निरूपितत्वतद्घटनिष्ठत्वोभयाभावोऽक्षत एव ।।

**एवं च** यदत्रकल्पे समयायैक्यमतेऽतिव्याप्तिमुद्भावयिष्यति तत् **यथाश्रुता**-भिप्रायेणेति ध्येयम् ।।

## व्याख्या

**साध्यतावच्छेदकसंबन्धसामान्ये** इत्यादिना **दीधित्युक्तपरिष्कारोपरि** स्थलान्तरेऽतिव्याप्तिं शङ्कते – **अथेति** । पूर्वं अयं घटवान् घटत्वात् इत्यत्रातिव्या-प्तिमाशङ्क्य समाधानमुक्तम् । इदानीं अयं संयोगेन घटवान् तद्घटतत्पटान्यतरत्वात् इत्यत्रातिव्याप्तिं शङ्कते । संयोगेन घटाभाववति तद्घटे तद्घटतत्पटान्यतरत्वसत्त्वात् अयं व्यभिचारी । अत्र संयोगेन घटाभावमादायातिव्याप्तिर्वारणीया । परं तु तद्घटस्य अधोवस्थिततत्पटे संयोगसंबन्धेन तद्घटविशिष्टबुद्धिरादौ जाता, अनन्तरं तेनैव संयोगेन पटेन सह परिवृत्य स्थापिते अधःस्थ घटे पटविशिष्टबुद्धिः जायते, तस्मिन् संयोगे एकस्मिन्नेव घटाभावप्रतियोगितावच्छेदकघटत्वविशिष्टघटप्रतियोगिकत्वं तद्घटतत्पटान्यतरत्व-रूपहेत्वधिकरणीभूततत्पटानुयोगिकत्वं चेत्युभयमस्ति इति तदुभयाभावो नास्तीति



तदुभयाभाववत्प्रतियोगिकत्वं घटाभावे नास्तीति तस्य लक्षणाघटकतया अभावान्तरं कुड्याद्यभावमादाय तत्प्रतियोगितानवच्छेदकत्वं घटत्वरूपे साध्यतावच्छेदके अस्तीत्यतिव्याप्तिः इति शङ्का ।।

तत्र समाधानमाह–**एवं सतीति** । उक्तरीत्या दोषे प्रसक्ते सति, तद्वारणाय परिष्कारः क्रियते । साध्यतावच्छेदकसंबन्धनिरूपितानुयोगितासामान्ये स्वप्रतियोगिता-वच्छेदकविशिष्टप्रतियोगिनिरूपितत्वहेत्वधिकरणीभूतयत्किं-चिद्व्यक्तिनिष्ठत्वोभयाभाव एव विवक्षणीयः । पूर्वोक्तघटसंयोगे घटप्रतियोगिकत्वघटानुयोगिकत्व – उभयसत्त्वेऽपि संयोगानुयोगिता भिन्नभिन्ना । घटे घटविशिष्टबुद्ध्यनुदयेन घटप्रतियोगिकत्वविशिष्ट-संयोगानुयोगिता घटे न स्वीक्रियते । एवं च घटप्रतियोगिकत्वविशिष्टसंयोग-संबन्धानुयोगितायां पटनिष्ठायां हेत्वधिकरणघटव्यक्तिनिष्ठत्वाभावप्रयुक्तः उभयाभावः अस्ति । घटनिष्ठायां पटप्रतियोगिक संयोगानुयोगितायां घटप्रतियोगिकत्व-विशिष्टनिरूपितत्वाभावप्रयुक्तः उभयाभावोऽस्तीति तादृशाभाववदनुयोगिताकाभावः घटाभावो भवतीति तस्य लक्षणघटकतया तत्प्रतियोगित्वमेव साध्ये घटेऽस्तीति नातिव्याप्तिरिति भावः ।।

नन्वेवं विवक्षायां एतत्कल्पे समवायैक्यमते द्रव्यं जातेः इत्यादौ वक्ष्यमाणातिव्याप्तिरसंगता स्यात् । तदनुयोगितायाः – समवायानुयोगितायाः अनुयोगिभेदेन भिन्नत्वात् अनुयोगिताधर्मिकोभयाभावस्याक्षतत्वादित्यत आह – **एवं चेति** । **यथाश्रुतेति** । साध्यतावच्छेदकसंबन्धसामान्ये उभयाभावघटित-परिष्काराभिप्रायेणेत्यर्थः ।।

## गादाधरी

**अथ द्रव्यत्वादिकं** प्रति पर्याप्तिसंबन्धेन द्वित्वादेः व्यापकत्वापत्तिः । हेतुमतः एकैकद्रव्यस्य पर्याप्तिसंबन्धेन द्वित्वाद्यनधिकरणत्वेऽपि द्वित्वादिपर्याप्तौ

हेत्वधिकरणतद्व्यक्त्यनुयोगिकत्वाभावासत्त्वादिति द्रव्यत्वादिना पर्याप्तिसंबन्धेन गगनादौ द्वित्वाद्यनुमानापत्तिः । न चेष्टापत्तिः । एकमात्रविशेष्यकपर्याप्तिसंसर्गकव्यासज्य-वृत्तिधर्मप्रकारकबुद्धेः भ्रमतया सल्लिङ्गकपरामर्शात् तादृशानुमित्यभ्युपगमासंभवात् ।।

**न चैकमात्र**वृत्तिधर्मावच्छेदेन द्वित्वादिपर्याप्तेः एकैकस्मिन् असत्त्वेऽपि उभयवृत्ति-धर्मावच्छेदेन तत्पर्याप्तिसत्त्वात् तेन संबन्धेन तद्वति तत्प्रकारकत्वरूपप्रमात्वं दुर्वारमिति वाच्यम् । **तद्व्यावृत्त**प्रमालक्षणस्यापि कथंचिन्निर्वचनसंभवात् इति चेत् – न । **उद्देश्यतावच्छेदकान**तिरिक्तवृत्तित्वादिविशेषितपर्याप्तेः क्वचिदपि संबन्धत्वानभ्युमगमेन तादृशपर्याप्तिसंसर्गकानुमितेरापदनासंभवात् । गगनत्वाद्यनतिरिक्तवृत्तित्वविशेषितपर्याप्तेः द्वित्वादिप्रतियोगिकत्वाभावेन द्वित्वादिनिष्ठव्यापकत्वाघटकतया तादृशसंबन्धेनापि तदनुमानापत्त्यनवकाशात् ।।

## व्याख्या

साध्यतावच्छेदकसंबन्धसामान्ये स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिक-त्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावः प्रतियोगिवैयधिकरण्यम् इति परिष्कारोपरि शङ्कते – **अथ द्रव्यत्वादिकमिति** । गगनं द्वे द्रव्यत्वात् इत्यत्र द्रव्यत्वं प्रति द्वित्वस्य व्यापकत्वापत्तिः । अत्र साध्यतावच्छेदकसंबन्धः पर्याप्तिः । पर्याप्तिसंबन्धेन द्वित्वाभाववति गगने द्रव्यत्वसत्त्वात् अयं हेतुः व्यभिचारी । अत्र द्वित्वाभावमादायातिव्याप्तिः वारणीया । परं तु द्वित्वाभावे उक्तप्रतियोगिवैयधिकरण्यं नास्ति । तथा हि – साध्यतावच्छेदकसंबन्धे पर्याप्तौ द्वित्वाभावप्रतियोगिद्वित्व-प्रतियोगिकत्वस्य हेतुभूतद्रव्यत्वाधिकरणैकैकद्रव्यानुयो-गिकत्वस्य च सत्त्वात् उभयाभावविरहात् । द्वित्वपर्याप्तेः द्रव्यद्वयनिष्ठत्वेन प्रत्येकमपि सत्त्वावश्यंभावात् उभयस्य प्रत्येकानतिरेकात् । तथा च द्रव्यत्वाभावस्य लक्षणाघटकतया अभावान्तरमादाय तदप्रतियोगित्वरूपं व्यापकत्वं द्वित्वस्य स्यात् । न च द्वित्वस्य द्रव्यत्वव्यापकत्वमस्तु,



का हानिरिति वाच्यम् । द्रव्यत्वेन हेतुना गगने पर्याप्तिसंबन्धेन द्वित्वानुमानापत्तेः । न च भ्रमात्मकतादृशानुमिताविष्टापत्तिरिति वाच्यम् । गगनरूपैकमात्रविशेष्यकपर्याप्ति-संसर्गकद्वित्व-प्रकारकानुमितेः भ्रमात्मकतया सल्लिङ्गकपरामर्शस्य – व्याप्तिविशिष्ट-हेतुविषयक-परामर्शस्य भ्रमात्मकानुमित्यजनकत्वनियमभङ्गापत्तेः इति शङ्का ।।

उक्तानुमितेः प्रमात्वमिष्टमेवेतिशङ्कते–**न चैकमात्रेति** । एकमात्रवृत्तिगग-नत्वरूपधर्मावच्छिन्ने एकैकस्मिन् द्वित्वपर्याप्तेः असत्त्वेऽपि उभयवृत्तिधर्मावच्छेदेन द्वित्वपर्याप्तेः अपि सत्त्वात् । गगनरूपैकमात्रविशेष्यकद्वित्वप्रकारकबुद्धेः पर्याप्तिसंबन्धेन द्वित्ववति द्वित्वप्रकारकत्वरूपं प्रमात्वमस्त्येवेति नोक्तनियमभङ्गः इति भावः ।।

समाधत्ते–**तद्व्यावृत्तेति** । अग्रावच्छेदेन कपिसंयोगवति वृक्षे ''मूले वृक्षः कपिसंयोगवान्'' इति ज्ञानस्य प्रमात्ववारणाय यदवच्छेदेन यद्वत्त्वं तदवच्छेदेन तद्वति तत्प्रकारकत्वं प्रमात्वमिति वक्तव्यम् । अग्रावच्छेदन कपिसंयोगवति वृक्षे अग्रे वृक्षः कपिसंयोगवान् इति बुद्धेः प्रमात्वं भवति । मूलावच्छेदेन कपिसंयोगाभाववति वृक्षे ''मूले वृक्षः कपिसंयोगी'' इति बुद्धेः प्रमात्वं न संभवति । एवं च ''गगनं द्वे'' इत्यनुमितेः यदवच्छेदेनेति रीत्या उभयवृत्ति-धर्मावच्छेदेन द्वित्ववति गगने गगनत्वावच्छेदेन द्वित्वप्रकारकत्वेऽपि उभयवृत्तिधर्मावच्छेदेन द्वित्वप्रकारकत्वाभावात् उक्तप्रमालक्षणाना-क्रान्तत्वात् भ्रमत्वमावश्यकम् । पूर्वोक्तरीत्या सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्व-नियमभङ्गवारणाय द्वित्वस्य द्रव्यत्वव्यापकत्वं नाङ्गीकरणीयम् । भवत्परिष्कारे तु द्रव्यत्वव्यापकत्वं प्रसजति इति आक्षेपः स्थितः । तत्र समाधानमाह–**उद्देश्यता-वच्छेदके**त्यादिना । द्रव्यत्वेन हेतुना किं केवलपर्याप्तिसंबन्धेन ''गगनं द्वे'' इत्याकारकानुमितिः आपाद्यते, उत उद्देश्यतावच्छेदकगगनत्वव्याप्यत्वविशिष्टपर्याप्ति-संबन्धेन । नाद्यः । केवलपर्याप्तेः क्वापि संसर्गत्वानभ्युपगमेन तादृशापत्त्यसंभवात् । न द्वितीयः – गगनं द्वे इत्यत्र उद्देश्यतावच्छेदकगगनत्वव्याप्यत्वविशिष्टपर्याप्तेः

द्वित्वप्रतियोगिकत्वाभावात् । गगनद्वयाभावात् द्वित्वपदेन गगनघटद्वित्वस्यैव ग्राह्यतया तस्य उद्देश्यतावच्छेदकगगनत्वशून्यघटवृत्तित्वात् । एवं च तादृशस्थले व्याप्तिस्वीकारेऽपि न क्षतिः इति पर्यवस्यति । अत एव वक्ष्यति ''**तस्मात् द्वित्वादिसाध्यकद्रव्यत्वाकाशत्वादिकं सद्धेतुरेव**'' इति ।।

## गादाधरी

**यत्तु** – हेत्वधिकरणयत्किंचिद्व्यक्त्यनुयोगिकस्थले हेतुमत्त्वपर्याप्त्यवच्छेदकयत्किंचिद्धर्मावच्छिन्नानुयोगिकत्वं निवेश्यम् । द्वित्वादिपर्याप्तौ च द्रव्यत्वादिपर्याप्त्यवच्छेदकैकमात्रधर्मावच्छिन्नानुयोगिकत्वविरहात् न तेन संबन्धेन द्वित्वादेः द्रव्यत्वादिरूपप्रत्येकपर्याप्तधर्मव्यापकतापत्तिः ।।

हेतुमदृत्तियत्किंचिद्धर्मावच्छिन्नानुयोगिकत्वनिवेशे **इमे बहवः** त्रित्वात् इत्यादौ पर्याप्तिसंबन्धेन हेतुसाध्यभावेऽव्याप्तिः । हेतुमदेकमात्रवृत्तिधर्मावच्छिन्नानुयोगिताकत्वस्य बहुत्वादिपर्याप्तावसत्त्वेन तादृशसाध्याभावे निरुक्तप्रतियोगिवैयधिकरण्यस्य दुर्वारत्वात् । अतो हेतुपर्याप्त्यवच्छेदकयत्किंचिद्धर्मनिवेश इति ।।

## व्याख्या

गगनं द्वे द्रव्यत्वात् इत्यत्रैव शुद्धपर्याप्तेः संसर्गत्वं स्वीकृत्य प्रकारान्तरेण द्वित्वादेः व्यापकतापत्तिं वारयतां मतमाह–**यत्तु** इति । स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रतियोगिकत्वहेतुमत्त्वपर्याप्त्यवच्छेदकयत्किंचिद्धर्मावच्छिन्नानुयोगिकत्वोभयाभाववत्साध्यतावच्छेदकसम्बन्धसामान्यकत्वमभावे निवेश्यते । गगनं द्वे द्रव्यत्वात् इत्यत्र द्वित्वपर्याप्तौ द्रव्यत्वपर्याप्त्यवच्छेदकएकमात्रवृत्तिधर्मावच्छिन्नानुयोगिकत्वविरहात् न तेन संबन्धेन द्वित्वादेः द्रव्यत्वव्यापकत्वमिति नोक्तानुमित्यापत्तिः । द्वित्वादिपर्याप्तिः उभयादिवृत्तिधर्मेणैवावच्छेद इति नियमेन एकमात्रवृत्तिधर्मावच्छिन्नत्वाभावात् ।।



हेतुमत्त्वपर्याप्त्यवच्छेदकेत्यस्य स्थाने हेतुमद्वृत्तियत्किंचिद्धर्मावच्छिन्नानुयोगिकत्वनिवेशे दोषमाह–**इमे बहव** इति । इमे बहवः त्रित्वात् इत्यत्र सद्धेतौ हेतुतावच्छेदकसंबन्धः साध्यतावच्छेदकसंबन्धश्च पर्याप्तिरेव । साध्यतावच्छेदक-संबन्धे बहुत्वपर्याप्तौ त्रित्वरूपहेतुमदेकमात्रवृत्तिधर्मावच्छिन्नानुयोगिकत्वाभावेन तत्प्रयुक्तोभयाभाववत्साध्यतावच्छेदकसंबन्धकत्वात् साध्याभावस्य बहुत्वाभावस्य प्रतियोगिवैयधिकरण्यं स्यात् इति लक्षणघटकत्वं स्यात् तत्प्रतियोगितावच्छेदकमेव वहुत्वत्वरूपं साध्यतावच्छेदकमित्यव्याप्तिः स्यात् । तद्वारणाय हेतुपर्याप्त्य-वच्छेदकेति धर्मविशेषणम् । तथा सति बहुत्वपर्याप्तौ त्रित्वरूपहेतुपर्याप्त्यवच्छेदकानेकवृत्तिधर्मावच्छिन्नानुयोगिकत्वस्यापि सत्त्वात् उभयाभावाभावात् बहुत्वाभावस्य प्रतियोगिवैयधिकरण्याभावेन लक्षणाघटकतया अभावान्तरमादाय लक्षणसमन्वयात् नाव्याप्तिः इति भावः ।।

## गादाधरी

**तन्न** मनोरमम् । एतादृशरीत्या उक्तकल्पपरिष्कारेऽपि प्रतियोगिमद्भेदे हेतुपर्याप्त्यवच्छेदकावच्छिन्नानुयोगिकत्वस्य **अग्रिमकल्पे** विवक्षणे आकाशः आकाशघटोभयत्वात् इत्यादावतिव्याप्तेः दुर्वारत्वात् । **आकाशत्वाद्य-वच्छिन्नभेदस्य दर्शित**हेतुपर्याप्त्यवच्छेदकतदुभयवृत्तिधर्मावच्छिन्नेऽसत्त्वात् । **प्रतियोगिवृत्तिधर्मस्य भेदाधिकरणतानवच्छेदकत्वात्** ।।

**न च व्यासज्यवृत्ति**धर्मसाध्यके ईदृशरीतिरुपादेया, नान्यत्रेति वाच्यम् । **आकाशत्वादेः** आकाशघटादौ व्यासज्यवृत्तित्वभ्रमदशायां तदवच्छिन्नभेदस्य प्रत्येकहेत्वधिकरणवृत्तित्वग्रहेऽपि आकाशघटोभयत्वादिहेतुना आकाशत्वाद्यनुमित्युत्पत्त्या तन्निर्वाहाय तत्रापि साधनपर्याप्त्यवच्छेदकावच्छिन्नाधिकरणताकप्रतियोगिमद्भेदघटितव्याप्तिज्ञानहेतुतायाः वाच्यतया तत्राप्यनुमित्यौपयिकव्याप्तिप्रसिद्ध्यापत्तेः ।।

**तस्मात्** द्वित्वादिसाध्यकद्रव्यत्वाकाशत्वादिकं सद्धेतुरेव ।।

## व्याख्या

एतन्मतं दूषयति – **तन्नेति** । **अग्रिमकल्प** इति । प्रतियोगितावच्छेदक-विशिष्टप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासमान्ये यद्धर्मावच्छिन्नत्वयत्संवन्धा-वच्छिन्नत्वोभयाभावः इति अग्रे वक्ष्यमाणकल्पे प्रतियोग्यनधिकरणेत्यस्य प्रतियोगिमद्भेदवान् इत्यर्थः । तत्र भेदे हेतुपर्याप्त्यवच्छेदकावच्छिन्नानुयोगिकत्वनिवेश इत्यर्थः । तथा च यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्नभेदः हेतुपर्याप्त्यवच्छेदक-यत्किंचिद्धर्मावच्छिन्नानुयोगिकः तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वयत्संबन्धा-वच्छिन्नत्वोभयाभावः तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिः इति रीत्या परिष्कारे अयमाकाशः आकाशघटोभयत्वात् इत्यत्र व्यभिचारिणि हेतुसमानाधिकरणाभावः इत्यनेन आकाशत्वाभावः ग्राह्यः । तस्य प्रतियोगिवैयधिकरण्यं च तत्प्रतियोग्याकाशत्वा-वच्छिन्नभेदे प्रकृतहेतुपर्याप्त्यवच्छेदकोभयवृत्तिधर्मावच्छिन्नानुयोगिकत्वम् । तस्य आकाशत्वावच्छिन्नभेदे असत्त्वात् । तादृशभेदप्रतियोगी य आकाशः तद्वृत्ति यत् आकाशघटोभयत्वं तदवच्छिन्नानुयोगिकत्वस्य आकाशत्वावच्छिन्नभेदेऽसत्त्वात् । एकं नोभयमिति प्रतीतिरस्ति, उभयं नैकमिति प्रतीतिर्नास्ति इति कृत्वा आकाशघटोभयत्वा-वच्छिन्ने आकाशत्वावच्छिन्नभेदो नास्ति इति आकाशत्वावच्छिन्नभेदे आकाशघटोभ-यत्वावच्छिन्नानुयोगिकत्वाभावः इति यावत् । अतो यादृशप्रतियोगितापदेन आकाशत्व-रूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिता न ग्रहीतुं शक्यते । अपि तु पटत्वावच्छिन्न-प्रतियोगिता ग्राह्या । तदवच्छेदकपटत्वावच्छिन्नाधिकरणत्वावच्छिन्नभेदः पटाधिकरणं नेति प्रतीतिसिद्धः पटाधिकरणभेदः तस्मिन् प्रकृतहेतुपर्याप्त्यवच्छेदकं यत् आकाशघटोभयत्वं तदवच्छिन्नानुयोगिकत्वमस्ति । आकाशघटोभयं पटो न इति प्रतीतेः । एवं च तादृशप्रतियोगितायां पटत्वावच्छिन्नप्रतियोगितायां प्रकृतसाध्यतावच्छेदकाकाशत्वत्वा-



वच्छिन्नत्वाभावात् तत्प्रयुक्तोभयाभावसत्त्वेन तद्धर्म–आकाशत्वत्वावच्छिन्नाकाशत्व-सामानाधिरण्यं आकाशघटोभयत्वरूपहेतावस्ति । आकाशत्वाधिकरणे आकाशे आकाशघटोभयत्वसत्त्वात् इति भावः ।।

अतिव्याप्तिमुपपादयति – **आकाशत्वावच्छिन्नभेदस्येति** । **दर्शितेति** । प्रदर्शितः यः हेतुः आकाशघटोभयत्वं तत्पर्याप्त्यवच्छेदकः तत्पर्याप्त्यनुयोगितावच्छेदकधर्मः तदेव, तदवच्छिन्ने आकाशघटोभयस्मिन् आकाशत्वावच्छिन्नभेदस्य असत्त्वात् उभयं नैकमिति प्रतीत्यभावात् इति भावः । **प्रतियोगिवृत्तिधर्मस्य**– आकाशभेदप्रतियोगी आकाशः तत्र वर्तमानस्य आकाशघटोभयत्वस्य । **भेदाधिकरणतानवच्छेदकत्वात्**–आकाश-भेदाधिकरणतानवच्छेदकत्वात् ।।

तत्र मध्ये शङ्कते – **न च व्यासज्यवृत्तीति** । व्यासज्यवृत्तिद्वित्वबहुत्वादि-साध्यकस्थले एव हेतुपर्याप्त्यवच्छेदकावच्छिन्नानुयोगिकत्वनिवेशः, न तु अव्यासज्य-वृत्त्याकाशत्वादिसाध्यके । तत्र च भेदे हेतधिकरणवृत्तित्वमेव निवेश्यम् । एवं च उक्तस्थले अयमाकाशः आकाशघटोभयत्वात् इत्यत्र आकाशत्वावच्छिन्नप्रतियोगिताकभेदे हेत्वधिकरणघटवृत्तित्वस्य सत्त्वात् आकाशत्वावच्छिन्नप्रतियोगिताया अपि लक्षण-घटकतया तत्र उभयाभावासत्त्वान्नातिव्याप्तिः इति शङ्का । तत्र समाधानमाह– **आकाशत्वादेरिति** । अयं भावः – आकाशत्वम् आकाशघटयोः व्यासज्यवृत्तीति भ्रमदशायाम् आकाशभेदस्य प्रकृतहेत्वधिकरणघटवृत्तित्वग्रहेऽपि आकाशघटोभयत्वादि-हेतुना घटे आकाशत्वानुमितेः जायमानतया तदुपपादनाय अकाशत्वसाध्यकस्थलेऽपि हेतुपर्याप्त्यवच्छेदकावच्छिन्नाधिकरणताकप्रतियोगिमद्भेदघटितव्याप्तिज्ञानहेतुतायाः आवश्यकतया तत्राप्यनुमित्यौपायिकव्याप्तिप्रसङ्गात् इति । **तस्मादिति** । उक्तलक्षणस्य उक्तरीत्या अतिव्याप्तिग्रस्तत्वात् गगनं द्वे द्रव्यत्वात् इत्यादिकं सद्धेतुरेव ।।

## गादाधरी

इमे बहवः त्रित्वात् इत्यादावव्याप्तिवारणाय पर्याप्त्यतिरिक्तस्वरूपसंबन्धेन प्रतियोग्यधिकरणत्वावच्छिन्नस्य भेदः एव हेतुमति निवेश्यः । न तु प्रतियोग्यवच्छिन्नभेदः, प्रतियोगिमदवृत्तिधर्मवत्त्वं वा । तेन प्रत्येकवृत्तिबहुत्वाद्यवच्छिन्नभेदमादाय न तदभावस्य प्रतियोगिवैयधिकरण्यम् इत्येव सारम् ।।

## व्याख्या

एवं च प्रतियोग्यनधिकरणत्वं हेतुमति निवेश्यते । प्रतियोग्यनधिकरणत्वं च प्रतियोगिमद्भेदः । तत्रापि पर्याप्तिसंबन्धेन प्रतियोग्यवच्छिन्नभेदस्य निवेशे इमे बहवः त्रित्वात् इत्यत्र एकैकस्मिन् पर्याप्तिसंबन्धेन बहुत्ववद्भेदस्य सत्त्वात् बहुत्वाभावस्यापि लक्षणघटकतया अव्याप्तिः स्यात् । अतः स्वरूपसंबन्धेन प्रतियोग्यधिकरणत्वावच्छिन्नभेद एव हेतुमति निवेश्यः । तथा सति बहुत्वाधिकरणतायाः हेतुमति सत्त्वेन बहुत्ववद्भेदाभावात् बहुत्वाभावस्य प्रतियोग्यनधिकरणहेतुमद्वृत्तित्वाभावात् लक्षणाघटकतया अभावान्तरमादाय लक्षणसमन्वयान्नाव्याप्तिरिति भावः ।।

## गादाधरी

इदं तु बोध्यम्–साध्यतावच्छेदकावच्छिन्नाभावनिरूपितत्वविशिष्टसाध्यवन्निष्ठाधिकरणताभिन्नहेतुमन्निष्ठाधिकरणताकत्वमेव प्रतियोगिव्यधिकरणहेतुसमानाधिकरणेति प्रतीकार्थः । महाकालो घटवान् महाकालत्वात् इत्यादौ च नैतादृशविशेषणाक्रान्ताभावाप्रसिद्धिः । कालिकसंबन्धावच्छिन्नपटाद्यभावस्यैव तथात्वात् हेतुमन्निष्ठतदधिकरणतायां साध्याभावाधिकरणताभिन्नत्वसत्त्वेन विशिष्टभेदसत्त्वादिति उभयाभावघटितप्रतियोगिवैयधिकरण्यानुधावनं **दीधितिकृताम्** अफलमेव । **एवं च** प्रतियोगिवैयधिकरण्यस्य यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः इत्यादिक्रमेण निर्वचनेऽननुगमात् प्रतियोगितावच्छेदकत्वावच्छिन्नाभावकूटनिवेशने व्याप्तेर्दुर्ज्ञेयतेति दूषणमनवकाशमिति दिक् ।।



## व्याख्या

साध्यतावच्छेदकावच्छिन्नाभावनिरूपिता या साध्यवन्निष्ठाधिकरणता तद्भिन्ना या हेतुमन्निष्ठाधिकरणता तत्कत्वमेव प्रतियोगिव्यधिकरणहेतुसमानाधिकरणेत्य-स्यार्थः । तादृशाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति फलितम् । अत्रेदं सूक्ष्मम् – अव्याप्यवृत्तिसाध्यके कपिसंयोग्येतद्वृक्षत्वात् इत्यादौ अव्याप्तिवारणाय हि प्रतियोगिवैयधिकरण्यविशेषणम् । तस्योक्तपरिष्कारेण तत्र अव्याप्तिवारणं भवति । तत्र एतद्वृक्षत्वरूपहेतुमान् एतद्वृक्षः । तत्र अग्रावच्छेदेन कपिसंयोगरूपं साध्यं मूलावच्छेदेन कपिसंयोगाभावरूपः साध्याभावश्च वर्तते । तथा च वृक्षनिष्ठा अधिकरणता कपिसंयोगत्वावच्छिन्नाभावनिरूपिता कपिसंयोगवन्निष्ठा च भवति तद्भिन्ना अधिकरणता घटाद्यभावनिरूपिता वृक्षनिष्ठाधिकरणता तन्निरूपकोऽभावः घटाद्यभाव एव न कपिसंयोगाभावः, घटाद्यभावप्रतियोगितावच्छेदकं घटत्वादि तदनवच्छेदकं कपिसंयोगत्वरूपं साध्यतावच्छेदकं तदवच्छिन्नकपिसंयोगसामानाधिकरण्यमेतद्वृक्षत्वहेतावस्तीति लक्षणसमन्वयः ।।

व्याप्यवृत्तिसाध्यके वह्निमान् धूमादित्यादौ हेतुमन्निष्ठा अधिकरणता घटाद्यभावनिरूपिता, तस्यां पर्वतनिष्ठायामधिकरणतायां वह्नित्वावच्छिन्नाभावनिरूपितत्वविशिष्टवह्निमन्निष्ठाधिकरणताभेदसत्त्वात् । अयमभावः विशेषणाभावप्रयुक्तविशिष्टभेदरूपः । तथा च घटाद्यभावमादाय समन्वयः ।।

धूमवान् वह्नेः इत्यत्र वह्निरूपहेतुमन्निष्ठा अधिकरणता अयोगोलकनिष्ठा अधिकरणता तस्यां साध्यतावच्छेदकधूमत्वावच्छिन्नाभावनिरूपितत्वसत्त्वेऽपि धूमरूपसाध्यवन्निष्ठत्वं नास्ति इति विशेष्याभावप्रयुक्तविशिष्टभेदवती सा तन्निरूपकोऽभावः धूमाभावः तत्प्रतियोगितावच्छेदकमेव धूमत्वमिति नातिव्याप्तिः ।।

अधिकरणतायां साध्यवन्निष्ठत्वानिवेशे ''संयोगी सत्त्वात्'' इत्यत्रातिव्याप्तिः। सत्तारूपहेतुमद्गुणनिष्ठायां संयोगाभावाधिकरणतायां साध्यतावच्छेदकसंयोगत्वावच्छिन्नाभावनिरूपितत्वसत्त्वेन तन्निरूपितभिन्नत्वाभावात् संयोगाभावस्य तत्र लक्षणघटकत्वं न स्यात्, अतोऽभावान्तरमादायातिव्याप्तिः स्यात् । अतः साध्यवन्निष्ठत्वनिवेशः । तन्निवेशे च हेत्वधिकरणीभूतगुणनिष्ठायां संयोगाभावाधिकरणतायां संयोगरूपसाध्यवद्द्रव्यनिष्ठाधिकरणताभेदसत्त्वात् संयोगाभावस्यापि लक्षणघटकतया नातिव्याप्तिः । साध्याभावनिरूपिता या अधिकरणता साध्यवन्निष्ठा तद्भिन्ना इति निवेशे प्रमेयवान् वाच्यत्वात् इत्यादौ प्रमेयाभावनिरूपितसाध्यवन्निष्ठाधिकरणत्वाप्रसिद्ध्या अव्याप्तिः स्यात् । तद्वारणाय साध्यतावच्छेदकावच्छिन्नेत्युक्तम् । तथा सति समवायादिसंबन्धावच्छिन्नप्रमेयत्वाबच्छिन्नाभावाधिकरणताभिन्नघटाद्यभावाधिकरणतायाः प्रसिद्ध्या न दोषः । कालो घटवान् महाकालत्वादित्यत्र कालिकसंबन्धावच्छिन्नपटाद्यभावाधिकरणतायां कालनिष्ठायां साध्यतावच्छेदकघटत्वावच्छिन्नाभावनिरूपितत्वविशिष्टाधिकरणताभेदसत्त्वात् तन्निरूपकपटाद्यभावमादाय लक्षणसंगतिः । तत्प्रतियोगितानवच्छेदकत्वस्य घटत्वरूपे साध्यतावच्छेदके सत्त्वात् ।।

एवं च उक्तस्य परिष्कारस्य निर्दोषत्वात् **दीधितिकाराणां** साध्यताबच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वेत्यादिना उभयाभावघटितप्रतियोगिवैयधिकरण्यानुसरणं निष्फलम् इति ।।

**एवं चेति** । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत इति पूर्वपरिष्कारे यादृशतादृशेत्युक्त्या अननुगमः । प्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावकूटनिवेशे असर्वज्ञदुर्ज्ञेयत्वम् । अस्मदुक्तपरिष्कारे तु यादृशतादृशेत्यादिरीतिं विना साध्यतावच्छेदकावच्छिन्नाभावनिरूपितत्वविशिष्टसाध्यवन्निष्ठाधिकरणताभिन्नहेतु-



मन्निष्ठाधिकरणताकाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति अनुगतरीत्यैव परिष्कारात् इति भावः । दिगर्थस्तु– वक्ष्यमाणप्रतियोगिताधर्मिकोभयाभावघटितकल्पोऽप्यनावश्यक इति ।।

## दीधितिः

**स्वरूपसंबन्धेन** गगनादेर्वृत्तिमत्त्वे तु **निरुक्तप्रतियोग्यनधिकरणहेतु**मन्निष्ठाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तेन संबन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम् ।।

## गादाधरी

**ननु गगनादेरपि** कालिकसंबन्धेन कालवृत्तित्वमावश्यकम् । अन्यथा तेषां परमार्थसत्तानुपपत्तिः । तस्य कालवृत्तित्वरूपत्वात् । **एवं** कारणत्वानुपपत्तिश्च । तस्य **पूर्वकाल**वृत्तित्वघटितत्वात् । **अवृत्तित्वप्रवादश्च** तत्र कालिकातिरिक्तसंबन्धेनावृत्तित्वपरः ।।

इत्थं च कालिकसंबन्धसामान्ये गगनादिप्रतियोगिकत्वमहाकालानुयोगिकत्वोभयाभावोऽपि दुर्लभः । तदभावेऽपि प्रतियोगिवैयधिकरण्यं दुर्घटम् ।।

**एवं विषयितया** घटादिसाध्यके नित्यज्ञानत्वादिहेतावपि प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिः दुर्वारैव । हेतुमति भगवज्ज्ञानादौ विषयितासंबन्धेन वस्तुमात्रस्यैव संबन्धित्वात् विषयितासंबन्धसामान्ये हेत्वधिकरणानुयोगिकत्वघटितोभयाभावस्य दुर्घटत्वात् इत्यालोच्य कल्पान्तरमाह—**स्वरूपसंबन्धेन** इत्यादिना ।।

## व्याख्या

**स्वरूपसंबन्धेन** इत्यादिदीधितिग्रन्थम् अवतारयति – **ननु गगनादेरपी**त्यादिना । साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणी-

भूतयत्किंचिद्वृत्त्यनुयोगिकत्वसामान्योभयाभावः प्रतियोग्यसामानाधिकरण्यमिति पूर्वोक्तपरिष्कारे कालो घटवान् महाकालत्वात् इत्यत्र अवृत्तिगगनाभावमादाय लक्षणसमन्वयः कार्य इति पूर्वमुक्तम् । इदानीं गगनादेरपि कालिकसंबन्धेन वृत्तिरिति मते कालिकसंबन्धे गगनाभावप्रतियोगिगगन प्रतियोगिकत्वहेत्वधिकरणकालानु-योगिकत्वोभयस्यैव सत्त्वेन उभयाभावविरहात् गगनाभावस्य न लक्षणघटकत्वमित्यभिप्रेत्य प्रकारान्तरेण लक्षणं परिष्करोति **दीधितौ स्वरूपसंबन्धेने**त्यादिना । गगनादौ कालिकसंबन्धेन कालवृत्तित्वं किमर्थं स्वीकरणीयमिति शङ्कायां तदुपपादयति – **ननु गगनादेरपी**त्यादिना **गादाधर्याम्** । कालातिरिक्तवस्तुनि गगनस्यावृत्तित्वेऽपि कालवृत्तित्वं गगनस्य अवश्यं स्वीकरणीयम् । अन्यथा गगनस्य परमार्थसत्त्वं न स्यात् । परमार्थसत्त्वं हि कालवृत्तित्वरूपम् । एवं गगनस्य कारणत्वं च नोपपद्यते। तस्य शब्दसमवायिकारणत्वमङ्गीक्रियते । कारणत्वं च कार्यपूर्ववृत्तित्वरूपम् इति । तर्हि गगनमवृत्तीति प्रवादः कथम् इति चेन्न । तस्य प्रवादस्य कालिकातिरिक्तसं-बन्धेनावृत्तित्वतात्पर्यकत्वात् । इत्थं च कालिकसंबन्धे गगनप्रतियोगिकत्व-महाकालानुयोगिकत्वोभयसत्त्वात् तदभावघटितप्रतियोगिवैयधिकरण्यं दुर्घटम् ।।

एवं बिषयितासंबन्धेन घटादिसाध्यके नित्यज्ञानत्वादिहेतौ च प्रतियोगिव्यधि-करणाभावाप्रसिद्ध्या अव्याप्तिः । तथाहि – नित्यज्ञानम् ईश्वरीयज्ञानं तत् सर्वविषयकम्। ईश्वरज्ञानं विषयितासंबन्धेन घटवत् नित्यज्ञानत्वात् इत्यनुमानम् । तत्र हेतुमति ईश्वरज्ञाने विषयितासंबन्धेन सकलवस्तूनां संबन्धित्वात् हेतुतावच्छेदकसंबन्धसामान्ये ईश्वरज्ञाननिष्ठविषयितायां हेत्वधिकरणेश्वरज्ञानानुयोगि-कत्वघटादिप्रतियोगिकत्वोभयस्यैव सत्त्वात् तदुभयाभावस्यासंभवात् तदुभयाभाव-वद्विषयिताकाभावाप्रसिद्ध्या अव्याप्तिः इत्यालोच्य कल्पान्तरमाह–**स्वरूपसंबन्धेने**त्यादिना इति भावः ।।



परमार्थसत्त्वं नाम प्रमाविषयत्वम्, न तु कालवृत्तित्वमिति यद्युच्येत तदाप्याह– **एवमिति** । **पूर्वकालेति** । कार्यनियतपूर्वकालवृत्तित्वस्यैव कारणत्वरूपत्वात् इत्यर्थः। **अवृत्तित्वप्रवादस्य**–गगनमवृत्ति इति प्रवादस्य संयोगादिसंबन्धेनावृत्तित्वपरत्वादित्यर्थः।।

कारणत्वस्य पूर्वकालावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदक-धर्मवत्त्वरूपत्वे गगनादीनां वृत्तिमत्त्वे प्रमाणाभावात् प्रकारान्तरेणावतारिकामाह– **एवं विषयितयेति** । ईश्वरज्ञानं घटवत् नित्यज्ञानत्वात् इत्यत्र हेत्वधिकरणस्य ईश्वरज्ञानस्य सर्वविषयकत्वेन सर्वेषां विषयितया तत्संबद्धत्वात् विषयितासंबन्ध-सामान्ये स्वप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणानुयोगिकत्वोभयस्यैव सत्त्वेन उभयाभावस्य दुर्घटत्वादिति भावः ।।

**दीधित्युक्त**परिष्कारस्य समन्वयादिकं पश्चात् करिष्यति **भट्टाचार्यः** । ततः प्राक् प्रकृत**दीधितिं** प्रकारान्तरेणावतारयतां मतमनूद्य विमृशति– **अत्र केचित्** इत्यादिना।।

## गादाधरी

**अत्र केचित्** – साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगि-कत्वहेत्वधिकरणीभूतयत्किंचिद्वृत्त्यनुयोगिकत्वंसाध्यप्रतियोगित्वैत- त्रित्वावच्छिन्ना-भावस्य विवक्षितत्वात् न विषयितासंबन्धेन घटादिसाध्यके नित्यज्ञानत्वादिहेतावव्याप्तिः। घटाद्यभावस्यैव तेन संबन्धेन प्रतियोगि-व्याधिकरणत्वात् । घटपटविषयितयोः भिन्नत्वेन विषयितासंबन्धसामान्ये तादृशत्रित्वावच्छिन्नाभावस्य सत्त्वात् ।।

**न चैतादृश**त्रित्वावच्छिन्नाभावनिवेशे **स्वरूपसंबन्धेन** गगनादेः वृत्तित्वेऽपि न घटादिसाध्यककालत्वादिहेतावव्याप्तिः; प्रतियोगिभेदेन कालिकसंबन्धस्यापि भिन्नतया (गगनाद्य) घटाद्यभावस्यैव तादृशप्रतिव्यधिकरणत्वात् इति वाच्यम् । कालिकसंबन्धेन प्रमेयसामान्यसाध्यकस्थलेऽव्याप्तेः । तत्र सर्वस्यैव साध्यतया कालिकसंबन्धसामान्य-

एव साध्यप्रतियोगिकत्वसत्त्वेन उपदर्शितत्रित्वावच्छिन्नाभावस्यासत्त्वात् । **एतत्क्षणान्य-क्षणवृत्तित्वविशिष्ट** प्रमेयसान्यसाध्य-ककालत्वादिहेतोः अव्याप्यवृत्तिसाध्यकत्वेन तत्राव्याप्तेश्च ।।

### व्याख्या

यथाश्रुतलक्षणे कालो घटवान् महाकालत्वात् इत्यत्रैव प्रतियोगिव्यधिकरणा-भावाप्रसिद्ध्या अव्याप्तिमाशङ्क्य **दीधितौ** साध्यतावच्छेदकसंबन्धानुयोगिकोभया-भावघटितपरिष्कारःकृतः । न तु ईश्वरज्ञानं घटवत् नित्यज्ञानत्वात् इत्यत्रेति दीधितौ न्यूनतामाशङ्क्य, महाकालत्वहेतुक एवाव्याप्तिः न तु नित्यज्ञानत्वहेतुके इति वदतां मतमाह – **अत्र केचिदिति** । साध्यतावच्छेदकसंबन्धसामान्ये स्वप्रतियोगितावच्छेदक-विशिष्टप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किं चिद्व्यक्त्यनुयोगिकत्वसाध्य-प्रतियोगिकत्वएतत्त्रित्वावच्छिन्नाभावः व्याप्तिघटकाभावे विशेषणतया विवक्षितः । उभयाभाव इति कथनं त्रित्वावच्छिन्नाभावस्यापि उपलक्षणमिति भावः ।।

वह्निमान् धूमात् इत्यादौ साध्यतावच्छेदकसंयोगसंबन्धसामान्ये घटप्रतियो-गिकत्वसाध्यवह्निप्रतियोगिकत्वहेत्वधिकरणपर्वतानुयोगिकत्वैतत्त्रयाभावसत्त्वात् घटाद्यभावो लक्षणघटकः । वह्न्यभावस्तु न लक्षणघटकः, संयोगसंबन्धे वह्न्यभावप्रतियोगिवह्नि-प्रतियोगिकत्व – साध्यवह्निप्रतियोगिकत्व–हेत्वधिकरणपर्वतानुयोगिकत्वैतत्त्रयस्य सत्त्वेन तदभावविरहात् ।।

धूमवान् वह्नेरित्यादौ धूमाभावोऽपि लक्षणघटकः, संयोगे धूमाभावप्रतियो-गिधूमप्रति-योगिकत्वसाध्यभूतधूमप्रतियोगिकत्वयोः सत्त्वेऽपि हेत्वधिकरणायोगोलकानुयोगिकत्वा-भावेन तत्प्रयुक्तत्रयाभावस्य सत्त्वात् इति नातिव्याप्तिः ।।

त्रित्वं च बुद्धिविशेषविषयत्वम् । अतोऽत्र साध्यप्रतियोगिकत्वस्वप्रतियोगि-प्रतियोगिकत्वयोरैक्येऽपि त्रित्वस्य न हानिः । ईश्वरज्ञानं घटवत् नित्यज्ञानत्वात्



इत्यत्र विषयभेदेन ज्ञाननिष्ठविषयितायाः भेदात् विषयितापदेन पटनिरूपितविषयितां गृहीता चेत् तत्र साध्यघटप्रतियोगिकत्वाभावेन तत्प्रयुक्तत्रितयाभावस्य सत्त्वेन घटाभावस्यापि लक्षणघटकतया तत्प्रतियोगित्वमेव साध्ये घटेऽस्तीति नातिव्याप्तिः ।।

ननु एवं विवक्षणे घटवन्नित्यज्ञानत्वात् इत्यत्र यथा अव्याप्तिर्न भवति, तथा कालो घटवान् महाकालत्वात् इत्यत्रापि अव्याप्तिर्न भवति । कालिकसंबन्धेन गगनादेर्वृत्तित्वेऽपि प्रतियोगिभेदेन कालिकसंबन्धस्यापि भिन्नतया कालिकसंबन्ध-सामान्ये – गगनप्रतियोगिककालिकसंबन्धे साध्यघटप्रतियोगिकत्वाभावप्रयुक्तत्रया-भावस्य सत्त्वात् घटाभावस्यापि लक्षणघटकत्वात् तत्प्रतियोगित्वस्यैव साध्ये घटे सत्त्वात् इत्याशङ्कते – **न चैतादृशेति** । **स्वरूपसंबन्धेन** – कालि-कविशेषणतासंबन्धेन। **गगनाद्यभावस्येति** । **घटाद्यभावस्येति** पाठः साधुः ।।

समाधत्ते – **कालिकसंबन्धेनेति** । कालः कालिकसंबन्धेन प्रमेयवान् महाकालत्वात् इत्यत्राव्याप्तिः । तत्र प्रमेयत्वेन रूपेण सर्वस्यैव साध्यतया कालिकसंबन्धसामान्ये एव अर्थात् घटादिस्वरूपेषु कालिकसंबन्धेषु प्रमेयरूपसाध्यप्रतियोगिकत्वसत्त्वेन साध्यप्रतियोगिकत्वाभावप्रयुक्तत्रयाभावस्य असंभवात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तेः प्रसङ्गात् इति भावः ।।

प्रमेयसामान्यस्य व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्यानिवेशात् नाव्या-प्तिरित्याशङ्क्य स्थलान्तरेऽव्याप्तिमाह – **एतत्क्षणेति** । कालः कालिकसंबन्धेन एतत्क्षणान्यक्षणवृत्तित्वविशिष्टप्रमेयवान् कालत्वात् । अयं सद्धेतुः । अयं कालिकाव्याप्य-वृत्तिसाध्यकः । अत्र प्रतियोगिवैयधिकरण्यघटितैव व्याप्तिः । अत्र पूर्वोक्तरीत्या अव्याप्तेः प्रसक्तिः । विशिष्टशुद्धयोरनतिरेकात् सर्वेषु कालिकसंबन्धेषु प्रमेयप्रतियोगिकत्वसत्त्वात् तदभावप्रयुक्तत्रयाभावो वक्तुं न शक्यत इत्याशयः ।।

## गादाधरी

**न च तथा** विषयितासंबन्धेन प्रमेयसामान्यसाध्यके नित्यज्ञानत्वादिहेतौ अव्याप्तेः संभवात् कथं तदुक्तिसंगतिरिति वाच्यम् । **साध्यप्रतियोगिकत्वेत्यनेन** साध्यतावच्छेदक-विशिष्टप्रतियोगिकत्वविवक्षणात् प्रमेयत्वविशिष्टघटविषयितातः घटत्वविशिष्टविषयितायाः भिन्नत्वेन घटाद्यभावस्य प्रतियोगिव्यधिकरणत्वात् ।।

**न चेश्वरज्ञानीय**प्रमेयत्वविशिष्टघटविषयितायां तादृशत्रित्वावच्छिन्नस्य सत्त्वेन कथं तत्र घटाद्यभावस्य प्रतियोगिवैयधिकरण्यमिति वाच्यम् ।।

**निरुक्तप्रतियोगि**प्रतियोगिकत्वेन यदभावीयप्रतियोगितावच्छेदकपर्याप्तप्रतियो-गितावच्छेदकताकत्वस्य विवक्षणात् ईश्वरज्ञानीयतादृशविषयितायां प्रमेयत्वस्यापि निरूपकतावच्छेदकत्वेन घटत्वपर्याप्तप्रतियोगितावच्छेदकताकत्वाभावेन घटाद्यभावस्य प्रतियोगिव्यधिकरणत्वात् ।।

## व्याख्या

नन्वेवमेव विषयितासंबन्धेन प्रमेयसाध्यकस्थलेऽपि अव्याप्तिः संभवति । विशिष्टशुद्धयोरनतिरेकात् सर्वेषु विषयितासंबन्धेषु प्रमेयप्रतियोगिकत्वसत्त्वात् साध्यप्रतियोगिकत्वाभावप्रयुक्तस्य उक्तत्रयाभावस्यासंभवात् प्रतियोगिव्यधिकरणा-भावाप्रसिद्ध्या अव्याप्तेः संभवात् इत्याशङ्कते – **न च तथेति** । समाधत्ते – **साध्यप्रतियोगिकत्वेत्यनेनेति** । साध्यतावच्छेदकसंबन्धसामान्ये प्रतियोगितावच्छेदक-विशिष्टप्रतियोगिप्रतियोगिकत्वसाध्यतावच्छेदकविशिष्टप्रतियोगिकत्वावच्छिन्नाभावः विवक्षितः । शुद्धघटत्वावच्छिन्ननिरूपितविषयितायां प्रमेयत्वविशिष्टघटप्रतियोगिकत्वं नास्तीति तदभावप्रयुक्तत्रितयाभावस्य सत्त्वात् घटत्वावच्छिन्नाभावस्यैव प्रतियोगिव्यधि-करणस्य प्रसिद्धतया न प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः । तादृशाभावप्रतियोगितान-वच्छेदकत्वं च प्रमेयत्वेऽस्तीति नाव्याप्तिः संभवतीति भावः ।।



पुनः शङ्कते–**न चेश्वरज्ञानीयेति** । प्रमेयो घट इत्याकारकेश्वरज्ञानीयविषयितायां–प्रमेयत्वविशिष्टघटनिरूपितविषयितायां घटप्रतियोगिकत्वसाध्यतावच्छेदकविशिष्ट-प्रतियोगिकत्वहेत्वधिकरणनित्यज्ञानानुयोगिकत्वैतत्त्रितयसत्त्वात् कथं घटाभावः प्रतियोगिव्यधिकरणः, उक्तत्रितयाभाववत्साध्यतावच्छेदकसंबन्धानुयो-गिकत्वाभावात् इति शङ्कितुराशयः ।।

तत्र समाधानमाह–**निरुक्तप्रतियोगीत्यादिना** । निरुक्तप्रतियोगिप्रतियो-गिकेत्यनेन प्रकृतप्रतियोगितावच्छेदकपर्याप्तावच्छेदकताकत्वविवक्षणात् ईश्वरज्ञानीयायां प्रमेयत्व-विशिष्टघटबिषयितायां प्रमेयत्वस्यापि निरूपकतावच्छेदकत्वेन घटत्वपर्याप्तप्रतियोगिता-वच्छेदकताकत्वाभावेन तत्प्रयुक्तत्रितयाभावघटितप्रतियोगिवैयधिकरणत्वं घटा-भावस्यास्तीति नाप्रसिद्धिरिति भावः । तथा चैतादृशस्थलेषु अव्याप्तेरसंभावादेव पूर्वोक्तत्रितयाभावघटितप्रतियोगिवैयधिकरण्यनिवेशपक्षे कालिकसंबन्धेन गगनादेः वृत्तिमत्त्वपक्षे कालो घटवान् महाकालत्वात् इत्यत्राव्याप्तिराशङ्किता स्वरूपसंबन्धेन गगनादेः वृत्तिमत्त्वे तु इत्यादिना **दीधितौ** इति आशयः **केचित्तुकाराणाम्** ।।

## गादाधरी

**इत्थं च** स्वरूपसंबन्धेन गगनादेः वृत्तिमत्त्वेऽपि कालिकसंबन्धेन घटादि-साध्यकस्थलेऽप्यव्याप्तिः संभवति । प्रमेयत्वविशिष्टघटनिरूपितकालिकविशेषण-तातः घटत्वविशिष्टघटनिरूपितकालिकविशेषणतायाः अभिन्नत्वेन कालिकसंबन्धसामान्ये घटत्वपर्याप्तावच्छेदकताकत्वाभावेन घटाद्यभावस्यापि प्रतियोगिव्यधिकरणतया तत्प्रति-योगितावच्छेदकत्वस्य घटत्वे सत्त्वात् इदानीं प्रमेयघटः, इदानीं घट इत्यादिप्रत्ययानामेकेनैव कालिकविशेषणत्वेनोपपत्तेः निरूपकतावच्छेदकभेदेन तादृशसंबन्धभेदस्यानभ्युपगमात् । अतः कल्पान्तरमनुसरति – **स्वरूपसंबन्धेन** इत्याहुः ।।

## व्याख्या

उक्तरीत्या परिष्कारे कृते कालो घटवान् महाकालत्वात् इत्यत्रापि अव्याप्तिः संभवतीत्याह–**इत्थं चेति**। गगनादेः वृत्तिमत्त्वेऽपि प्रमेयत्वविशिष्टघटनिरूपितकालिकविशेषणतातः शुद्धघटत्वविशिष्टघटनिरूपितकालिकविशेषणतायाः अभिन्नतया कालिकसंबन्धसामान्ये घटत्वपर्याप्तावच्छेदकताकत्वाभावेन घटाभावस्यापि प्रतियोगिव्यधिकरणतया तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके घटत्वे सत्त्वात् अव्याप्तेः प्रसङ्गात्। इदानिं घटः, इदानीं प्रमेयघट इत्यादिप्रत्ययानां एकेनैव कालिकविशेषणेनोपपत्तेः निरूपकतावच्छेदकभेदेन संबन्धभेदानभ्युपगमात्। विषयितायामेव निरूपकतावच्छेदकभेदेन भेदः। अतः कल्पान्तरमनुसरति– **स्वरूपसंबन्धेनेति** इत्याहुः ।।

## गादाधरी

**तदसत्**। तथा सति स्वरूपसंबन्धेन गगनादेः अवृत्तित्वेऽपि नित्यज्ञानीयप्रमेयत्वविशिष्टघटनिरूपितविषयितातो नित्यज्ञानीयघटत्वविशिष्टनिरूपितविषयितायाः अभिन्नत्वेऽपि क्षतिविरहेण विषयितासंबन्धेन घटादिसाध्यके ईश्वरीयज्ञानामात्रवृत्तिहेतावव्याप्तेर्दुर्वारत्वात् ।।

## व्याख्या

तन्मतं खण्डयति – **तदसदिति**। यथा वा प्रमेयत्वविशिष्टघटनिरूपितकालिकविशेषणता शुद्धघटनिरूपितकालिकविशेषणता च एकैव, तथैव प्रमेयत्वविशिष्टघटनिरूपितविषयितातः शुद्धघटनिरूपितविषयिताया अपि ऐक्ये बाधकविरहेण घटवन्नित्यज्ञानत्वादित्यादावव्याप्तेः **दुर्वारत्वात्** – तदुपेक्षायां बीजाभावात् इति भावः ।।

## गादाधरी

एतेन साध्यतावच्छेदकविशिष्टप्रतियोगिकसाध्यतावच्छेदकसंबन्धसामान्ये निरुक्तोभयाभावस्य विवक्षणान्न घटवत् नित्यज्ञानत्वात् इत्यादावव्याप्तिः। तत्र



घटत्वविशिष्टनिरूपितविषयितासामान्ये पटप्रतियोगिकत्वाभावेन पटाभावस्यैव प्रतियोगिव्यधिकरणत्वात्। स्वरूपसंबन्धेन गगनादेः वृत्तित्वे तु घटवान् महाकालत्वात् इत्यादौ उक्तक्रमेण पर्याप्तेर्निवेशस्यावश्यकतया घटाभावस्यापि प्रतियोगिव्यधिकरणतया अव्याप्तिः। अतः कल्पान्तरानुसरणम् इत्यपि अपास्तम् ।।

## व्याख्या

साध्यतावच्छेदकविशिष्टप्रतियोगिकसाध्यतावच्छेदकसंबन्धसामान्ये स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्व–हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः लक्षणघटकाभावे विशेषणतया विवक्षितः। वह्निमान् धूमात् इत्यत्र घटाभावः लक्षणघटकः। साध्यतावच्छेदकवह्नित्वविशिष्टवह्निप्रतियो-गिकसंयोगे हेत्वधिकरणीभूतपर्वतानुयोगिकत्वसत्त्वेऽपि स्वपदग्राह्यो यः घटाभावः तत्प्रतियोगितावच्छेदकघटत्वविशिष्टघटप्रतियोगिकत्वं नास्तीति उभयाभावसत्त्वात् घटाभावस्य लक्षणघटकतया तत्प्रतियोगितानवच्छेदकं वह्नित्वमिति समन्वयः। धूमवान् वह्नेरित्यादौ धूमाभावोऽपि लक्षणघटकः। साध्यतावच्छेदकधूमत्व-विशिष्टधूमप्रतियोगिकसंयोगसंबन्धे हेत्वधिकरणीभूतायोगोलकानुयोगिकत्वाभावात् तत्प्रयुक्तोभयाभावस्य धूमाभावे सत्त्वात्। तत्प्रतियोगितावच्छेदकमेव धूमत्वरूपं साध्यतावच्छेदकमिति नातिव्याप्तिः ।।

एवं च ईश्वरज्ञानं विषयितासंबन्धेन घटवत् नित्यज्ञानत्वात् इत्यत्र सद्धेतौ साध्यतावच्छेदकघटत्वविशिष्टघटनिरूपितविषयितारूपे साध्यतावच्छेदकसंबन्धे हेत्वधिकरणेश्वरज्ञानानुयोगिकत्वसत्त्वेऽपि पटत्वविशिष्टपटप्रतियोगिकत्वाभावेन उभयाभावस्य सत्त्वात् पटाभावस्यैव तत्र लक्षणघटकतया तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके घटत्वेऽस्तीति नाव्याप्तिः ।।

कालिकविशेषणतारूपस्वरूपसंबन्धेन गगनादेः वृत्तित्वे तु घटवान् महा-कालत्वात् इत्यादौ प्रमेयत्वविशिष्टघटप्रतियोगिककालिकसंबन्धे साध्यतावच्छेदकसंबन्ध-

सामान्यान्तर्गते घटत्वपर्याप्तावच्छेदकताकत्वाभावेन तस्य प्रमेयत्वविशिष्टघटाभावस्य ग्रहीतुमशक्यतया घटप्रतियोगिककालिकसंबन्धे च घटत्वपर्याप्तावच्छेदकताकत्वहेत्वधिकरणकालानुयोगिकत्वोभयसत्त्वेन उभयाभावविरहात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिः । अतः कल्पान्तरानुसरणमिति भावः ।।

## गादाधरी

**उक्तस्थले** साध्यनिरूपितविषयितासंबन्धसामान्यान्तर्गतप्रमेयत्वविशिष्टघटनिरूपितविषयितायां घटत्वपर्याप्तावच्छेदकताकत्वाभावेन शुद्धघटत्वविशिष्टघटनिरूपितविषयितायां च हेत्वधिकरणानुयोगिकत्वाभावेन साध्यनिरूपितविषयितासामान्ये उभयाभावस्य सत्त्वात् अव्याप्तेः ।।

**तस्मात् प्राचीनमते** वृत्त्यनियामकविषयितादिसंबन्धेन व्याप्त्यनम्युपगमात् उक्तस्थले अव्याप्त्यसंभवात् कालिकसंबन्धेन गगनादेर्वृत्तिमत्त्वे घटवान् महाकालत्वात् इत्यादावव्याप्तिः । अतः कल्पान्तरमनुसरति– **स्वरूपसंबन्धेनेत्यादिना** ।।

## व्याख्या

**उक्तस्थले** – ईश्वरज्ञानं घटवत् नित्यज्ञानत्वात् इत्यत्र साध्यनिरूपितविषयितासामान्यान्तर्गतप्रमेयत्वविशिष्टघटनिरूपितविषयितायां शुद्धघटत्वपर्याप्तावच्छेदकताकत्वाभावेन शुद्धघटत्वविशिष्टनिरूपितविषयितायाः अतिरिक्तायाः अस्वीकारेण तत्र हेत्वधिकरणानुयोगिकत्वाभावेन साध्यनिरूपितविषयितासंबन्धसामान्ये उभयाभावस्य सत्त्वात् घटाभावस्य लक्षणघटकत्वसंभवेन तत्राप्यव्याप्तिसंभवात् तदुपेक्षायां बीजाभावादिति भावः ।।

**तस्मादिति** । उक्तानुपपत्तिसद्भावात् वृत्त्यनियामकविषयितादिसंबन्धेन व्याप्तिर्नाङ्गीकरणीया । अतः तत्राव्याप्तिरिति शङ्कायाः नावसरः । तदर्थप्रयासो-



ऽप्यनावश्यकः । कालिकसंबन्धेन गगनादेः वृत्तिमत्त्वे तु घटवान् महाकालत्वात् इत्यादावव्याप्तिः । अतः कल्पान्तरमनुसरतीतिव्याख्यानमेव साधु इति भावः ।।

इतः परमनूद्यमानः **केचित्तु** इत्यादिग्रन्थः प्रायः पूर्वमनूदितपक्षान्नातिरिच्यते इति स्पष्टावगम्य एव । अथापि सौकर्याय विवृणोमि ।।

## गादाधरी

**केचित्तु – पूर्वकल्पे** प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वसाध्यतावच्छेदकविशिष्टप्रतियोगिकत्वहेतुमद्यत्किंचिद्व्यक्त्यनुयोगिकत्वैतत्त्रित्वावच्छिन्नाभावविवक्षणे घटवन्नित्यज्ञानत्वात् इत्यादौ नाव्याप्तिसंभवः । पटत्वादिविशिष्टनिरूपितायां ईश्वरज्ञानानुयोगिकविषयितायां साध्यतावच्छेदकघटत्वादिविशिष्टप्रतियोगिकत्वविरहात् उपदर्शितत्रित्वावच्छिन्नाभावसत्त्वेन पटत्वावच्छिन्नाभावस्यैव लक्षणघटकत्वात् ।।

## व्याख्या

**पूर्वकल्पे** – ''साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रति-योगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षित-त्वात्'' इति **दीधित्युक्तकल्पे** साध्यतावच्छेदकविशिष्टप्रतियोगिकत्वमन्तर्भाव्य– साध्यतावच्छेदकसंबन्धसामान्ये प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वसाध्यतावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वैतत्त्रित्वावच्छिन्नाभावविवक्षणे ईश्वरज्ञानं घटवत् नित्यज्ञानत्वात् इत्यादौ नाव्याप्तिः संभवति। पटाभावस्यैव तत्र लक्षणघटकत्वात् । पटत्वविशिष्टनिरूपितायां ईश्वरज्ञानानुयोगिकविषयितायां साध्यतावच्छेदकघटत्वविशिष्टप्रतियोगिकत्वाभावेन तत्प्रयुक्तस्य त्रित्वावच्छिन्नाभावस्य सत्त्वेन पटत्वावच्छिन्नाभावस्यैव लक्षणघटकतया तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके घटत्वे सत्त्वात् इति भावः ।।

## गादाधरी

**न च उक्तत्रित्वावच्छिन्नाभावविवक्षणे** ''महाकालो घटवान् महाकालत्वात्'' इत्यादौ पटत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यसंभवेन अव्याप्त्यप्रसक्त्या कल्पान्तरानुसरणासंगतिरिति वाच्यम् । **तथापि** महाकालः प्रमेयवान् महाकाल-परिमाणादित्यादौ प्रमेयत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिककालिकसंबन्धस्य घटत्वावच्छिन्नप्रतियोगिताकसंबन्धानतिरिक्ततया घटत्वपटत्वाद्यवच्छिन्नाभावे तादृशप्रतियोगिवैयधिकरण्यस्य दुर्घटत्वात् । न हि रूपभेदेन एकैकवस्तुन एव कालिकसंबन्धभेदः प्रामाणिकः । इदानीं प्रमेयः, इदानीं घटः इत्यादिप्रतीत्योः एकसंबन्धावगाहित्वे बाधकाभावात् ।।

तथा च यत्र कालिकसंबन्धेन घटत्वाद्यवच्छिन्नप्रतियोगिकत्वं तत्र मेयत्वावच्छिन्न-प्रतियोगिकत्वं महाकालानुयोगिकत्वं चेति न त्रित्वावच्छिन्नाभावः । घटत्वावच्छिन्न-विषयितातोऽन्यैव प्रमेयत्वावच्छिन्नविषयिता । तयोर्वैलक्षण्यमन्तरेण घट इत्यादिज्ञानानां प्रमेयइत्यादिज्ञानवैलक्षण्यानिर्वाहात् । अतः प्रमेयवान् ज्ञानत्वात् इत्यादौ घटत्वा-वच्छिन्नाभावस्य त्रित्वावच्छिन्नाभावघटितप्रतियोगिवैयधिकरण्यनिर्वाहः ।।

## व्याख्या

शङ्कते – **न चेति** । **उक्तत्रित्वावच्छिन्नाभावविवक्षणे** = साध्यतावच्छेदक-संबन्धसामान्ये प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वसाध्यतावच्छेदकविशिष्ट-प्रतियोगिकत्व हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वैतत्त्रित्वावच्छिन्नाभाव-विवक्षणे महाकालो घटवान् महाकालत्वात् इत्यत्र पटत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यं संभवति । पटत्वविशिष्टनिरूपितकालिकसंबन्धे साध्यतावच्छेदक-घटत्वविशिष्टघटप्रतियोगिकत्वाभावेन तत्प्रयुक्तत्रित्वावच्छिन्नाभावस्य सत्त्वात् । तथा च पटाभावस्य लक्षणघटकतया तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके घटत्वेऽ-



स्तीति नाव्याप्तिः । तथा च कल्पान्तरानुसरणं तत्राव्याप्तिवारणफलकमनावश्यक-मिति शङ्का ।।

तत्र समाधानमाह – **तथापीति** । महाकालो घटवान् महाकालत्वात् इत्यत्र उक्तरीत्या अव्याप्तिवारणेऽपि महाकालः प्रमेयवान् महाकालत्वात् इत्यत्राव्याप्तिर्दुर्वारा । तथाहि–प्रमेयत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिक-कालिकसंबन्धस्य घटत्वाद्य-वच्छिन्नप्रतियोगिककालिकसंबन्धाभिन्नतया साध्यतावच्छेदकसंबन्धसामान्यपदेन घटत्व-पटत्वाद्यवच्छिन्नप्रतियोगिककालिकसंबन्धग्रहणे तत्र लक्षणघटकत्वेनाभिमतघटत्वपटत्वाद्य-वच्छिन्नाभावप्रतियोगितावच्छेदकघटत्वपटत्वादिविशिष्टप्रतियोगिकत्वस्य साध्यतावच्छेदक-प्रमेयत्वविशिष्टप्रतियोगिकत्वस्य हेत्वधिकरणमहाकालानुयोगिकत्वत्रयस्य सत्त्वेन तदभावरूपप्रतियोगिवैयधिकरण्यस्य घटपटाद्याभावेऽसंभवात् तेषां लक्षणाघटकतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः । न च प्रमेयत्वघटत्वरूपधर्मभेदेन घटप्रतियो-गिककालिकसंबन्धोऽन्यः प्रमेयप्रतियोगिककालिकसंबन्धोऽन्यः, तथा च घटपटादि-प्रतियोगिककालिकसंबन्धे प्रमेयत्वरूपसाध्यतावच्छेदकविशिष्टसाध्यप्रतियोगिकत्वाभाव-प्रयुक्तम् उक्तत्रित्वावच्छिन्नाभावरूपं घटपटाद्यभावे प्रतियोगिवैयधिकरण्यं सुघटमिति वाच्यम् । प्रमेयत्वघटत्वादिरूपभेदेन घटपटादिप्रतियोगिककालिकसंबन्धे भेदस्या-प्रामाणिकत्वात् । तदाह – ''इदानीं प्रमेयः, इदानीं घट इत्यादिप्रतीत्योः एकसंबन्धा-वगाहित्वे बाधकाभावात्'' इति ।।

ईश्वरज्ञानं प्रमेयवत् नित्यज्ञानत्वात् इत्यत्र तु प्रतियोगितावच्छेदकधर्मभेदेन विषयिता भिद्यते । घटत्वावच्छिन्ननिरूपितविषयितातः प्रमेयत्वावच्छिन्ननिरूपिता विषयिता अन्या । तयोः वैलक्षण्यं विना घटः पटः इत्यादिज्ञानानां प्रमेय-इत्यादिज्ञानापेक्षया भेदस्य अनिर्वाहात् । अतस्तत्र घटत्वाद्यवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यं सुलभम् । घटत्वाद्यवच्छिन्ननिरूपितविषयितायां साध्यतावच्छेदक-

प्रमेयत्वविशिष्टनिरूपितत्वाभावेन तत्प्रयुक्तस्य उक्तत्रितयाभावस्य सुलभत्वात् त्रित्वावच्छिन्नाभाववत्साध्यतावच्छेदकसामान्यकत्वरूपस्य प्रतियोगिवैयधिकरण्यस्य सत्त्वात् इति भावः ।।

## गादाधरी

न च प्रमेयसाध्यकस्य व्याप्यवृत्तिसाध्यकतया तत्स्थले व्याप्तौ प्रतियोगिवैयधिकरण्याप्रवेशात् महाकालः प्रमेयवान् महाकालपरिमाणात् इत्यादौ नोक्ताप्रसिद्धिनिबन्धनाव्याप्त्यवकाशः । अत एवोक्तम्– ''**अव्याप्यवृत्ति किमपि व्यापकं न स्यात्**'' इति । तथा च कालिकविशेषणतया घटत्वावच्छिन्नसाध्यके दोषवारककल्पान्तरानुसरणं व्यर्थमिति वाच्यम् ।।

व्याप्यवृत्तिसाध्यकेऽपि साध्यस्याव्याप्यवृत्तित्वभ्रमदशायामनुमितिनिर्वाहाय प्रतियोगिवैयधिकरण्यविषयकव्याप्तिज्ञानहेतुतायाः स्वीकरणीयतया तत्रापि प्रतियोगिवैयधिकरण्यप्रवेशस्यावश्यकत्वात् । अन्यथा प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानस्य दुर्घटत्वात् । **अव्याप्यवृत्ति किमपि** इत्यादेः अव्याप्यवृत्तित्वेन ज्ञातं किमपि व्यापकं न स्यादित्यर्थः ।।

**वस्तुतस्तु** – एतत्क्षणान्यक्षणवृत्तित्वविशिष्टप्रमेयवान् कालपरिमाणात् इत्यादेरपि कालिकाव्याप्यवृत्तिसाध्यकतया तत्र प्रतियोगिवैयधिकरण्यनिवेशस्य आवश्यकतया तत्रैवाप्रसिद्धिनिवन्धनाव्याप्तिः कल्पान्तरानुसरणबीजमित्याहुः ।।

## व्याव्या

महाकालः प्रमेयवान् महाकालत्वात् इत्ययं व्याप्यवृत्तिप्रमेयसाध्यको हेतुः । तत्रत्यव्याप्तौ प्रतियोगिवैयधिकरण्यप्रवेश एव नास्तीति ''**नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके तत्**'' इति पूर्वमुक्तम् । अतस्तत्र घटाद्यभावमादाय समन्वयो भविष्यति इति शङ्का । व्याप्यवृत्तिसाध्येऽपि साध्ये अव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानमेव कारणमित्यपि पूर्वमुक्ततया तत्रापि प्रतियोगिवैयधिकरण्यज्ञानस्यावश्यकत्वात् इति भावः ।।



वास्तवाव्याप्यवृत्तिसाध्यकेऽपि प्रतियोगिवैयधिकरण्यं कस्याप्यभावस्य न संभवति उक्तकल्पे इत्याह–**वस्तुतस्तु** इति । कालः एतत्क्षणान्यक्षणवृत्तित्व-विशिष्टप्रमेयवान् कालपरिमाणात् इत्यत्र प्रतियोगिवैयधिकरण्याप्रसिद्ध्या अव्याप्तिः । अयम् अव्याप्यवृत्तिसाध्यकसद्धेतुः । महाकाले एतत्क्षणावच्छेदेन एतत्क्षणान्य-वृत्तित्वविशिष्टं प्रमेयं नास्ति । एतत्क्षणान्यक्षणावच्छेदेन एतत्क्षसणान्यवृत्तित्व-विशिष्टं प्रमेयमस्ति । अतोऽयं कालिकाव्याप्यवृत्तिसाध्यकसद्धेतुः । अतोऽत्र प्रतियोगिवैयधिकरण्यघटितैव व्याप्तिः वक्तव्या । पूर्वोक्तप्रतियोगिवैयधिकरण्यं तु कस्याप्यभावस्य न संभवति । अतोऽत्राव्याप्तिवारणाय कल्पान्तरानुस्मरणमिति-भावः । तथा हि — अत्र साध्याभावः प्रतियोगिसमानाधिकरण इति कृत्वा घटत्वाद्यवच्छिन्नाभावः ग्राह्यः । परं तु घटादिप्रतियोगिककालिकसंबन्धे पूर्वोक्तरीत्या घटत्वावच्छिन्नप्रतियोगिकत्वप्रमेयत्वविशिष्टघटप्रतियोगिकत्वहेत्वधिकरणमहाकालानुयोगिकत्वैतत्त्रितयस्य सत्त्वात् तदभावविरहात् । अतोऽप्रसिद्धिनिबन्धनाव्याप्तिरिति कल्पान्तरानुसरणमिति भावः ।।

## गादाधरी

**तच्चिन्त्यम्** । ईश्वरज्ञानानुयोगिकप्रमेयघटत्वावच्छिन्ननिरूपितविषयितायां साध्यतावच्छेदकसंबन्धसामान्यान्तर्गतायां साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य घटत्वावच्छिन्नप्रतियोगिकत्वस्य च सत्त्वेन प्रमेयवत् नित्यज्ञानत्वात् इत्यादावपि घटत्वावच्छिन्नाभावे प्रतियोगिवैयधिकरण्यस्य दुर्घटतया उक्तरीत्या वारणासंभवात् ।।

प्रमेयत्वविशिष्टनिरूपितत्वाभावेन तत्प्रयुक्तस्य उक्तत्रितयाभावस्य सुलभत्वात् त्रित्वावच्छिन्नाभाववत्साध्यतावच्छेदकसामान्यकत्वरूपस्य प्रतियोगिवैयधिकरण्यस्य सत्त्वात् इति भावः ।।

## गादाधरी

न च प्रमेयसाध्यकस्य व्याप्यवृत्तिसाध्यकतया तत्स्थले व्याप्तौ प्रतियोगिवैयधिकरण्याप्रवेशात् महाकालः प्रमेयवान् महाकालपरिमाणात् इत्यादौ नोक्ताप्रसिद्धिनिबन्धनाव्याप्त्यवकाशः । अत एवोक्तम्– ''**अव्याप्यवृत्ति किमपि व्यापकं न स्यात्**'' इति । तथा च कालिकविशेषणतया घटत्वावच्छिन्नसाध्यके दोषवारककल्पान्तरानुसरणं व्यर्थमिति वाच्यम् ।।

व्याप्यवृत्तिसाध्यकेऽपि साध्यस्याव्याप्यवृत्तित्वभ्रमदशायामनुमितिनिर्वाहाय प्रतियोगिवैयधिकरण्यविषयकव्याप्तिज्ञानहेतुतायाः स्वीकरणीयतया तत्रापि प्रतियोगिवैयधिकरण्यप्रवेशस्यावश्यकत्वात् । अन्यथा प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानस्य दुर्घटत्वात् । **अव्याप्यवृत्ति किमपि** इत्यादेः अव्याप्यवृत्तित्वेन ज्ञातं किमपि व्यापकं न स्यादित्यर्थः ।।

**वस्तुतस्तु** – एतत्क्षणान्यक्षणवृत्तित्वविशिष्टप्रमेयवान् कालपरिमाणात् इत्यादेरपि कालिकाव्याप्यवृत्तिसाध्यकतया तत्र प्रतियोगिवैयधिकरण्यनिवेशस्य आवश्यकतया तत्रैवाप्रसिद्धिनिवन्धनाव्याप्तिः कल्पान्तरानुसरणबीजमित्याहुः ।।

## व्याव्या

महाकालः प्रमेयवान् महाकालत्वात् इत्ययं व्याप्यवृत्तिप्रमेयसाध्यको हेतुः । तत्रत्यव्याप्तौ प्रतियोगिवैयधिकरण्यप्रवेश एव नास्तीति ''**नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके तत्**'' इति पूर्वमुक्तम् । अतस्तत्र घटाद्यभावमादाय समन्वयो



भविष्यति इति शङ्का । व्याप्यवृत्तिसाध्येऽपि साध्ये अव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानमेव कारणमित्यपि पूर्वमुक्ततया तत्रापि प्रतियोगिवैयधिकरण्यज्ञानस्यावश्यकत्वात् इति भावः ।।

वास्तवाव्याप्यवृत्तिसाध्यकेऽपि प्रतियोगिवैयधिकरण्यं कस्याप्यभावस्य न संभवति उक्तकल्पे इत्याह–**वस्तुतस्तु** इति । कालः एतत्क्षणान्यक्षणवृत्तित्व-विशिष्टप्रमेयवान् कालपरिमाणात् इत्यत्र प्रतियोगिवैयधिकरण्याप्रसिद्ध्या अव्याप्तिः । अयम् अव्याप्यवृत्तिसाध्यकसद्धेतुः । महाकाले एतत्क्षणावच्छेदेन एतत्क्षणान्य-वृत्तित्वविशिष्टं प्रमेयं नास्ति । एतत्क्षणान्यक्षणावच्छेदेन एतत्क्षसणान्यवृत्तित्व-विशिष्टं प्रमेयमस्ति । अतोऽयं कालिकाव्याप्यवृत्तिसाध्यकसद्धेतुः । अतोऽत्र प्रतियोगिवैयधिकरण्यघटितैव व्याप्तिः वक्तव्या । पूर्वोक्तप्रतियोगिवैयधिकरण्यं तु कस्याप्यभावस्य न संभवति । अतोऽत्राव्याप्तिवारणाय कल्पान्तरानुस्मरणमिति-भावः । तथा हि — अत्र साध्याभावः प्रतियोगिसमानाधिकरण इति कृत्वा घटत्वाद्यवच्छिन्नाभावः ग्राह्यः । परं तु घटादिप्रतियोगिककालिकसंबन्धे पूर्वोक्तरीत्या घटत्वावच्छिन्नप्रतियोगिकत्व-प्रमेयत्वविशिष्टघटप्रतियोगिकत्वहेत्वधिकरणमहाकालानुयोगिकत्वैतत्त्रितयस्य सत्त्वात् तदभावविरहात् । अतोऽप्रसिद्धिनिबन्धनाव्याप्तिरिति कल्पान्तरानुसरणमिति भावः ।।

## गादाधरी

**तच्चिन्त्यम्** । ईश्वरज्ञानानुयोगिकप्रमेयघटत्वावच्छिन्ननिरूपितविषयितायां साध्यतावच्छेदकसंबन्धसामान्यान्तर्गतायां साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य घटत्वावच्छिन्नप्रतियोगिकत्वस्य च सत्त्वेन प्रमेयवत् नित्यज्ञानत्वात् इत्यादावपि घटत्वावच्छिन्नाभावे प्रतियोगिवैयधिकरण्यस्य दुर्घटतया उक्तरीत्या वारणासंभवात् ।।

### व्याख्या

**केचित्तुकारैः** प्रमेयवन्नित्यज्ञानत्वादित्यादौ प्रतियोगिवैयधिकरण्यं कस्याप्यभावस्य नास्तीति वक्तुं न शक्यते । अतस्तत्र प्रतियोगिवैयधिकरण्याप्रसिद्धिर्न संभवति । कालो घटवान् इत्यादावेवाप्रसिद्धिः इति परिश्रमेण व्याख्यानं कृतम् । तत्खण्डनं **तच्चिन्त्यम्** इत्यादिना क्रियते । ईश्वरज्ञानं विषयितासंबन्धेन प्रमेयवत् नित्यज्ञानत्वात् इत्यत्रापि प्रतियोगिवैयधिकरण्याप्रसिद्धिः वक्तुं शक्यते । तथाहि–साध्यतावच्छेदकसंबन्धसामान्यान्तर्गतायां ईश्वरज्ञाननिष्ठप्रमेयघटत्वावच्छिन्ननिरूपितविषयितायां साध्यतावच्छेदकप्रमेयत्वावच्छिन्नप्रतियोगिकत्वस्य घटत्वावच्छिन्नप्रतियोगिकत्वस्य च सत्त्वेन घटत्वावच्छिन्नाभावे तदभावघटितप्रतियोगिवैयधिकरण्यस्य दुर्घटतया तत्रापि प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनाव्याप्तेः संभवात् तदुपेक्षायां बीजाभावात् इति भावः ।।

### गादाधरी

**न च** स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य त्रित्वावच्छिन्नाभावप्रतियोगितया विवक्षणात् प्रमेयघटत्वावच्छिन्ननिरूपितविषयितायां च घटत्वावच्छिन्नाभावप्रतियोगितावच्छेदकघटत्वादिना अनवच्छिन्नत्वात् तादृशविषयितायां उक्तत्रित्वावच्छिन्नाभावोऽक्षत एवेति वाच्यम् । **एवं सति** ईश्वरज्ञानस्य प्रमेयत्वादिसहितघटत्वावच्छिन्ननिरूपितविषयितामादायैव तस्य सर्वनिर्वाहे शुद्धघटत्वावच्छिन्ननिरूपितविषयितायाः तज्ज्ञाने अप्रामाणिकतया शुद्धघटत्वावच्छिन्नसाध्यके नित्यज्ञानत्वादिहेतौ शुद्धघटत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यसत्त्वेनाव्याप्तेः । ईश्वरज्ञानानुयोगिविषयितासामान्ये शुद्धघटत्वावच्छिन्नप्रतियोगिकत्वविरहेण त्रित्वावच्छिन्नाभावसत्त्वात् ।।

### व्याख्या

शङ्कते – **नचेत्यदिना** । साध्यतावच्छेदकसंबन्धसामान्ये स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व–साध्यतावच्छेदकविशिष्टसाध्यप्रतियोगिकत्वहेत्वधिकरण-



यत्किंचिद्व्यक्त्यनुयोगिकत्वैतत्त्रित्वावच्छिन्नाभावः विवक्षितः इति पूर्वमुक्तत्वात् ईश्वरज्ञाननिष्ठायां प्रमेयघटत्वावच्छिन्नविषयितायां च लक्षणघटको यो घटत्वावच्छिन्नाभावः तत्प्रतियोगितावच्छेदकघटत्वानवच्छिन्नत्वात् प्रतियोगितावच्छेदकावच्छिन्नत्वाभावप्रयुक्तत्रित्वावच्छिन्नाभावोऽक्षत एवेति घटाद्यभाव एव प्रतियोगिव्यधिकरणाभावः ईश्वरज्ञानं प्रमेयवत् नित्यज्ञानत्वात् इत्यत्र प्रसिद्ध इति शङ्का ।।

तत्समाधानं तु – **एवं सति** – ईश्वरज्ञाने प्रमेयघटत्वावच्छिन्ननिरूपितविषयितायाः स्वीकारे तयैव घटविषयकत्वस्यापि निर्वाहे शुद्धघटत्वावच्छिन्ननिरूपितविषयितायाः तदीयज्ञाने अप्रमाणिकतया ईश्वरज्ञानं शुद्धघटवत् नित्यज्ञानत्वात् इत्यत्र ईश्वरज्ञाननिष्ठविषयितायां साध्यताबच्छेदक – शुद्धघटत्वावच्छिन्न – प्रतियोगिकत्वाभावप्रयुक्तत्रित्वावच्छिन्नाभावस्य सत्त्वेन घटत्वावच्छिन्नाभावस्य उक्तत्रितयाभाववद्विषयिताकत्वरूपप्रतियोगिवैयधिकरण्याश्रयतया लक्षणघटकत्वेन तत्प्रतियोगितावच्छेदकमेव घटत्वरूपं साध्यतावच्छेदकमिति तत्राव्याप्तिप्रसङ्गात् इति भावः ।।

### गादाधरी

अस्तु वा ईश्वरज्ञानेऽपि शुद्धघटत्वावच्छिन्नविषयिता, तथापि घटत्वावच्छिन्नसाध्यके प्रमेयत्वसहितघटत्वेनैव यत् ज्ञानं तद्घटं विषयीकुरुते तादृशज्ञानमात्रवृत्तिहेतुकस्थलेऽव्याप्तेर्दुर्वारत्वात् । तद्घटविषयकेऽपि ज्ञाने तद्घटानधिकरणकालवच्छेदेन तद्घटाभावस्य सत्त्वात् तादृशाभावस्य च शुद्धघटत्वरूपप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वं तज्ज्ञानानुयोगिकविषयितायां नास्तीति तत्रोक्तत्रित्वावच्छिन्नभावसत्त्वेन प्रतियोगितावच्छेकविशिष्टप्रतियोगिव्यधिकरणत्वात् ।।

### व्याख्या

ईश्वरज्ञानेऽपि शुद्धघटत्वावच्छिन्ननिरूपितविषयिता अस्तु नाम । तथापि घटत्वावच्छिन्नसाध्यके प्रमेयत्वसहितघटत्वेनैव यत् ज्ञानं तद्घटं विषयीकरोति,

तादृशज्ञानमात्रवृत्तिहेतुकस्थले इदं ज्ञानं विषयितासंबन्धेन तद्घटवत् एतज्ज्ञानत्वात् इत्यत्र अव्याप्तिः दुर्वारा । हेत्वधिकरणे तद्घटविषयके ज्ञाने तद्घटानधिकरणकालावच्छेदेन विषयितासंबन्धेन तद्घटाभावस्य सत्त्वात् तज्ज्ञानानुयोगिकविषयितायां शुद्धघटत्वरूप-प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वं नास्तीति तत्प्रयुक्तत्रितयाभावसत्त्वेन प्रतियोगिव्यधिकरणत्वात् तादृशाभावस्य च लक्षणघटकतया तत्प्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदके तद्घटत्वेऽस्तीत्यव्याप्तेः प्रसङ्गात् । तथा च उक्तस्थलेऽप्यव्याप्तेः प्रसक्त्या कालिकसंवन्धेन घटादिसाध्यकस्थलेऽव्याप्त्या कल्पान्तरानुसरणमिति**दीधित्युक्तं** न संगच्छते । ततश्च वृत्त्यनियामकविषयितादि-संबन्धेन व्यापकत्वानभ्युपगन्तृणां तत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः अदोषतया कालिकसंबन्धेन गगनादेः वृत्तिमत्त्वमते तेन संबन्धेन घटादिसाध्यकमहाकालत्वादिहेतावव्याप्तिरेव कल्पान्तरानुसरणे बीजमिति स्थितम् ।।

## गादाधरी

**स्वरूपसंबन्धेन** कालिकविशेषणतासंबन्धेन । **निरुक्तप्रतियोग्यनधिकरणेति** । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणेनेत्यर्थः ।।

एवं च **स्वावच्छिन्न**त्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभाववत्**तादृश**-प्रतियोगितासामान्यको यो धर्मः तदवच्छिन्नसामानाधिकरण्यं तद्धर्मावच्छिन्नविधेय-कानुमित्यौपयिकव्याप्तिरिति पर्यवसितम् ।।

कालो घटवान् महाकालत्वात् इत्यादौ समवायादिना घटाद्यभावीयप्रतियोगितैव प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यनिरूपिका प्रसिद्धा । तादृश-प्रतियोगितासामान्ये कालिकसंबन्धावच्छिन्नत्वाभावादेव निरुक्तोभयाभाववत्त्वमक्षतमिति लक्षणसमन्वयः ।।



**धूमवान् वह्नेः इत्यादौ** संयोगादिना घटाद्यभावप्रतियोगितायां समवायादिना धूमाद्यभावप्रतियोगितायां च धूमत्वाद्यवच्छिन्नत्व–साध्यतावच्छेदकसंवन्धाबच्छिन्नत्वोभया-भावसत्त्वेऽपि साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्नाभावप्रतियोगिताया अपि निरुक्तप्रतियोगितासामान्यान्तर्गतत्वेन तत्रोभयाभावासत्त्वान्नातिव्याप्तिः ।।

**धूमादिसमानाधिकरणस्य** समवायादिना वह्न्याद्यभावस्य संयोगादिना घटाद्य-भावस्य च प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वतादृशधर्मावच्छिन्नत्वयो-रेकैकसत्त्वेऽपि एकैकाभावेन द्वित्वावच्छिन्नाभावसत्त्वाल्लक्षणसमन्बयः ।।

## व्याख्या

**स्वरूपसंबन्धेनेति** । कालिकविशेषणतासंबन्धेन गगनादेः वृत्तिमत्त्वे कालो घटवान् महाकालत्वात् इत्यादौ प्रतियोगिव्यधिकरणाप्ररिद्ध्या अव्याप्तिः । तथाहि– महाकालस्य कालिकसंबन्धेन सर्वाधारतया गगनस्यापि आधारो भवति । तथा च साध्यतावच्छेदककालिकसंबन्धेन गगनाभाव– घटाद्यभावप्रतियोगिनां गगनघटादीनां सर्वेषां हेत्वधिकरणभूतः कालः अधिकरणं भवतीति प्रतियोग्यनधिकरणहेत्वधिकरणा-प्रसिद्ध्या प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावाप्रसिद्ध्या अव्याप्तिः । अतः उभयाभावघटितैतल्लक्षणपरिष्कारारम्भ इति भावः । **स्वावच्छिन्ने**त्यत्र स्वपदं साध्यता-वच्छेदकपरम् । **तादृशपदं** प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधि-करण– हेत्वधिकरणवृत्त्यभावपरम् ।।

तथा च साध्यतावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभया-भाववती प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्न–प्रतियोग्यनधि-करणहेत्वधिकरणवृत्त्यभावनिरूपिता या या प्रतियोगिता तत्को यो धर्मः साध्यतावच्छेदक-रूपः तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति निष्कर्षः ।।

पर्वतो वह्निमान् धूमात् इत्यादौ प्रतियोगितावच्छेदकसंयोगसंबन्धे प्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नानधिकरणे हेत्वधिकरणे वर्तमानाः ये घटाद्यभावाः तन्निरूपितप्रतियोगितासु घटादिनिष्ठासु साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वाभावेन तत्प्रयुक्तोभयाभावः वर्तते तदवच्छिन्न (वह्नित्वावच्छिन्न) सामानाधिकरण्यं धूमेऽस्तीति लक्षणसमन्वयः ।।

कालो घटवान् महाकालत्वात् इत्यादौ प्रतियोगितावच्छेदकसमवायसंबन्धेन प्रतियोगिघटाद्यनधिकरणहेत्वधिकरणकालवृत्तिरभावः समवायेन घटाद्यभावः तन्निरूपितप्रतियोगितासामान्ये साध्यतावच्छेदकीभूतकालिकसंबन्धावच्छिन्नत्वाभावप्रयुक्तस्य उक्तोभयाभावस्य सत्त्वात् तमादाय लक्षणसमन्वयः ।।

सामान्यपदस्य प्रयोजनमाह – **धूमवान् वह्नेः इत्यादौ** इति । प्रतियोगितासामान्यक इत्यत्र सामान्यपदानुपादाने धूमवान् वह्नेरित्यत्र व्यभिचारिण्यतिव्याप्तिः स्यात् । तथा हि – तत्र प्रतियोग्यनधिकरणेत्यादिविशेषणाक्रान्तायां संयोगेन घटाद्यभावीयप्रतियोगितायां साध्यतावच्छेदकधूमत्वावच्छिन्नत्वाभावेन उभयाभावसत्त्वात्, तथा समवायेन धूमाभावप्रतियोगितायां साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नत्वाभावेन उभयाभावसत्त्वात् अतिव्याप्तिः स्यात् । अतः सामान्यपदम् । तदुक्तौ च संयोगसंबन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगिताया अपि सामान्यान्तर्गततया तत्र साध्यतावच्छेदकधर्मावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयस्यैव सत्त्वात् तदुभयाभावो नास्तीति नातिव्याप्तिः इति भावः ।।

अन्यतराभावमनिवेश्य उभयाभावनिवेशस्य प्रयोजनमाह–**धूमादिसमानाधिकरणस्येति** । वह्निमान् धूमात् इत्यादौ धूमसमानाधिकरणसमवायसंबन्धावच्छिन्नवह्न्यभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वसत्त्वात्, एवं धूमसमानाधिकरणसंयोगसंबन्धावच्छिन्नघटाभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वसत्त्वात् तादृशान्यतराभावो नास्तीत्यव्याप्तिः स्यात् । अत उभयाभावनिवेशः । तथा सति



तादृशप्रतियोगितयोः उभयाभावोऽस्तीति नाव्याप्तिरिति भावः । उभयोः मध्ये एकस्य सत्त्वे अन्यतराभावो न संभवति । उभयाभावस्तु भवतीति रहस्यम् ।।

## गादाधरी

**यद्यपि** तादृशाभावीयसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमात्रस्याभावनिवेशेऽपि सामञ्जस्यम् । इदं वाच्यं ज्ञेयत्वात् इत्यादौ वाच्यत्वत्वाच्छिन्नभेदादिप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य विरहमादाय प्रमेयसामान्यसाध्यके संयोगेन जन्यत्वविशिष्टघटादिहेतौ साध्यतावच्छेदकावच्छिन्नभेदस्य संयोगसमवायकालिकविशेषणतासंबन्धावच्छिन्नतदवच्छिन्नाभावस्य च हेतुमत्यसंभवेऽपि विषयितासंबन्धावच्छिन्नतदवच्छिन्नाभावस्य ईश्वरमात्रवृत्तिहेतौ च संयोगसंबन्धावच्छिन्नतदवच्छिन्नाभावस्य तद्वति प्रसिद्ध्या तदीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायां उक्तसंबन्धावच्छिन्नत्वस्य विरहमादाय लक्षणसमन्वयसंभवात्–

## व्याख्या

शङ्कते–**यद्यपीति** । प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकावच्छिन्नाभावप्रतियोगितासामान्ये साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमात्रस्याभावनिवेशेऽपि वह्निमान् धूमात् इत्यादौ नाव्याप्तिः । समवायादिसंबन्धावच्छिन्नवह्न्यभावप्रतियोगिताया एव तथात्वात् तस्यां च साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नत्वाभावेन लक्षणसमन्वयात् । धूमवान् वह्नेरित्यादौ तादृशप्रतियोगितासामान्यान्तर्गतधूमत्वावच्छिन्नसंयोगसंवन्धावच्छिन्नप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वसत्त्वेन तदभावविरहान्नातिव्याप्तिः । कालो घटवान् महाकालत्वादित्यत्रापि कालिकेतरसमवायादिसंवन्धावच्छिन्नप्रतियोगिताया एव धर्तुं शक्यतया तत्र साध्यतावच्छेदककालिकसंबन्धावच्छिन्नत्वाभावसत्त्वेन अव्याप्त्यभावात् । न च इदं

वाच्यं ज्ञेयत्वात् इत्यादौ केवलान्वयिसाध्यके सद्धेतौ साध्यतावच्छेदकवाच्यत्वत्वावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या अव्याप्तिरिति वाच्यम् । तत्र वाच्यत्वं न इत्याकारकप्रतीतिसिद्धा या वाच्यत्वत्वावच्छिन्नभेदप्रतियोगिता तस्यां साध्यतावच्छेदकस्वरूपसंबन्धावच्छिन्नत्वाभावमादाय लक्षणसंभवात् । न चैवमपि प्रमेयसामान्यसाध्यके संयोगसंबन्धेन जन्यत्वविशिष्टघटादिहेतौ हेतुमति प्रमेयत्वावच्छिन्नभेदस्यापि असंभवात् संयोगसमवायकालिकादिसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य चासंभवात् कथं समन्वय इति वाच्यम् । तत्र हेत्वधिकरणे भूतलादौ विषयितासंबन्धेन प्रमेयसामान्याभावस्य सत्त्वेन तदीयप्रतियोगितायां साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नत्वाभावेन समन्वयसंभवात् ।।

न चैवमपि इदं ज्ञानं विषयितासंबन्धेन प्रमेयवत् ज्ञानत्वात् इत्यत्र कथं समन्वय इति वाच्यम् । तत्र हेत्वधिकरणज्ञानवृत्तिरभावः संयोगसंबन्धावच्छिन्नप्रमेयसामान्याभावः तन्निरूपितप्रतियोगितायां साध्यतावच्छेदकविषयितासंबन्धावच्छिन्नत्वाभावात् लक्षणसमन्वयसंभवात् ।।

तथाच प्रतियोगितासामान्ये साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभावमात्रनिवेशेनैव सामञ्जस्ये साध्यतावच्छेदकसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभावनिवेशः कुत इति **यद्यपि** इत्यादिना आक्षेपः ।।

## गादाधरी

**तथापि** हेतुमति सर्वैरेव संबन्धैः साध्यं वर्तते, न तु कस्यामपि तादृशाभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वमिति भ्रमदशायामपि अनुमितेरानुभाविकतया तदानीं च साध्यतावच्छेदकावच्छिन्नत्वेन तादृशाभावप्रतियोगित्वज्ञानासंभवात् तावद्विशेषितप्रतियोगिताधर्मिकसंबन्धविशेषावच्छिन्नत्वाभावज्ञानस्यानुमितिहेतुता न संभवतीत्युभयाभावानुसरणम् ।।



**वस्तुतस्तु – अभावज्ञानज्ञानत्वा**न्यतमवान् योगिज्ञानत्वात् इत्यादौ वस्त्वव्याप्तिर्वाच्या । तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वाप्रसिद्धेः ।।

एवं निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितासामान्ये निरुक्तधर्मावच्छिन्नत्वाभावनिवेशे **कालो घटवान्** इत्यादावव्याप्तेरपरिहारो बोध्य इति ।।

## व्याख्या

पूर्वोक्ताक्षेपस्य समाधानमाह–**तथापी**त्यादिना । यत्र किंचित्साध्यकसद्धेतौ हेतुमति सर्वैरपि संबन्धैः साध्यं वर्तते, न तु कस्यामपि हेतुमन्निष्ठाभावप्रतियोगितायां प्रकृतसाध्यतावच्छेदकावच्छिन्नत्वमिति भ्रमकालेऽप्यनुमितिः आनुभाविकी । कुत इति चेत्–तस्य पुंसः हेतुमति केनापि संबन्धेन साध्यस्याभावो नास्तीति ज्ञानावश्यंभावात् साध्ये हेतुव्यापकत्वस्यैव ग्रहात्, तदानीं तादृशपुंसः अनुमित्युपपादनमावश्यकम् । तदनुरोधेन कारणीभूतव्याप्तिज्ञानं वक्तव्यम् । तच्च हेतुमन्निष्ठाभावीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताधर्मिकसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभावविषयकं वक्तव्यम् । हेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वांशभानं प्रति कस्यामपि हेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वं नास्तीति तत्पुरुषीयज्ञानस्य प्रतिबन्धकतया तादृशव्याप्तिज्ञानासंभवात् पूर्वोक्तरीत्या उभयाभावनिवेशः । तन्निवेशे च प्रकृतसाध्यस्याभावः हेतुमति नास्तीति ग्रहकालेऽपि साध्याभिन्नोदासीनपदार्थाभावे हेतुमद्वृत्तित्वग्रहस्य, तादृशाभवप्रतियोगितायां च प्रकृतसाध्यतावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावग्रहस्य च संभवात् न दोषः ।।

वस्त्वव्याप्तिमप्याह – **वस्तुतस्तु अभावज्ञानज्ञानत्वेति** । योगिपदं कालिकसंबन्धेन साध्यशून्यनित्यज्ञानव्यावृत्त्यर्थम् । अत्र हेत्वधिकरणयोगिज्ञाने समानाधिकरण-

कालिकस्वरूप विषयित्वादिसंबन्धैः अन्यतमाभावो न संभवति, स्वरूपसंबन्धेनाभावो वर्तते, समवायसंबन्धेन ज्ञानत्वं वर्तते, विषयितासंवन्धेन च अभावादिकं वर्तते, कालिकसंबन्धेन च तथा । संयोगादिव्यधिकरणसंबन्धस्य तु तेन संबन्धेन प्रतियोग्यधिकरणाप्रसिद्ध्या उक्ताभावप्रतियोगितावच्छेदकत्वं न भवतीति भावः ।।

भवत्वेवम्, तथापि निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकधर्मावच्छिन्नत्वाभावो निवेश्यः । तथा सति पूर्वोक्तस्थले अभावज्ञानज्ञानत्वान्यतमवान् योगिज्ञानत्वात् इत्यत्र योगिज्ञाने विद्यमानो यः समवायादिना घटाद्यभावः तत्र अन्यतमत्वरूपसाध्यतावच्छेदकावच्छिन्नाभावसत्त्वेन अव्याप्त्यभावात् इत्यत आह–**कालो घटवानिति** । काले सर्वपदार्थानां कालिकसंवन्धेन सत्त्वात् कालवृत्तिकालिकसंबन्धावच्छिन्नाभावाप्रसिद्ध्या तादृशप्रतियोगित्वाप्रसिद्धिरिति उभयाभाव एव निवेशितः ।।

## दीधितिः

**समवाय**संबन्धेन प्रमेयसामान्याभावस्य सामान्यादौ सत्त्वात् प्रमेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वम् ।।

## गादाधरी

प्रमेयत्वावच्छिन्नसाध्यकस्थले साध्यतावच्छेदकावच्छिन्नाभावाप्रसिद्ध्या तदवच्छिन्नत्वमप्यसिद्धमिति शङ्कां परिहरति–**समवायेति** । **यद्यपि** विषयितादावपि तदवच्छिन्नत्वप्रसिद्धिसंभवः, **तथापि** विषयितादिनिष्ठतत्प्रकारकत्वादिरूपतदवच्छेद्यतायाः प्रतियोगितानिष्ठायाः अन्यूनानतिरिक्तवृत्त्यगुरुधर्मनिरूपितविलक्षणावच्छेद्यतायाश्च एकजातीयत्वस्य अप्रामाणिकत्वेनातिव्याप्तिभयेन प्रतियोगितायां यादृशम् अवच्छिन्नत्वं तस्यैव लक्षणे निवेशः कार्यः इत्यभिप्रायेण तादृशावच्छिन्नत्वस्यैव प्रसिद्धिर्दर्शिता । **अन्यत् स्वयमूह्यम्** ।।



## व्याख्या

प्रमेयवान् धूमात् इत्यादौ सर्वत्र यत्किंचित्प्रमेयस्य सत्त्वात् प्रमेयत्वावच्छिन्नाभावः कथं प्रसिद्धः स्यात् इति शङ्का । प्रमेयस्य स्वरूपसंबन्धेन सर्वत्र सत्त्वेऽपि समवायेन प्रमेयाभावस्य सामान्यादौ सत्त्वात् तत्प्रतियोगितामादाय समन्वय इति भावः ।।

ननु प्रमेयत्वावच्छिन्नत्वस्य प्रसिद्धिः भाव्या चेत् अभावानुधावनं किमर्थम् । अभावानुधावनं विनापि प्रमेयमिति ज्ञानीयविषयितायामपि प्रमेयत्वावच्छिन्नत्वस्य सत्त्वात् इति शङ्कते–**यद्यपीति** । समाधत्ते–**तथापीति** । अयमाशयः – विषयितानिष्ठं प्रमेयत्वावच्छिन्नत्वं प्रयेयत्वनिष्ठप्रकारतानिरूपितत्वरूपम्, अभावप्रतियोगितानिष्ठम् अवच्छिन्नत्वं च अन्यूनानतिरिक्तागुरुलघुधर्मनिरूपितं बिलक्षणम् । उभयोरेकधर्मावच्छिन्नत्वाभावे प्रतियोगितानिष्ठविलक्षणावच्छेद्यत्वाभाव एव प्रकृते निवेश्यः । अन्यथा धूमाभावनिरूपितप्रतियोगितायामपि विषयितानिष्ठावच्छेद्यत्वाभावेन धूमवान् वह्नेः इत्यत्रातिव्याप्तिः स्यात् । एवं च प्रमेयत्वावच्छिन्नसाध्यकस्थले पूर्वोक्तरीत्या अप्रसिद्धिशङ्का युक्तैव । तत्समाधानार्थं समवायादिना अभावप्रतियोगितायामवच्छिन्नत्वप्रसिद्धिः **दीधितिकारेण** प्रदर्शितेति भावः ।।

**अन्यत् स्वयमूह्यमिति** । अत्र परिष्कारे यदवच्छिन्नेत्यनुक्त्वा यद्धर्मावच्छिन्नेति कथनं धर्मविधया अवच्छेदकत्वनिवेशाय । अन्यथा समवायेन संयोगिनः साध्यतायां समवायेन संयोगिमान् पृथिवीत्वात् इत्यादौ समवायेन संयोग्यभावप्रतियोगितायां संबन्धविधया साध्यतावच्छेदकावच्छेद्यत्वसमवायावच्छेद्य-त्वोभयसत्त्वादव्याप्तिः । एवं यत्संबन्धेत्यत्रापि संबन्धविधया अवच्छेदकत्वलाभाय संबन्धपदम् । तेन संयोगिनः संयोगेन साध्यतायां समवायेन संयोगिनो योऽभावः तत्प्रतियोगितायां धर्मविधया संयोगावच्छेद्यत्वसमवायावच्छेद्यत्वोभयसत्त्वेन अव्याप्तेः नावकाशः इत्यादिकमूह्यमित्यर्थः ।।

## दीधितिः

**अत एव** समवायस्य **एकत्वेन** द्रव्यत्वादिप्रतियोगिकत्वगुणाद्यनुयोगिकत्व-**उभयवत्त्वेऽपि द्रव्यं जातेः इत्यादौ** वह्निधूमोभयवान् वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि च **नातिव्याप्तिरिति** वदन्ति ।।

## गादाधरी

**पूर्वकल्पे** दोषान्तरमपि दर्शयति–**अत एवेति** । पूर्वकल्पं परित्यज्य एतत्कल्पावलम्बनादेवेत्यर्थः । समवायस्योभयवत्त्वे हेतुः **एकत्वेनेति** । **उभयवत्त्वे**ऽपि इत्यनेन द्रव्यत्वाभावे हेत्वधिकरणगुणादौ उभयाभावघटितप्रतियोगिवैयधिकरण्यासंभवः सूचितः। **द्रव्यं जाते**रित्यादाविति । **नातिव्याप्तिरिति** अग्रिमेणान्वयः ।।

## व्याख्या

**पूर्वकल्प** इति । साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्वृत्त्यनुयोगिकत्वोभयाभावः प्रतियोगिवैयधिकरण्यमितिकल्पे समवायस्य एकत्वपक्षे इदं द्रव्यं जातेः इत्यत्र व्यभिचारिणि हेत्वधिकरणगुणादौ द्रव्यत्वाभावसत्त्वेऽपि गुणानुयोगिकसमवायस्य द्रव्यानुयोगिकसमवायस्य च एकत्वेन साध्यतावच्छेदकसमवायसंबन्धे द्रव्यत्वाभावप्रतियोगिद्रव्यत्वप्रतियोगिकत्व–हेतुभूतजात्यधिकरणीभूतगुणानुयोगिकत्वोभयसत्त्वेन तदुभयाभावविरहात् द्रव्यत्वाभावे तदुभयाभावरूपप्रतियोगिवैयधिकरण्याभावेन लक्षणाघयटकतया अभावान्तरमादायातिव्याप्तिः स्यात् ।।

अत्र कल्पे तु – द्रव्यत्वाभावोऽपि लक्षणघटकः । तत्प्रतियोगिद्रव्यत्वा- नधिकरणं यत् हेतुभूतजात्यधिकरणं गुणः तद्वृत्तिर्योऽभावः द्रव्यत्वाभावः तन्निरूपितायां द्रव्यत्वनिष्ठप्रतियोगितायां साध्यतावच्छेदकद्रव्यत्वत्व–साध्यता वच्छेदकसमवायसंबन्धावच्छिन्नत्वोभयमेवास्ति न तु उभयाभाव इति नातिव्याप्तिः । स्पष्टमन्यत् ।।



## गादाधरी

**यद्यपि** प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वं प्रतियोगिनिरूपिततादृशसंबन्धाननुयोगित्वम्, अधिकरणतानिवेशे तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तेः । तथा च समवायैक्यपक्षे गुणादेरपि द्रव्यत्वप्रतियोगिकसमवायानुयोगिता निष्प्रत्यूहैवेति एतत्कल्पेऽपि समवायेन द्रव्यत्वाभावस्य लक्षणघटकत्वानिर्वाहः ।।

**तथापि स्वप्रतियोगि**प्रतियोगिकत्वविशिष्टतादृशसंबन्धनिरूपितविलक्षणानुयोगिताया एव निवेशनीयतया गुणादिनिष्ठसमवायानुयोगितायाश्च **द्रव्यत्वीयत्वविशिष्टानिरूपितत्वेन** न दोषः ।।

## व्याख्या

**यद्यपीत्यादि** । अत्र कल्पेऽपि प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगितासामान्ये साध्यतावच्छेदकधर्मावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावनिवेशकल्पेऽपि वृत्त्यनियामकतादात्म्यसंबन्धेन साध्यतास्थलानुरोधेन प्रतियोग्यनधिकरणत्वं प्रतियोगिनिरूपितप्रतियोगितावच्छेदकसंबन्धाननुयोगित्वरूपं विवक्षणीयम् । तथा च समवायैक्यपक्षे एतत्कल्पेऽपि "द्रव्यं जातेः" इत्यादिव्यभिचारिणि गुणादिनिष्ठस्य द्रव्यत्वाभावस्य लक्षणघटकत्वं न संभवति । गुणत्वादिप्रतियोगिकसमवायानुयोगिनि गुणादौ द्रव्यत्वप्रतियोगिकसमवायानुयोगिताया आवश्यकतया गुणादिनिष्ठस्य द्रव्यत्वाभावस्य स्वप्रतियोगिद्रव्यत्वप्रतियोगिकसमवायानुयोगिगुणनिष्ठतया तदननुयोगिगुणनिष्ठत्वरूपप्रतियोगिव्यधिकरणत्वाभावेन लक्षणाघटकतया अभावान्तरस्य ग्रहणे तदीयप्रतियोगितायां साध्यतावच्छेदकद्रव्यत्वत्वावच्छिन्नत्वाभावेन तत्प्रयुक्तोभयाभावस्य सत्त्वात् अतिव्याप्तिः दुर्वारिति शङ्का ।।

तत्र समाधत्ते–**तथापीत्यादिना** । **स्वप्रतियोगीति** । लक्षणघटकाभावप्रतियोगीत्यर्थः। समवायस्य एकत्वेऽपि गुणो द्रव्यमिति प्रतीत्यनुत्पत्त्या, गुणे द्रव्यत्वप्रतियोगिकत्व-

विशिष्टसमवायानुयोगितायाः अभावात् गुणः द्रव्यत्वप्रतियोगिकत्वविशिष्टसमवायाननुयोगिरूपं प्रतियोग्यनधिकरणं भवति । तद्वृत्तित्वात् द्रव्यत्वाभावोऽपि लक्षणघटकः । तदीयप्रतियोगितायां द्रव्यत्वत्वावच्छिन्नत्वसमवायसंबन्धावच्छिन्नत्वोभयमेवास्तीति नातिव्याप्तिः ''द्रव्यं जातेः'' इत्यत्रेति भावः । **द्रव्यत्वीयत्वविशिष्टानिरूपितत्वेनेति** – द्रव्यत्वप्रतियोगिकत्वविशिष्टानिरूपितत्वेन ।।

## गादाधरी

**वस्तुतः** प्रतियोगितावच्छेदकसंबन्धेन **प्रतियोगितावच्छेदकविशिष्ट**-प्रतियोग्यवच्छिन्नभेदः हेतुमद्विशेषणम् । एवं च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वविशिष्टसंबन्धानुयोगिन्येव भेदाभ्युपगमात् समवायैक्यमतेऽपि समवायेन द्रव्यत्वावच्छिन्नभेदस्य गुणादावक्षतत्वात् द्रव्यत्वाद्यभावस्य गुणादौ समवायेन प्रतियोगिवैयधिकरण्यमव्याहतमेवेति ।।

## व्याख्या

इदं द्रव्यं जातेः इत्यत्र पूर्वोक्तरीत्या प्रसक्तायाः अतिव्याप्तेः वारणाय लघुभूतं कल्पान्तरमाह–**वस्तुत** इत्यादिना । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणेत्यत्र प्रतियोग्यनधिकरणत्वस्थाने लाघवात् प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यवच्छिन्नभेदो निवेशनीयः । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनिष्ठावच्छेदकताकभेद इति यावत् । तृतीयायाः अवच्छिन्नत्वमर्थः । तस्य प्रतियोगिनिष्ठावच्छेदकतायामन्वयः। तथाच प्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगिनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत् यत् हेत्वधिकरणं तन्निष्ठाभावीयप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वयत्संबन्धावच्छिन्नत्वोभयाभावः तद्धर्मावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इति पर्यवसितम् ।।

वह्निमान् धूमात् इत्यादौ संयोगेन घटाद्यभावो लक्षणघटकः । स च संयोगसंबन्धावच्छिन्नघटनिष्ठावच्छेदकताकप्रतियोगिताकः भेदः संयोगेन घटवान्नेत्याकारकः तद्वत्



धूमाधिकरणपर्वतादि तद्वृत्तित्वात् तस्याभावस्य तदीयप्रतियोगितायां साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वाभावप्रयुक्तोभयाभावस्य सत्त्वात् लक्षणसन्वयः ।।

द्रव्यं जातेः इत्यत्र समवायैक्यमतेऽपि हेत्वधिकरणे गुणे समवायेन द्रव्यत्ववान्नेति भेदस्य सत्त्वात् समवायसंबन्धावच्छिन्नद्रव्यत्वनिष्ठावच्छेदकभेदवान् गुणः तद्वृत्तिः द्रव्यत्वाभावो भवतीति तदीयप्रतियोगितायां द्रव्यत्वत्वरूपसाध्यतावच्छेदकावच्छिन्नत्वसमवायरूपसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयमेवास्तीति नातिव्याप्तिरिति भावः ।।

**प्रतियोगितावच्छेदकविशिष्टेति** । लक्षणघटकीभूतद्रव्यत्वाभावप्रतियोगितावच्छेदकं यत् द्रव्यत्वत्वं तद्विशिष्टद्रव्यत्वप्रतियोगिकत्वविशिष्टसमवायानुयोगिभिन्ने गुणादावेव समवायेन द्रव्यत्ववान्नेति प्रतीतिसिद्धभेदस्य अङ्गीकारात् इत्यर्थः ।।

## गादाधरी

**इदमत्रावधेयम्** – समवायकालिकविशेषणताद्युभयसंबन्धेन यत्र द्रव्यत्वादेः साध्यता केवलसमवायेन द्रव्यत्वादेः हेतुता तत्र साध्यतावच्छेदकसंबन्ध-सामान्यान्तर्गतगगनानुयोगिकसमवायादौ उक्तोभयाभावासत्त्वेन अतिव्याप्तिः समवायभेदमतेऽपि दुर्वारा। साध्यतावच्छेदकसंबन्धतावच्छेदकरूपविशिष्टनिरूपितानुयोगितासामान्ये निरुक्तप्रतियोगिप्रतियोगिकसंबन्धनिरूपितत्वस्थाने निरुक्तप्रतियोगिप्रतियोगिकत्वविशिष्टसंबन्धनिरूपितत्वनिवेशेन द्रव्यं जातेरित्यादावतिव्याप्तिः शक्यते वारयितुमित्युक्तमिति ।।

## व्याख्या

अथ **दीधितिकारोक्त**द्वितीयकल्पारम्भबीजं दूषयति–**इदमत्रावधेयमिति** । घटः समवायकालिकविशेषणत्वोभयसंबन्धेन द्रव्यत्ववान् केवलसमवायेन द्रव्यत्वात् इत्यनुमानम् । अयं हेतुः व्यभिचारी । समवायकालिकोभयसंबन्धेन द्रव्यत्वाभाववति नित्यद्रव्ये आकाशादौ केवलसमवायेन द्रव्यत्वसत्त्वात् । अत्र साध्यतावच्छे-

दकसंबन्धसामान्यान्तर्गते गगनानुयोगिकसमवाये द्रव्यत्वाभावप्रतियोगिद्रव्यत्वप्रतियोगिकत्वहेत्वधिकरणाकाशानुयोगिकत्वोभयसत्त्वेन तदुभयाभाववत्साध्यतावच्छेदकसंबन्धानुयोगिकत्वरूपप्रतियोगिवैयधिकरण्याभावात् द्रव्यत्वाभावस्य लक्षणघटकत्वाभावेन अभावान्तरमादायातिव्याप्तिः स्यात् । तद्वारणाय पूर्वकल्पे साध्यतावच्छेदकसंबन्धतावच्छेदकधर्मविशिष्टनिरूपितानुयोगितासामान्ये निरुक्तप्रतियोगिप्रतियोगिकसंबन्धनिरूपितत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठत्वोभयाभावो विवक्षणीयः । तथा सति उक्तस्थले यत् साध्यतावच्छेदकसंबन्धतावच्छेदकं समवायकालिकविशेषणत्वोभयत्वं तद्विशिष्टनिरूपितानुयोगितायां (नित्येषु कालिकायोगात्) हेत्वधिकरणगगननिष्ठत्वाभावेन उभयाभावसत्त्वात् द्रव्यत्वाभावस्य लक्षणघटकतया नातिव्याप्तिः । तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके द्रव्यत्वत्वे सत्त्वात् । एवं च इदं द्रव्यं जातेरित्यत्रापि निरुक्तप्रतियोगिप्रतियोगिकत्वविशिष्टसंबन्धनिरूपितत्वस्य निरुक्तप्रतियोगिप्रतियोगिकसंबन्धनिरूपितत्वस्थाने निवेशेन द्रव्यं जातेरित्यत्रापि गुणे द्रव्यत्वप्रतियोगिकत्वविशिष्टसमवायानुयोगिताविरहेण गुणनिष्ठानुयोगितायां हेतुभूतजात्यधिकरणयत्किंचिद्व्यक्तिरूपगुणनिष्ठसत्त्वेऽपि द्रव्यत्वप्रतियोगिकत्वविशिष्टसमवायनिरूपितत्वविरहेण तत्प्रयुक्तोभयाभावसत्त्वात् द्रव्यत्वाभावस्यापि लक्षणघटकतया तत्प्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदके द्रव्यत्वत्वेऽस्तीति नातिव्याप्तिः । ततश्च तत्रातिव्याप्तिवारणं द्वितीयकल्पारम्भस्य प्रयोजनमिति **दीधित्युक्तं** न संगच्छते । पूर्वकल्पेऽपि उक्तरीत्या परिष्कारे द्रव्यं जातेः इत्यत्रातिव्याप्तिवारणसंभवादिति **भट्टाचार्याणाम्** आशयः ।।

## गादाधरी

**इदं त्ववधेयम्** – स्वसमवायिसंयोगादिसंबन्धेन यत्र लौहित्यादेः साध्यता तत्र सद्धतौ एतत्स्फटिकत्वादौ उभयाभावघटितप्रतियोगिवैयधिकरण्यनिवेशपक्षे



स्फटिकाद्यनुयोगिकजपादिसंयोगे लौहित्यादिनिरूपितपरंपरासंबन्धघटके साक्षात् लौहित्यप्रतियोगिकत्वाभावेन हेतुमन्निष्ठसाध्याभावे प्रतियोगिवैयधिकरण्यं दुर्वारम् । साक्षात्परम्परासंबन्धघटकसाधारणं तत्प्रतियोगिप्रतियोगिकत्वं चानुगतं दुर्वचम् । तादृशस्य तस्य निवेशे अयोगोलकाद्यनुयोगिकवह्निसंयोगादेरपि धूमादेः परम्परासंबन्धघटकत्वसंभवेन धूमादिप्रतियोगिकतया तन्निष्ठधूमाद्यभावेऽपि प्रतियोगिवैयधिकरण्यानुपपत्तेः ।।

## व्याख्या

इदानीं **भट्टाचार्यः** स्वयं द्वितीयकल्पावतरणे बीजमाह–**इदं त्ववधेयमिति** । अयं स्फटिकः स्वसमवायिसंयोगेन लौहित्यवान् एतत्स्फटिकत्वात् इत्यत्र सद्धेतौ पूर्वकल्पे अव्याप्तिः । अयं स्फटिकः जपाकुसुमसंयुक्तो यदा भवति, तदा जपाकुसुमगतरक्तत्वं तत्र प्रतिभाति । स्वं–जपाकुसुमगतं रक्तत्वम्, तत्समवायि जपाकुसुमं, तत्संयोगः स्फटिके । तथा च तत्र स्वसमवायिसंयोगसंबन्धेन रक्तत्वमस्ति । अत्र साध्यतावच्छेदकसंबन्धे स्वसमवायिसंयोगे साक्षात् लौहित्यप्रतियोगिकत्वं नास्ति । किंतु लौहित्याश्रयजपाकुसुमप्रतियोगिकत्वमेवास्ति । तथा च साध्याभावे लौहित्याभावे स्वप्रतियोगिप्रतियोगिकत्वाभावप्रयुक्तोभयाभाववत्साध्यतावच्छेदकसंबन्धानुयोगिकत्वरूपप्रतियोगिवैयधिकरण्यसत्त्वेन हेत्वधिकरणस्फटिकवृत्तित्वेन च साध्याभावस्य–लौहित्याभावस्य लक्षणघटकतया तत्प्रतियोगित्वमेव साध्ये लौहित्येऽस्ति, न तु तदप्रतियोगित्वमित्यव्याप्तिः इति भावः ।।

न च साक्षात्परंपरासाधारणं स्वप्रतियोगिप्रतियोगिकत्वं निवेश्यते । तथा च स्वसमवायिसंयोगे लौहित्यप्रतियोगिकत्वमस्तीति न तदभावप्रयुक्तोभयाभाव इति वाच्यम् । साक्षात्परंपरासाधारणस्य स्वप्रतियोगिप्रतियोगिकत्वस्य दुर्वचत्वात् ।।

यदि च तत्प्रतियोगिकत्वं तत्प्रकारकप्रमीयसांसर्गिकविषयताश्रयत्वरूपं सुवचमित्युच्यते, तदा तादृशप्रतियोगिकत्वनिवेशे धूमवान् वह्निरित्यत्र अयोगोलकानु-

योगिकवह्निसंयोगे धूमजनकवह्निप्रतियोगिकत्वरूपपरंपरासंबन्धे धूमप्रकारकप्रमीयसांसर्गिकविषयताश्रयत्वसत्त्वेन धूमप्रतियोगिकत्वात् धूमाभावस्यापि प्रतियोगिवैयधिकरण्यं नास्तीति लक्षणघटकता न स्यात् इति भावः ।।

## गादाधरी

**न च तादृश**संयोगे संयोगत्वपुरस्कारेण साक्षात् लौहित्यप्रतियोगिकत्वविरहेऽपि साध्यतावच्छेदकसंबन्धतावच्छेदकस्वसमवायिसंयोगत्वपुरस्कारेण तत्प्रतियोगिकत्वं स्वीक्रियत इति वाच्यम् । **मानाभावात्** । समवायस्य तत्प्रतियोगितयैव तद्घटितपरंपरायाः संबन्धत्वोपपत्तेः । **किंचिद्रूपेणापि** संयोगादेः लौहित्यप्रतियोगिकत्वे संयोगादिना **किंचित्समवायि**निरूपितत्वविशिष्टसंयोगादिना वा साक्षात्संबन्धात्मकेन स्फटिकादौ लोहित्यादिबुद्धेः भ्रमत्वानुपपत्तेश्च । **यादृश**संबन्धे यत्प्रकारकप्रतियोगिकत्वयद्विशेष्यानुयोगिकत्वोभयाभावः तादृशसंबन्धेन तत्प्रकारकतद्विशेष्यकज्ञानान्यज्ञानस्यैव प्रमात्वात् । स्वसमवायिसंयोगे चोभयसत्त्वेन उभयाभावासत्त्वात् ।।

## व्याख्या

**नचेति** । **तादृशेति** । स्वसमवायिसंयोगे इत्यर्थः । **मानाभावादिति** । परंपराघटकसमवायस्य लौहित्यप्रतियोगिकतयैव तद्घटितपरंपराया अपि संबन्धत्वनिर्वाहे विशिष्टरूपेण साक्षात् लौहित्यप्रतियोगिकत्वकल्पनमनावश्यकमिति भावः । बाधकमप्याह– **किंचिद्रूपेणापीति** । स्वसमवायिसंयोगत्वेनापि लौहित्यप्रतियोगिकत्वाभ्युपगमे इत्यर्थः । संयोगेन साक्षात्संबन्धेन अन्यधर्मसमवायिनिरूपितत्वविशिष्टसंयोगेन लोहितः स्फटिक इति बुद्धेः भ्रमत्वानुपपत्तिः ।।

ननु संयोगेन स्फटिके लौहित्याभावात् एवम् अन्यधर्मसमवायिसंयोगेनापि तत्र लौहित्याभावात् कुतस्तस्य न भ्रमत्वमिति शङ्कायामाह–**यादृशेति** । यादृशसंबन्धे– प्रकृते संयोगे स्वसमवायिसंयोगे वा लौहित्यप्रतियोगिकत्वस्फटिकानुयोगिकत्वोभयसत्त्वेन



तदभावासत्त्वात् तादृशसंबन्धेन तत्प्रकारकतद्विशेष्यकज्ञानान्यत्वस्य भ्रमभिन्नत्वस्यैव सत्त्वात् कथं संयोगस्य तत्प्रतियोगिकत्वम्, जपाप्रतियोगिकत्वं किल इति चेत् – स्वसमवायिसंयोगस्य संयोगानतिरिक्ततया तस्य तत्प्रतियोगिकत्वे संयोगस्यापि सत्त्वात् ।।

यद्रूपावच्छिन्नस्य संसर्गत्वं तद्रूपावच्छिन्नसंसर्गतायां यत्प्रतियोगिकत्वाभावः इति रीत्या भ्रमत्वं परिष्क्रियते । उक्तस्थले च संयोगत्वावच्छिन्नसंसर्गतायां लौहित्यप्रतियोगिकत्वं नास्ति । अथापि तन्निरूपिततया भासत इति न दोष इति चेत्– आह–**किंचित्समवायीत्यादि** । अन्यसमवायिसंयोगस्य समवायिसंयोगत्वेनैव संसर्गत्वात् तद्रूपावच्छिन्नसंसर्गतायाः स्वसमवायिसंयोगेऽप्यक्षतत्वात् तेन संबन्धेन तत्प्रकारकज्ञानस्य भ्रमत्वासंभवात् ।।

अस्मन्मते च समवायनिष्ठसंसर्गता लौहित्यप्रकारतानिरूपिता । संयोगनिष्ठसंसर्गता स्फटिकनिष्ठविशेष्यता निरूपिता । यत्र तु संयोगनिष्ठसंसर्गतैव उभयनिरूपिता भवति, तत्र वस्तुतः संयोगस्य लौहित्यप्रतियोगिकत्वाभावात् तज्ज्ञानस्य भ्रमत्वम् ।।

एवम् अन्यसमवायिनिरूपितत्वविशिष्टसंयोगेन लौहित्यभाने तज्जनकसमवायस्य लौहित्यप्रतियोगिकत्वाभावात् मन्मतरीत्या तत्र तन्निरूपितत्वभानात् भ्रमत्वमिति भावः ।।

## गादाधरी

**न च** संबन्धभेदेन व्यापकताभेदात् स्वसमवायिसंयोगरूपपरंपरासंबन्धेन यत्र साध्यता तत्र परम्पराघटकविशेष्यांशे स्वप्रतियोगिप्रतियोगिकत्वमुपेक्ष्य स्वप्रतियोगिप्रतियोगिकपरंपराघटकविशेषणसमवायादिमत्प्रतियोगिप्रतियोगिकस्यैवाभावो निवेशनीयः । **परम्पराभिवृद्धावपि** ईदृशरीत्या ऊह्यमिति नानुपपत्तिरिति वाच्यम् ।।

**यत्र** कालिकसंबन्धघटितसामानाधिकरण्यसंबन्धेन घटादिकं साध्यं महाकालवृत्तित्वादिकं हेतुः तत्र कालिकसंबन्धेन गगनादेरवृत्तित्वपक्षे प्रतियोगिव्यधिकरण-

भावाप्रसिद्धेर्दुर्वारत्वात् । गगनादिनिरूपितस्य तादृशसामानाधिकरण्यरूपपरंपरासंबन्धघटकविशेषणस्य कालिकसंबन्धस्याप्रसिद्धेः ।।

## व्याख्या

पुनश्च प्रकारान्तरेण पूर्वकल्पपरिष्कारं शङ्कते–**न चेति** । परंपराघटकविशेष्यांशे पूर्वं साक्षात् लौहित्यप्रतियोगिकत्वाभावात् उभयाभावः उक्तः । इदानीं तु तत्र निरुक्तप्रतियोगिप्रतियोगिकत्वमनिवेश्य निरुक्तप्रतियोगिप्रतियोगिकपरम्पराघटकविशेषणसमवायिमत्प्रतियोगिकत्वं निवेश्यते । **परम्पराभिवृद्धाविति** । स्वसमवायिसंयुक्तसंयोगादिस्थलेऽपि स्वप्रतियोगिप्रतियोगिकसमवायादिमत्प्रतियोगिकसंयोगवत्प्रतियोगिकसंयोगेत्यादिरीत्या निवेश्यम् । एवं च प्रकृते स्वसमवायिसंयोगे लौहित्यप्रतियोगिकसमवायवत्प्रतियोगिकत्वस्याक्षततत्वेनोभयसत्त्वात् उभयाभावाभावान्न दोष इति भावः ।।

समाधत्ते–**यत्रेति** । कालिकसंबन्धवत्प्रतियोगिकसमवायादिसंबन्धेन घटवत् महाकालवृत्तित्वात् इत्यत्र कालिकसंबन्धेन गगनादेः वृत्तित्वकल्पे कुत्रापि प्रतियोगिवैयधिकरण्यं न प्रसिध्यति । उक्तपरंपराघटककालिकसंबन्धस्य गगनादिप्रतियोगिकत्वाभावात् । घटादिप्रतियोगिकत्वप्रसिद्धावपि उभयाभावासंभवात् । निरुक्तप्रतियोगिप्रतियोगिकप्रथमसंबन्धं समवायकालिकविशेषणतात्वादिना विशिष्यानिवेश्य निरुक्तप्रतियोगिप्रतियोगिकसंबन्धवत्प्रतियोगिकत्वेन निवेशे कालिकसंबन्धघटितसामानाधिकरण्यसंबन्धेन घटादिसाध्यकस्थले तादृशसंबन्धेन गगनादिप्रतियोगिकविषयितादिसंबन्धवत्प्रतियोगिकत्वाभावमादाय प्रतियोगिवैयधिकरण्यप्रसिद्धिरित्याशयः ।।

## गादाधरी

विशेषणीभूतसंबन्धं विशिष्यानिवेश्य निरुक्तप्रतियोगिप्रतियोगिकसंबन्धत्वेन संबन्धं निवेश्य तद्वत्प्रतियोगिकत्वनिवेशे **कालिकविशेषणतावत्स**मवेतत्वरूपपरंपरासंबन्धेन द्रव्यत्वादिसाध्यके द्रव्यवृत्तित्वादिहेतावतिव्याप्तिः । तत्र साध्यतावच्छेदकपरंपरासंबन्धघटकविशेष्यीभूतसमवेतत्वांशे व्यभिचारनिरूपकाधिकरणशब्दज्ञानाद्यनुयोगिकत्वद्रव्यत्वप्रतियोगिकसंबन्धत्वावच्छिन्नद्रव्यत्वसमवायवत्प्रतियोगिकत्वोभयसंबन्धेन द्रव्यत्वाभावासंग्रहात् ।।



## व्याख्या

**कालिकविशेषणतावदिति** । कालिकविशेषणतावत्समवेतत्वसंबन्धेन द्रव्यत्वाभाववति शब्दज्ञानादौ द्रव्यवृत्तित्वसत्त्वात् अयं हेतुः व्यभिचारी । अत्र उक्तरीत्या निवेशे कालिकविशेषणतावत्समवेतत्वघटकसमवेतत्वांशे द्रव्यत्वप्रतियोगिकसंबन्धत्वविशिष्टसमवायवत्प्रतियोगिकत्वशब्दज्ञानाद्यनुयोगिकत्वोभयसत्त्वेन द्रव्यत्वाभावस्य लक्षणघटकत्वासंभवेन उक्तहेतावतिव्याप्तिसंभवात् एवमपि न निवेश्यम् इति भावः ।।

## गादाधरी

हेत्वधिकरणानुयोगिकविशेष्यीभूतसंबन्धप्रतियोग्यनुयोग्यनुयोगिकत्वनिरुक्तप्रतियोगिप्रतियोगिकत्वोभयाभावस्य परंपरासंबन्धघटकविशेषणांशे निवेशे स्वसमवायिसमवेतत्वसंबन्धेन जातिसाध्यकमेयत्वादिहेतावतिव्याप्तिः । तत्र तादृशसंबन्धघटकविशेषणांशे तादृशसंबन्धेन साध्याधिकरणहेत्वधिकरणव्यक्त्यनुयोगि-कविशेष्यीभूतसंबन्धप्रतियोग्यनुयोगिकत्वघटितोभयसत्त्वात् व्यभिचारनिरूपकीभूतहेत्वधिकरणानुयोगिकविशेष्यीभूतसंबन्धाप्रसिद्धेः साध्याभावस्य लक्षणाघटकतया अभावान्तरस्यैव लक्षणघटकत्वात् ।।

## व्याख्या

प्रकारान्तरेण निवेश्य उक्तदोषमुद्धरति–**हेत्वधिकरणे**त्यादिना हेत्वधिकरणानुयोगिकः यः परंपरासंबन्धघटकविशेष्यभूतः संबन्धः तत्प्रतियोगी यः संबन्धः तदनुयोगिकत्वनिरुक्तप्रतियोगिप्रतियोगिकत्वोभयाभाववत्परंपरासंबन्धघटकविशेषणसंबन्धकत्वमिति रीत्या निवेशे सति कालिकविशेषणतावत्समवेतत्वरूपपरंपरासंबन्धे घटकीभूत-

समवेतत्वस्य हेत्वधिकरणशब्दज्ञानाद्यनुयोगिकस्य प्रतियोगि आकाशात्मादिकं तदनुयोगिकत्वस्य कालिकसंबन्धे अभावात् तद्घटितोभयाभाववत्कालिकसंबन्धकत्वरूपप्रतियोगिवैयधिकरण्यस्य द्रव्यत्वाभावे सुलभत्वात् न दोष इति भावः ।।

एवं सति स्वसमवायिसमवेतत्वसंबन्धेन जातिमान् मेयत्वात् इत्यादौ अतिव्याप्तिः । तत्र तादृशसंबन्धघटकविशेषणीभूतसमवायांशे प्रमेयत्वाधिकरणद्रव्यगुणाद्यनुयोगिकसमवायप्रतियोगिगुणानुयोगिकत्वजातिप्रतियोगिकत्वोभयसत्त्वात् । हेत्वधिकरणेत्यनेन व्यभिचारनिरूपकीभूतसमवायादिकं न धर्तुं शक्यम् । तदनुयोगिकविशेष्यीभूतसमवायसंबन्धाप्रसिद्धेः साध्याभावस्य लक्षणाघटकत्वेन अभावान्तरस्यैव लक्षणघटकत्वात् ।।

## गादाधरी

**न च** परम्परासंबन्धघटकविशेष्यांशे हेत्वधिकरणानुयोगिकत्वपरम्परासंबन्धघटकविशेषणीभूतसंबन्धवन्निरूपितत्वनिरुक्तप्रतियोगिप्रतियोगिकसंबन्धवन्निरूपितत्वानां त्रयाणामभावविशेषणत्वान्न दोषः । गगनादिनिरूपितकालिकसंबन्धाप्रसिद्धावपि तन्निरूपिततादात्म्यविषयतादिसंबन्धवन्निरूपितत्वप्रसिद्ध्या त्रित्वावच्छिन्नाभावसौलभ्यादिति वाच्यम् ।।

## व्याख्या

पुनश्च शङ्कते–**न चेति** । स्वसमवायिसमवेतत्वसंबन्धेन जातिसाध्यकमेयत्वादिस्थले परंपरासंबन्धघटकविशेष्यीभूतसमवायांशे परम्परासंबन्धघटकविशेषणीभूतसमवायवत्प्रतियोगिकत्वजातिप्रतियोगिकसमवायवद्गुणादिप्रतियोगिकत्वयोः सत्त्वेऽपि हेत्वधिकरणीभूतसमवायाद्यनुयोगिकत्वाभावेन त्रित्वावच्छिन्नाभावसत्त्वान्न दोषः । कालिकसंबन्धघटितसामानाधिकरण्यस्थले च गगनादिनिरूपितकालिकसंबन्धाप्रसिद्धावपि तादृशसंबन्धघटकविशेष्यीभूतसमवायसंबन्धे गगनादिप्रतियोगिकतादात्म्यविषयित्वादिसंबन्धस्य प्रसिद्धत्वात् तादृशसंबन्धवत्प्रतियोगिकत्वाभावेन त्रित्वावच्छिन्नाभावसौलभ्यान्न दोषः ।।



## गादाधरी

**कालिक**स्वरूपोभयघटितसामानाधिकरण्यसंबन्धेन जन्यज्ञानादेः साध्यत्वे व्यभिचारिणि कालवृत्तित्वादावतिव्याप्त्यापत्तेः । व्यभिचारनिरूपकाधिकरणप्रलयत्वादिनिष्ठायाम् उक्तसंबन्धघटकाधेयतायां कालिकसंबन्धवन्निरूपितत्वसाध्यीयविषयतासंबन्धवन्निरूपितत्वयोः सत्त्वेन आधेयतासामान्ये दर्शितत्रित्वावच्छिन्नाभावासत्त्वेन साध्याभावस्य प्रतियोगिवैयधिकरण्यानिर्वाहात् ।।

**प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे** च नेयमनुपपत्तिः । हेत्वधिकरणस्फटिकादिनिष्ठस्य समवायादिना प्रतियोगिव्यधिकरणस्याभावस्य समवायादिसंबन्धावच्छिन्नप्रतियोगितायां स्वसमवायिसंयोगादिरूपपरंपरायाः अवच्छेदकत्वाभावेन उभयाभावाक्षतेः ।।

## व्याख्या

समाधत्ते–**कालिकेत्या**दिना । पूर्वोक्तरीत्यानिवेशेऽपि कालिकसंबन्धघटितसामानाधिकरण्यसंबन्धेन जन्यज्ञानवान् कालवृत्तित्वात् इत्यत्रातिव्याप्तिः । प्रलयस्य जन्यज्ञानानधिकरणत्वात् प्रलयत्वे कालिकसंबन्धघटितसामानाधिकरण्येन जन्यज्ञानाभाववत्त्वात् प्रलयत्वम् । तत्र च प्रलयात्मककालवृत्तित्वरूपहेतुसत्त्वात् व्यभिचारित्वमस्य ।।

कालिकसंबन्धवन्निरूपिताधेयत्वरूपोक्तपरंपराघटकविशेष्यसंबन्धभूताधेयतायां व्यभिचारनिरूपकीभूतहेत्वधिकरणप्रलयत्वानुयोगिकत्वकालिकसंबन्धप्रतियोगिकत्वजन्यज्ञानप्रतियोगिकविषयितासंबन्धवन्निरूपितत्वत्रयसत्त्वेन त्रित्वावच्छिन्नाभावासत्त्वेन साध्याभावस्य प्रतियोगिवैयधिकरण्यानिर्वाहात् **प्रतियोगिताधर्मिकोभयाघटित**-

**कल्पान्तरानुसरणमावश्यकम्** । तत्र च नेयमनुपपत्तिः । हेत्वधिकरणस्फटिकनिष्ठस्य समवायसंबन्धेन प्रतियोगिव्यधिकरणस्य समवायसंबन्धावच्छिन्नप्रतियोगिताकस्य उदासीनघटाद्यभावस्य प्रतियोगितायां स्वसमवायिसंयोगरूपपरंपरासंबन्धावच्छिन्नत्वाभावेन उभयाभावस्याक्षततत्वादिति भावः ।।

## गादाधरी

**न च** स्वसमवायिसमवायादिसंबन्धेन घटरूपादिसाध्यके समवायादिना घटादिहेतावव्याप्तिः । तत्र किंचित्समवायिनिरूपितत्वविशिष्टस्वसमवायादिसंबन्धावच्छिन्नायां हेतुमत्कपालादिनिष्ठसाध्याभावप्रतियोगितायां समवायिसमवायरूपसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वसत्त्वात् । न हि तत्र दर्शितप्रतियोगितावच्छेदकसंबन्धसाध्यतावच्छेदकसंबन्धयोः शरीरवैलक्षण्यं किमपि शक्यते वक्तुम् । स्वांशस्य संबन्धाप्रवेशात् इतरांशस्य अविशेषात् ।।

इयांस्तु निशेषः – दर्शितसाध्यतावच्छेदकसंवन्धस्य संबन्धतया भाने प्रथमसमवायविषयता प्रकारतानिरूपिता द्वितीयसमावायविषयता विशेष्यतानिरूपिता । उक्तप्रतियोगितावच्छेदकसंबन्धस्य संबन्धतया भाने द्वितीयसमवायविषयतैव प्रकारताविशेष्यतोभयनिरूपितेति । स चानुपयुक्त एवेति वाच्यम् ।।

## व्याख्या

**न चेत्यादि** । कपालः स्वसमवायिसमवायसंबन्धेन घटरूपवान् समवायेन घटात् इत्यत्र हेत्वधिकरणे कपाले उक्तसंबन्धेन घटरूपस्य सत्त्वेऽपि समवायस्य एकत्वेन रूपसमवाये अन्ययत्किंचित्समवायिनिरूपितत्वस्य स्वप्रतियोगिकत्वस्य च सत्त्वात् साक्षात्संबन्धात्मककिंचित्समवायिनिरूपितत्वविशिष्टस्वसमवायेन घटरूपस्य अभावात् तत्प्रतियोगितायां समवायिसमवायरूपसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वसत्त्वात्



किंचित्समवायिनिरूपितस्वसमवायसंबन्धावच्छिन्नायामुक्तप्रतियोगितायां कथं स्वसमवायिसमवायावच्छिन्नत्वम् इत्यत्राह–**न हीति** । स्वपदार्थस्य संबन्धेऽप्रवेशात् इतराशस्य समवायिसमवायरूपस्य प्रतियोगितावच्छेदकस्य साध्यतावच्छेदकस्य च संबन्धस्य विशेषाभावात् ।।

परं तु स्वसमवायिसमवायरूपसाध्यतावच्छेदकसंबन्धस्य परंपरात्मकस्य संसर्गतया भाने प्रथमसमवायविषयता यत्किंचित्प्रकारतानिरूपिता । द्वितीयसमवायविषयता विशेष्यतानिरूपिता । किंचित्समवायिनिरूपितत्वविशिष्टस्वसमवायसंबन्धस्य अभावप्रतियोगितावच्छेदकसंबन्धस्य संसर्गतया भाने द्वितीयसमवायविषयतैव प्रकारत्वविशेष्यत्वोभयनिरूपितेति कश्चिद्विशेषोऽस्ति । स चानुपयुक्तः इति उक्तप्रतियोगितायां (हेतुसमानाधिकरणाभावप्रतियोगितयाम्) उभयसत्त्वात् अव्याप्तिरिति शङ्कितुरभिप्रायः ।।

## गादाधरी

**परम्परा**संबन्धावच्छिन्नाभावस्य हि प्रतियोगितावच्छेदकसंबन्धता परंपराघटकयावद्वस्तुषु विशेष्यविशेषणभावापन्नेषु पर्याप्ता । विशिष्टसाक्षात्संबन्धावच्छिन्नाभावस्य तु तादृशसंबन्धता विशेष्य एव पर्याप्ता । विशेषणं तु संबन्धविधया अवच्छेदकतायाम् अवच्छेदकमेव, न तु तदन्तर्भाविण संबन्धविधया प्रतियोगितावच्छेदकत्वस्य पर्याप्तिः । ईदृशरीत्यैव अभाववैलक्षण्यनिर्वाहात् । तथा च परंपरासंबन्धेन यत्र साध्यता तत्र परंपरापर्याप्तावच्छेदकत्वरूपं साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयम् । उक्तस्थले च अधिकरणविशेषणीभूतसमवायस्य प्रतियोगितावच्छेदकतायामेवावच्छेदकतया प्रतियोगितायां तदन्तर्भाविण पर्याप्तावच्छेदकताकत्वाभावादिति **दिक्** ।।

## व्याख्या

उक्तशङ्कां समाधत्ते–**परंपरेति** । स्वसमवायिसमवायादिरूपपरम्परासंबन्धावच्छिन्नाभावप्रतियोगितावच्छेदकसंसर्गता परम्परासंसर्गघटका यावन्तः सन्ति, तेषु विशेषणविशेष्यभावापन्नेषु सर्वेषु पर्याप्ता, न तु विशेष्यस्य संसर्गता, तद्विशेषणस्य संसर्गतावच्छेदकता । किंचित्समवायिनिरूपितत्वविशिष्टस्वसमवायरूपसाक्षात्संबन्धावच्छिन्नाभावस्य तु प्रतियोगितावच्छेदकसंसर्गता विशेष्यभूतसाक्षत्संबन्ध एव पर्याप्ता। विशेषणं तु संसर्गविधया अवच्छेदकतायामवच्छेदकमेव, न तु तदन्तर्भाविण संसर्गतापर्याप्तिः । अनयैव रीत्या उभयोरभावयोः वैलक्षण्यनिर्वाहात् । तथा च परम्परासंबन्धो यत्र साध्यतावच्छेदकः तत्र तादृशपरम्परापर्याप्तावच्छेदकताकत्वरूपं साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमेव निवेश्यम् ।।

स्वसमवायिसमवायसंबन्धेन घटरूपवान् समवायेन घटात् इत्यत्र किंचिद्विशिष्टनिरूपितस्वसमवायरूपसंबन्धघटकविशेष्यसमवायस्यैव प्रतियोगितावच्छेदकसंसर्गता, विशेषणसमवायस्य तु तदवच्छेदकत्वमेवेति प्रकृतसाध्यतावच्छेदकसंसर्गपर्याप्तावच्छेदकत्वाभावान्नाव्याप्तिरित्यर्थः । **दिगिति** । **दिगर्थस्तु** – यद्धर्मावच्छिन्नत्वमित्यत्र यद्धर्मपर्याप्तावच्छेदकताकत्वं निवेश्यमिति ।।

## गादाधरी

**ननु** प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे विषयित्वादिवृत्त्यनियामकसंबन्धेन साध्यतायां सद्धेतावव्याप्तिः । तादृशसंबन्धस्य वृत्त्यनियामकतया अभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नत्वस्याप्रसिद्धेः ।।

**न च तादृशसंबन्धस्य** प्रतियोगितानवच्छेदकत्वेऽपि प्रतियोगितावच्छेदकतायामेव तत्संबन्धावच्छिन्नत्वप्रसिद्धिः । प्रतियोगित्वतदवच्छेदकत्वनिष्ठावच्छिन्नत्वयोः भेदेऽपि **एकजातीयतया** तादृशानुगतरूपेणैव निवेशात् इति वाच्यम् ।।



तथा सति तादृशसंबन्धेन साध्यतायां व्यभिचारिण्यतिव्याप्तेः । प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयान्यसंबन्धाच्छिन्नप्रतियोगितायां तत्संबन्धावच्छिन्नत्वाभावेन तत्संबन्धावच्छिन्नप्रतियोगित्वस्य चाप्रसिद्धत्वेन तादृशप्रतियोगितासामान्ये उभयाभावसत्त्वादिति चेत्–

## व्याख्या

संबन्धधर्मिकोभयाभावघटितलक्षणे वृत्त्यनियामकसंबन्धेन साध्यतास्थले नाव्याप्तिर्भवतीति प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे तादृशस्थलेऽव्याप्तिं शङ्कते–**नन्वित्यादिना** । परिहारं शङ्कते–**न चेति** । **तादृशसंबन्धस्य**– विषयितादिसंबन्धस्य । प्रतियोगितावच्छेदकतायां विषयितासंबन्धावच्छिन्नत्वप्रसिद्धिरिति । वृत्त्यनियामकसंबन्धस्य अभावप्रतियोगितावच्छेदकत्वं नास्तीत्येव प्रवादः, न तु अवच्छेदकतावच्छेदकत्वमपि नास्तीति भावः ।।

प्रतियोगितानिष्ठावच्छेद्यत्वतदवच्छेदकत्वनिष्ठावच्छेद्यत्वयोः भिन्नत्वे प्रकृते प्रतियोगितानिष्ठविलक्षणावच्छेद्यत्वस्यैव साध्यतावच्छेदकसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभावप्रतियोगितया निवेशनीयतया उक्तरीत्या तत्प्रसिद्धिरनुपयोगिनी इति शङ्कायामाह–**एकजातीयतयेति** । एवं सति विषयितासंबन्धेन किंचित्साध्यकव्यभिचारिण्यतिव्याप्तिः । कथमिति चेत्–प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावः अन्यसंबन्धावच्छिन्नाभाव एव प्रसिद्धः, तत्प्रतियोगितायां च विषयितासंबन्धावच्छिन्नत्वाभावात् उभयाभावसौलभ्यात् । विषयितासंबन्धावच्छिन्नप्रतियोगिता चाप्रसिद्धेरिति ।।

## गादाधरी

मैवम् । प्रतियोगितावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकानधिकरणहेतुमन्निष्ठभावप्रतियोगितावच्छेदकतासामान्ये उभयाभावस्य विवक्षितत्वात् ।।

विषयितासंवन्धेन साध्यतायां सद्धेतौ तत्संबन्धाबच्छिन्नावच्छेदकताकाभावोऽपि न प्रतियोगितावच्छेदकताघटकतत्संबन्धेन प्रतियोगितावच्छेदकानधिकरणहेत्वधिकरणकः। व्यभिचारिणि तादृशाभावोऽपि तादृश इति तत्प्रतियोगितावच्छेदकतायामुभयसत्त्वेन नातिव्याप्तिः। वह्निमान् धूमात् इत्यादौ संयोगादिना घटादिमदभावः समवायादिना वह्निमदभावश्च लक्षणघटकः। तत्प्रतियोगितावच्छेदकतायां चोभयाभावसत्त्वात् लक्षण-समन्वयः। धूमवान् वह्नेः इत्यादौ तु साध्यतावच्छेदकसंबन्धेन साध्यवतोऽभावोऽपि तादृश इति तत्प्रतियोगितावच्छेदकतायामुभयसत्त्वेन नातिव्याप्तिः। अन्यत् सर्वं स्वयमूह्यम्। (इति पाठान्तरम्)

### व्याख्या

समाधत्ते–**मैवमिति**। प्रतियोगितावच्छेदकतावच्छेदकसंबन्धेन प्रतियोगितावच्छेदाकानधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतासामान्ये यद्धर्मावच्छिन्नत्वयत्संबन्धावच्छिन्नत्वोभयाभावो विवक्षणीयः। पर्वतो वह्निमान् धूमात् इत्यादौ संयोगादिना घटादिमदभावो लक्षणघटकः। तन्निरूपितप्रतियोगितानिरूपितावच्छेदकतायां घटनिष्ठायां प्रकृतसाध्यतावच्छेदकवह्नित्वावच्छिन्नत्वाभावात्, समवायादिना वह्निमदभावप्रतियोगितावच्छेदकतायां वह्निनिष्ठायां साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नत्वाभावाच्च उभयाभावसत्त्वाच्च तमादाय लक्षणसमन्वयः। पर्वतो धूमवान् वह्नेरित्यत्र संयोगेन धूमवदभावोऽपि लक्षणघटकः। तन्निरूपितप्रतियोगितावच्छेदकतायां धूमनिष्ठायां साध्यतावच्छेदकधूमत्वावच्छिन्नत्वसंयोगसंबन्धावच्छिन्नत्वोभयसत्त्वात् तदुभयाभावो नास्तीति नातिव्याप्तिः॥

इदं विषयितासंबन्धेन घटवत् ज्ञानत्वात् इत्यत्र विषयितासंबन्धेन घटवदभावः न प्रतियोगितावच्छेदकविषयितासंबन्धेन प्रतियोगितावच्छेदकघटानधिकरण-हेत्वधिकरणवृत्तिः विषयितासंबन्धेन घटवज्ज्ञानवृत्तित्वात्। अतस्तस्य लक्षणाघटकत्वात् विषयितासंबन्धेन पटवदभावो लक्षणघटकः, तदीयप्रतियोगितावच्छेदकतायां पटनिष्ठायां साध्यतावच्छेदकघटत्वावच्छिन्नत्वाभावप्रयुक्तोभयाभावसत्त्वान्नाव्याप्तिरिति भावः॥



### दीधितिः

अत एव ...... वह्निधूमोभयवान् वह्नेः इत्यादौ संयोगस्य द्वित्वावच्छिन्न-प्रतियोगिकत्वविरहेऽपिच नातिव्याप्तिः इति वदन्ति॥

### गादाधरी

संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि **वह्निधूमोभयवान् वह्नेरित्यादौ** नातिव्याप्तिरिति योजना। अयं भावः–प्रत्येक**संयोगस्य** द्वित्वावच्छिन्न-प्रतियोगिकत्व-विरहेण वह्निधूमोभयवान् धूमात् इत्यत्र संयोगसंबन्धसामान्ये वह्निधूमोभयत्वावच्छिन्न-प्रतियोगिकत्वहेत्वधिकरणानुयोगिकत्वोभयाभावसत्त्वात् तादृशोभयत्वावच्छिन्नाभावोऽपि संयोगेन प्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणतया लक्षणघटक इत्यव्याप्तिः स्यात्। अतः संयोगेनोभयसाध्यकस्थले प्रतियोगितावच्छेदकावच्छिन्नत्वं परित्यज्य प्रतियोगिताश्रयप्रतियोगिकत्वमेव निवेशनीयम्॥

तथा च वह्निधूमोभयवान् वह्नेः इत्यत्रापि वह्निधूमोभयत्वावच्छिन्नाभावस्य लक्षणघटकतया पूर्वकल्पेऽतिव्याप्तिः स्यादिति॥

### व्याख्या

साध्यतावच्छेदकसंबन्धसामान्ये स्वप्रतियोगितावच्छेदक विशिष्टप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावः प्रतियोगिवैयधिकरण्यमिति पूर्वकल्पे दोषान्तरसत्त्वादपि प्रतियोगिताधर्मिकोभयाभावघटितलक्षणानुसरणमित्याह **दीधितौ – वह्निधूमोभयवान् वह्नेः इत्यादौ**। इति। तदुपपादयति **संयोगस्येत्यादिना**। अयं भावः– पर्वतो वह्निधूमोभयवान् धूमात् इति सद्धेतुः। धूमवति सर्वत्र वह्निधूमोभय-

सत्त्वात् । वह्निधूमोभयवान् वह्नेः इति तु असद्धेतुः । वह्निधूमोभयाभाववति अयोगोलकादौ वह्निसत्त्वेन व्यभिचारात् । तत्र पूर्वकल्पे वह्निधूमोभयवान् धूमात् इत्यत्राव्याप्तिः प्राप्नोति । तथाहि–साध्यतावच्छेदकसंयोगसामान्यस्य प्रत्येकप्रतियोगिकत्वेन हेत्वधिकरणपर्वतानुयोगिकत्वसत्त्वेऽपि वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वविरहेण संयोगसंबन्धसामान्ये उक्तोभयाभावसत्त्वात् तादृशोभयाभाववत्संयोगसामान्यकोऽभावः वह्निधूमोभयाभावोऽपि भवतीति तत्प्रतियोगितावच्छेदकत्वमेव वह्निधूमोभयत्वेऽस्तीत्यव्याप्तिः स्यात् । तद्वारणाय संयोगेन उभयसाध्यकस्थले प्रतियोगितावच्छेदकविशिष्टत्वं परित्यज्य स्वप्रतियोगिप्रतियोगिकत्वमेव निवेशनीयम् । तथा सति वह्निधूमोभयाभावप्रतियोगिवह्निप्रतियोगिकत्वहेत्वधिकरणपर्वतानुयोगिकत्वोभयमेव संयोगसंबन्धेऽस्तीति वह्निधूमोभयाभावो न लक्षणघटकः, अपि तु घटाद्यभाव एवेति, तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके वह्निधूमोभयत्वेऽस्तीति नाव्याप्तिः ।।

एवं सति तुल्ययुक्त्या व्यभिचारिणि वह्निधूमोभयवान् वह्नेः इत्यत्रातिव्याप्तिः । वह्निधूमोभयाभाववति अयोगोलके वह्नेः सत्त्वात् अयं व्यभिचारी । अत्र साध्याभावं बह्निधूमोभयाभावं गृहीत्वैवातिव्याप्तिर्वारणीया । पूर्वोक्तयुक्त्या वह्निधूमोभयवान् वह्नेः इत्यत्रातिव्याप्तिः । हेत्वधिकरणायोगोलकानुयोगिकवह्निप्रतियोगिकसंयोगे उभयत्वावच्छिन्नप्रतियोगिकत्वाभावेऽपि उभयान्तर्गतवह्निरूपप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणायोगोलकानुयोगिकत्वोभयसत्त्वेन उभयाभावविरहात् वह्निधूमोभयाभावस्य लक्षणाघटकतया घटाद्यभावस्यैव तत्र लक्षणघटकत्वात् तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके वह्निधूमोभयत्वे सत्त्वात् अतिव्याप्तिः इति भावः ।।

## गादाधरी

**अथ** साध्यतावच्छेदकादिभेदेन चेत् व्याप्तिपदार्थभेदः तदैव प्रतियोगितावच्छेदकावच्छिन्नत्वपरित्यागः स्थलविशेषे संभवति । तथाच साधनभेदेनापि तुल्ययुक्त्या



तद्भेदात् धूमरूपहेतुकवह्निधूमोभयात्मकसाध्यघटितव्याप्तिपदार्थप्रसिद्धिनिर्वाहाय तच्छरीरे प्रतियोगितावच्छेदकवैयधिकरण्यनिवेशनस्य, वह्निहेतुकतदुभयसाध्यकस्थले कथम् अतिव्याप्तिप्रसञ्जकत्वमिति चेत्–

## व्याख्या

वह्निधूमोभयवान् वह्नेः इत्यत्रातिव्याप्तिवारणं संभवतीति शङ्कते–**अथेत्यादिना** । पूर्वं वह्निधूमोभयवान् धूमात् इत्यत्र सद्धेतौ अव्याप्तिवारणाय तत्स्थलीया व्याप्तौ स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वं परित्यज्य स्वप्रतियोगिप्रतियोगिकत्वं तत्स्थाने निवेश्यत इत्युक्तिः कदा संगच्छते, यदि साध्यतावच्छेदकभेदेन व्याप्तिभेदः तदैव । तथा च सति साधनभेदेनापि तुल्ययुक्त्या व्याप्तिभेदात् वह्निधूमोभयवान् धूमात् इत्यत्र व्याप्तिप्रसिद्धिनिर्वाहाय व्याप्तिशरीरे प्रतियोगिवैयधिकरण्यघटकतया साध्यतावच्छेदकसंबन्धे स्वप्रतियोगिप्रतियोगिकत्वं निवेश्यते चेत् वह्निहेतुकवह्निधूमोभयसाध्यकस्थले कथमतिव्याप्तिप्रसङ्गः, इति शङ्काग्रन्थाशयः । यदि सर्वसाधारणतया एकरूपेण व्याप्तिरूच्येत तदैव युज्येतेति भावः ।।

## गादाधरी

**यथा** संयोगसामान्ये द्वित्वावच्छिन्नप्रतियोगिकत्वाभावनिश्चयदशायामपि धूमेन वह्निधूमोभयाभावानुमितिर्भवतीति प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयकं ज्ञानं धूमलिङ्गकतादृशोभयानुमितिजनकमङ्गीक्रियते, तथा तादृशनिश्चयदशायां सकलवह्निमतामेव धूमवत्त्वमिति भ्रान्तानां वह्निहेतुकतदुभयानुमितिरप्यनुभवसिद्धेति तत्रापि प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयकज्ञानमेवानुमितिजनकं वाच्यम्। तथाच तद्धेतुकतत्साध्यका**नुमितिजनकज्ञानस्य प्रमात्वप्रसङ्ग** इत्येव अतिव्याप्त्यर्थः।।

## व्याख्या

पूर्वोक्तशङ्कायाः समाधानमाह–**यथे**त्यादिना । भ्रमप्रमासाधारण्येन व्याप्तिज्ञान-कारणतायाः वक्तव्यत्वात् यथा संयोगसामान्ये द्वित्वावच्छिन्नप्रतियोगिताकत्वं नास्तीति निश्चयदशायामपि धूमहेतुकवह्निधूमोभयानुमितिर्भवतीति तन्निर्वाहाय तल्लिङ्गकानुमितिं प्रति प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयकं ज्ञानमनुमितिजनकमिति अङ्गीक्रियते, तथा तादृशनिश्चयदशायां सकलवह्निमतामेव धूमवत्त्वमिति भ्रमवतां वह्निहेतुकवह्निधूमोभयानुमितेरपि अनुभवसिद्धतया तदनुसारेण तत्रापि प्रतियोगिताश्रय-प्रतियोगिकत्वघटितोभयाभावविषयकं ज्ञानमेवानुमितिजनकं वाच्यम् । तथा चातिव्याप्तिः इत्यर्थः ।।

अनिष्टं वक्तुम् **अतिव्याप्तिः** इत्यस्य **अनुमितिजनकज्ञानस्य प्रमात्वप्रसङ्ग** इति व्याख्यानं कृतम् ।।

## गादाधरी

**एवं** यथा वह्निधूमोभयत्वेनोभयं धूमव्यापकम् इति वाक्यात् यथोक्तनिश्चयदशायां शाब्दबोधो जायते तथा वह्निधूमोभयत्वेनोभयं वह्निव्यापकमिति अनाप्तोक्तवाक्यादपि योग्यताभ्रमात् शाब्दबोधः सर्वजनानुभवसिद्ध इति प्रतियोगिताश्रयप्रतियोगिकत्वमेव तत्र शाब्दधीविषयः स्वीकरणीयः । तथा च तद्विषयकधियः प्रमात्वेन तादृशवाक्यस्य प्रमाणतापत्तिरित्यपीति ।।

**वह्नेः इत्यत्र धूमादिति नातिव्याप्तिरित्यनन्तरम् अव्याप्तिर्वेति** पाठं केचित् कल्पयन्ति । यथासंख्येन च स्थलद्वये अतिव्याप्त्यव्याप्ती योजयन्ति ।

## व्याख्या

अनिष्टान्तरमाह–**एवमिति** । वह्निधूमोभयत्वेन उभयं वह्निव्यापकमिति अनाप्तोक्त-वाक्यात् (वह्निधूमोभयाभाववति अयोगोलके वह्नेः सत्त्वात् अस्य अनाप्तोक्तवाक्यत्वम्)



योग्यताभ्रमसत्त्वे शाब्दबोधोऽनुभवसिद्ध इति तादृशबोधविषयतया प्रतियोगिताश्रय-प्रतियोगिकत्वमेव लक्षणघटकतया स्वीकरणीयम् । समानाकारकबोधस्यैव उभयत्र स्वीकरणीयत्वात् । एवं च तस्याबाधितत्वात् तादृशवाक्यस्य प्रामाण्यापत्तिः । अत्रापि तादृशवाक्यात् शाब्दवोधस्य योग्यताभ्रमदशायामनुभवसिद्धतया तदापत्तिं तत्प्रमात्वापत्तिं च उपेक्ष्य तादृशवाक्यस्य प्रामाण्यापत्तिरेवोक्ता ।।

**वह्नेरित्यत्रेति** । **दीधितौ** तथा योजनया वह्निधूमोभयवान् वह्नेः धूमात् इत्यत्र नातिव्याप्तिः अव्याप्तिश्च । एवं यथासंख्यं स्थलद्वये उक्तरीत्या अतिव्याप्त्यव्याप्त्योः योजना कार्येति भावः ।।

## गादाधरी

**इदमत्रावधेयम्** ''घटद्वयवत् भूतलम्'' इत्यादौ द्वित्वोपलक्षितघटादिवैशिष्ट्यं तद्विशिष्टवैशिष्ट्यं वा भासते । आद्ये एकघटादिमत्यपि तत्प्रसङ्गः । **न च** द्वित्वोपलक्षितस्यापि व्यक्तिद्वयस्यैव वैशिष्ट्यद्वयं तत्र भासत इति नातिप्रसङ्ग इति वाच्यम् । एकस्मिन्नपि धर्मिणि भेदभ्रमेण द्वित्वभ्रमात् तत्प्रकारकप्रतीतौ उभयभानानियमात्। तादृशबुद्धेः द्वित्वविशिष्टाभावज्ञानविरोधितानुपपत्तिश्च । विशिष्टवैशिष्ट्यज्ञानस्यैव विशिष्टाभावबुद्धिविरोधित्वात् ।।

द्वितीये संयोगसंसर्गकतादृशज्ञानमात्रस्यैव भ्रमत्वापत्तिः संयोगरूपवैशिष्ट्ये द्वित्वविशिष्टप्रतियोगिकत्वस्य बाधात् ।।

तस्मात् द्वित्वादिविशिष्टप्रतीतौ संयोगमात्रं न संबन्धः । अपि तु द्वित्वा-वच्छिन्ननिरूपिता संयोगावच्छिन्नाधिकरणतैव । अधिकरणता च पदार्थान्तरम् अधिकरणस्वरूपं वा । उभयथैव निरूपकभेदेऽपि निरूपकतावच्छेदकद्वित्वस्य ऐक्यात् तदैक्येन संयोगप्रतियोगितावच्छेदकत्ववन्न तत्प्रतियोगितावच्छेदकतायाः द्वित्वेऽनुप-पत्तिरित्युपेयम् ।।

एवं च वह्निधूमोभयत्वावच्छिन्नसाध्यके संयोगावच्छिन्नाधिकरणताया एव साध्यतावच्छेदकसंबन्धत्वात् तत्र चोभयत्वावच्छिन्नप्रतियोगिताकत्वसत्त्वान्नातिव्याप्तिप्रसक्तिः ।।

**अन्यथा** द्वितीयकल्पेऽपि प्रतियोगितावच्छेदकावच्छिन्ननिरूपितप्रतियोगितावच्छेदकसंबन्धाननुयोगिकत्वनिवेशात् उभयत्वावच्छिन्नप्रतियोगिकसंयोगाप्रसिद्ध्या संयोगेनोभयत्वाद्यवच्छिन्नसाध्यके व्यभिचारिणि तत्संबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताया लक्षणाघटकत्वेनातिव्याप्तेर्वज्रलेपत्वात् ।।

## व्याख्या

पूर्वकल्पोपरि साध्यतावच्छेदकसंबन्धसामान्यानुयोगिकोभयाभावघटितलक्षणोपरि **दीधित्युक्तां** वह्निधूमोभयवान् वह्नेः इत्यत्रातिव्याप्तिं खण्डयितुमारभते **भट्टाचार्यः इदमत्रावधेयम्** इत्यादिना । अयमत्र घट्टार्थः– ''घटद्वयवत् भूतलम्'' इत्यत्र द्वित्वोपलक्षितघटव्यक्तिद्वयभानोपगमः न संभवति । एकव्यक्तावपि द्वित्वभ्रमात् द्वयपदात् बोधस्य स्वीकरणीयतया तत्र एकस्यैव विषयत्वेन व्यक्तिद्वयस्य विषयत्वाभावात् । द्वित्वविशिष्टवैशिष्ट्यावगाहित्वे संयोगेन घटद्वयवत् भूतलम् इति ज्ञानसामान्यस्य भ्रमत्वापत्तिः । उक्तरीत्या संयोगस्य एकैकप्रतियोगिकत्वेन द्वित्वावच्छिन्नप्रतियोगिकत्वाभावात् । तस्मात् सर्वत्र द्वित्वविशिष्टबुद्धौ संयोगमात्रं न संसर्गः । अपि तु द्वित्वावच्छिन्ननिरूपिता संयोगसंबन्धावच्छिन्नाधिकरणतैव । अधिकरणतानिरूपकस्य भिन्नत्वेऽपि निरूपकतावच्छेदकद्वित्वस्यैक्यात् अधिकरणतैक्यं स्वीक्रियते । नैवं संयोगस्य प्रतियोगितावच्छेदकैक्यात् ऐक्यं वक्तुं शक्यम् । संयोगरूपगुणस्य आश्रयभेदेन भेदात् घटद्वयप्रतियोगिकैकसंयोगासंभवात् । तथा च द्वित्वविशिष्टबुद्धौ संयोगावच्छिन्नाधिकरणताया एव संसर्गतया ''वह्निधूमोभयवान् वह्नेः'' इत्यत्र वह्निधूमोभयत्वावच्छिन्ननिरूपिताधिकरणताया एव साध्यतावच्छेदकसंबन्धत्वात् तत्र च उभयत्वावच्छिन्न-



प्रतियोगिताकत्वसत्त्वात् नातिव्याप्तिप्रसङ्गः । अन्यथा प्रतियोगिताधर्मिकोभयाभावकल्पेऽपि एवं विवक्षां विना दोषवारणं न संभवति । तथा च प्रथमकल्पेऽपि न दोष इत्यभिप्रायवानाह–**अन्यथे**ति । द्वितीयकल्पे प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगितासामान्ये प्रतियोग्यनधिकरणेत्यनेन प्रतियोगितावच्छेदकावच्छिन्ननिरूपित-प्रतियोगितावच्छेदकसंबन्धाननुयोगित्वस्य विवक्षणीयतया उभयत्वावच्छिन्नप्रतियोगिकसंयोगाप्रसिद्ध्या संयोगेन उभयत्वावच्छिन्नसाध्यके व्यभिचारिणि साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताया लक्षणाघटकत्वात् अभावान्तरप्रतियोगितामादायातिव्याप्तेः दुर्वारत्वात् इति ।।

**न चेत्यादि** । घटद्वयवत् भूतलम् इति बुद्धौ द्वित्वोपलक्षितव्यक्तिद्वयस्य वैशिष्ट्यद्वयं भासते, अतः द्वित्वोपलक्षित एकघटवति घटद्वयवत् इदमिति बुद्धेर्न प्रसङ्गः इति न वाच्यम् । एकस्मिन् धर्मिणि भेदभ्रमेण द्वित्वभ्रमात् घटद्वयप्रकारकभ्रमे उभयभानाभावात् । एवं तादृशबुद्धेः द्वित्वविशिष्टाभावज्ञानप्रतिबन्धकत्वानुपपत्तिश्च विशिष्टाभावबुद्धिं प्रति विशिष्टवैशिष्ट्यज्ञानस्यैव प्रतिबन्धकत्वात् इति भावः । अन्यत् स्पष्टम् ।।

## गादाधरी

**वस्तुतस्तु** पर्वतो वह्निमान् इत्यादावपि संयोगावच्छिन्नाधिकरणतैव संबन्धः, न तु संयोगमात्रम् । **अन्यथा** पर्वतो वह्निमान् इत्यत्रेव पर्वते वह्निः इत्यत्रापि संयोगमात्रस्यैव तथात्वापत्त्या अविशेषप्रसङ्गात् । तादृशप्रतीत्योः विशेषाय प्रथमायां संयोगः, द्वितीयायां तदवच्छिन्नाधेयता संसर्ग इत्युपेयते, किं वा प्रथमायां संयोगावच्छिन्नाधिकरणता द्वितीयायां संयोगस्तथेत्यत्र विनिगमकस्य दुर्लभत्वात् ।।

**न च** तादृशप्रतीत्योः संसर्गांशे अविलक्षणत्वेऽपि विशेष्यविशेषणभावभेदात् वैलक्षण्योपपत्तिसंभवः इति उभयत्रैव संयोगमात्रस्य संबन्धता अस्तु इति वाच्यम् ।

**तावता** पर्वतो वह्निमान्, वह्नौ पर्वतः इत्यनयोः पर्वते वह्निः पर्वतवान् वह्निः इत्यनयोश्च प्रतीत्योः वैलक्षण्यानिर्वाहात् ।।

**न चैवं** रूपवान् इत्यादावपि समवायावच्छिन्नाधारतैव संबन्धः स्यात्, न तु समवायः, उक्तयुक्तेरविशेषात् इति वाच्यम् । **समवाया**तिरिक्तसमवाया-वच्छिन्नाधारतायाः अनभ्युपगमात् ।।

## व्याख्या

इतः पूर्वम् उभयत्वावच्छिन्नसाध्यकस्थले संयोगस्य संसर्गत्वं न संभवतीत्युक्तम् । संप्रति सर्वत्रापि संयोगस्य संसर्गत्वं न संभवतीत्याह–**वस्तुत** इति । **अन्यथे**ति । संयोगस्य संसर्गत्वे इत्यर्थः । पर्वते वह्निः इति ज्ञाने, पर्वतो वह्निमान् इति ज्ञानापेक्षया विशेषणविशेष्यभावव्यत्यासेऽपि साध्यतावच्छेदकसंबन्धः संयोग एव हि । तथाच उभयोः अनुमित्योः संबन्धांशे विशेषो न स्यात् इत्यर्थः ।।

संबन्धवैलक्षण्याय पर्वतो वह्निमान् इत्यत्र संयोगः संबन्धः, पर्वते वह्निः इत्यत्र संयोगावच्छिन्नाधेयता संबन्धः इत्यपि वक्तुं न शक्यते, विनिगमनाविरहात् । पर्वते वह्निः इत्यत्र संयोगः संबन्धः, पर्वतो वह्निमान् इत्यत्र संयोगावच्छिन्नाधारता संबन्धः इत्यपि वक्तुं शक्यत्वात् ।।

ननु उक्तप्रतीत्योः संसर्गांशे विलक्षणत्वाभावेऽपि पर्वतो वह्निमान् इत्यत्र पर्वतो विशेष्यः वह्निः विशेषणम्, पर्वते वह्निः इत्यत्र वह्निः विशेष्यः पर्वतो विशेषणम् इत्येवं विशेषणविशेष्यभावभेदादेव वैलक्षण्योपपत्त्या उभयत्र संयोग एव संसर्गोऽस्तु इति शङ्कते–**न चेति** । समाधत्ते–**तावतेति** । पर्वतो वह्निमान्, वह्नौ पर्वतः इत्यनयोः, पर्वते वह्निः, पर्वतवान् वह्निः इत्यनयोश्च प्रतीत्योः वैलक्षण्यानिर्वाहात् । विशेष्यविशेषणभावैक्यात् संबन्धैक्याच्च । ततश्च पर्वतो वह्निमान् इत्यत्र संयोगा-



वच्छिन्नाधिकरणता संबन्धः । पर्वते वह्निः इत्यत्र संयोगावच्छिन्नाधेयता संबन्धः । संयोगस्तु न क्वापि संबन्ध इति भावः ।।

ननु समवायस्थलेऽप्येवमेव स्यात् रूपवान् घटः, घटे रूपम् इत्यादिप्रतीतीनां संयोगस्थलोक्तरीत्या वैलक्षण्यानिर्वाहात् । तथा च समवायस्य संबन्धत्वं लुप्येतेति शङ्कायामाह–**न चेति** । **समवायेति** । तथा च समवायावच्छिन्नाधारतायाः समवायरूपत्वान्न समवायस्य संसर्गत्वलोप इति भावः ।।

## गादाधरी

**अथ** समवायावच्छिन्नाधारतायाः समवायरूपत्वे समवायावच्छिन्नाधेयता अवश्यमतिरिक्ता स्वीकरणीया । अन्यथा रूपवान् घटः, घटे रूपम् इति प्रतीत्योः संसर्गवैलक्षण्यानुपपत्तेः । तथा च समवायावच्छिन्नाधारता आधेयता वा अतिरिक्तेत्यत्र विनिगमकं दुर्लभमिति समवायावच्छिन्नाधारतासिद्धिर्निष्प्रत्यूहैवेति चेत्–न । **घटानुयोगिक**रूपप्रतियोगिकसंबन्धः रूपानुयोगिकघटप्रतियोगिकसंबन्धश्च परस्परं विलक्षण एव । अन्यथा दर्शितस्थले समवायवैलक्षण्यानिर्वाहादिति । सत्यम् । तत्र चाधारानु-योगिकः संबन्ध एव समवाय इति परिभाषितः, न त्वाधेयानुयोगिकः । स तु आधेयतेत्येव परिभाष्यते । तत्र को विनिगमकानुयोगः? एकानुयोगिकसंयोगद्वय-प्रतियोगितयोः प्रत्येकमुभयत्वावच्छिन्नत्वविरहेऽपि तदुभयत्वेनोभयत्वावच्छिन्नत्वोपगमाच्च संयोगेनोभयसाध्यकेऽतिव्याप्तिः इत्याहुः ।।

## व्याख्या

अत्रापि शङ्कते–**अथेति** । समवायावच्छिन्नाधेयताया अपि समवायरूपत्वे रूपवान् घटः, घटे रूपम् इति प्रतीत्योः संसर्गांशे वैलक्षण्यं न निर्वहति । तदर्थं समवायावच्छिन्ना आधारता आधेयता वा अतिरिक्तेत्यत्र विनिगमनाविरहात् उभयस्य अतिरिक्तत्व-

मावश्यकमिति समवायावच्छिन्नाधारतासिद्धेः दुर्वारत्वात् । तथा च समवायस्य क्वापि संबन्धत्वं न स्यादिति प्रश्नः । तत्र समाधत्ते–**घटानुयोगिकेति** । उक्तरीत्या घटो रूपवान्, घटे रूपमिति प्रतीतिद्वयवैलक्षण्याय घटानुयोगिकरूपप्रतियोगिकसंबन्धः रूपानुयोगिकघटप्रतियोगिकश्च संबन्धः परस्परं विलक्षण एव । परं तु घटाद्यनुयोगिकसंबन्ध एव शास्त्रकारैः समवाय इति परिभाषितः । न तु आधेयरूपाद्यनुयोगिकः । स तु आधेयतेत्येव परिभाष्यते । तेषां शास्त्राकाराणां स्वतन्त्रत्वात् तत्र न विनिगमकप्रश्नावकाश इति भावः । स्वतन्त्रेच्छस्य मुनेः नियोगपर्यनुयोगानर्हत्वात् ।।

## गादाधरी

**अधिकपाठः**

**न चैवं** संयोगिन्यपि संयोग एव आधारता अस्तु । स चानुयोगितासंबन्धेन आधारपदप्रवृत्तिनिमित्तम् इति संयोगस्य द्विष्ठत्वेऽपि नाधेये तद्व्यवहार इति वाच्यम् । **संयोगीय**समवायातिरिक्तायाः आधेयव्यावृत्तानुयोगितायाः स्वीकारे तस्या एव संयोगिनिरूपिताधारतात्वोपगमेन अतिरिक्ताधारतायाः निष्प्रत्यू-हत्वात् ।।

न च तत्र संयोगिप्रतियोगिकत्वं कल्पनीयमिति गौरवम् । भवन्मतेऽपि संयोगे तत्समवेतत्वातिरिक्तस्य तत्प्रतियोगिकत्वस्य कल्पनीयतया साम्यात् । अन्यथा भूतलादेः स्वसमवेतघटादिसंयोगानुयोगितया स्वाधारतापत्तेः ।।

**एतेन** संयोगस्य आधेयतापि संयोग एव । प्रतियोगितासंबन्धेन तस्य आधेयपदप्रवृत्तिनिमित्ततया नाधारे तद्व्यवहार इत्यपि निरस्तम् ।।

आधेयनिष्ठाधारव्यावृत्तपदार्थान्तरकल्पनायाः आवश्यकत्वात् । आधाराधेययोः संयोगानुयोगित्वप्रतियोगित्वकल्पने विपरीतकल्पनायामपि बाधकाभावाच्चेति दिक् ।।



## व्याख्या

उक्तरीतिः संयोगेऽप्यस्तु इति शङ्कते-**न चैवमिति** । संयोगेन घटवान् इत्यत्रापि भवदभिमता संयोगावच्छिन्नाधारता समवायावच्छिन्नाधारतावत् संयोगरूपैवास्तु, न तु अतिरिक्ता । तर्हि संयोगस्य आधाराधेयोभयनिष्ठत्वेन आधारव्यवहारनियामकाभाव इति न च वाच्यम् । अनुयोगितासंबन्धेन यत्र संयोगः, तत्रैव आधारव्यवहार इति स्वीकारात् इति शङ्का । तत्र समाधानमाह-**संयोगीयेत्यादिना** । संयोगीयसमवायातिरिक्तायाः आधेयव्यावृत्तायाः संयोगानुयोगितायाः स्वीकारे तस्या एव अस्माभिः संयोगनिरूपिताधारतात्वोपगमेन संयोगातिरिक्ततदाधारतासिद्धेः निष्प्रत्यूहत्वात् ।।

अस्त्वेवमथापि तादृशाधारतायाः संयोगप्रतियोगिकत्वं कल्पनीयम् । समवाये तत्प्रतियोगिकत्वं तु उभयाभ्युपेतमिति चेत् – भवन्मतेऽपि संयोगे घटादिसमवे-तत्वातिरिक्तस्य तत्प्रतियोगिकत्वस्य कल्पनीयतया साम्यात् ।।

न च मन्मते तत्समवेतत्वमेव तत्प्रतियोगिकत्वमिति वाच्यम् । भूतलादेः स्वसमवेतो यो घटसंयोगः तदनुयोगितया स्वाधारतापत्तिः । तत्समवेतसंयो-गानुयोगित्वस्य तत्प्रतियोगिकसंयोगानुयोगित्वरूपत्वेन घटाद्याधारत्ववत् स्वाधारत्वसंभवात् । तस्मात् सर्वत्र संयोगमात्रस्य संबन्धत्वं नास्ति ।।

उक्तरीत्यैव पक्षान्तरमपि निराकरोति – **एतेनेति** । संयोगिनि आधेये घटादावाधेयतापि संयोग एव । प्रतियोगितासंबन्धेन यत्र संयोगः तत्र आधेयव्यवहारः । तेन नाधारे आधेयव्यवहारप्रसङ्ग इत्यपि न । आधेये आधारव्यावृत्तप्रतियोगित्वरूप-पदार्थान्तरकल्पनाया आवश्यकत्वात् तस्या एव च आधेयतात्वोपगमात् परस्परकल्पने विनिगमनाभावाच्च ।।

## दीधितिः

**प्रतियोगित्वादिश्च** स्वरूपसंबन्धविशेषः न संबन्धत्वेन निविष्टः । **सामानाधिकरण्येऽपि संयोगत्वादिनैव** निविशते । दर्शितं च नियमाघटितमपि संबन्धत्वम् ।।

## गादाधरी

**प्रतियोगित्वा**वच्छेदकत्वादेः स्वरूपसंबन्धरूपतया संबन्धत्वेन तन्निवेशे संबन्धत्वस्य नियमघटिततया अनवस्थेत्याशङ्कां निरस्यति–**प्रतियोगित्वादिश्चेति** । संबन्धविशेषोऽपि न संबन्धत्वेन लक्षणघटकः । अपि तु प्रतियोगितात्वादिना । कुत्रचित् संबन्धविधया स्वरूपत एवेत्यर्थः ।।

**ननु** सामानाधिकरण्यं तत्संबन्धिसंबन्धित्वम् । तत्र च संबन्धत्वेनैव संबन्धनिवेश इत्याशङ्क्याह–**सामानाधिकरण्येऽपीति । संयोगत्वादिनैवेति** । साधनतावच्छेदकादिभेदेनेव संबन्धादिभेदेनापि व्याप्तिभेदस्येष्टत्वादिति भावः ।।

साध्यसामानाधिकरण्यशरीरे साध्यवत्संयुक्तत्वादिरूपे हेतोः संबन्धस्य प्रकारतया तस्यैव संयोगत्वादिना निवेशः । साध्यसंबन्धस्य च धर्म्यंशे तत्संसर्गविधयैव लाघवेन निवेशात् तस्य स्वरूपत एव निवेशः संभवति । जात्यतिरिक्तस्यापि संसर्गतया भाने स्वरूपतोऽपि तदुपगमात् इत्यवधेयम् ।।

## व्याख्या

उक्तेषु व्याप्तिलक्षणेषु प्रतियोगित्वावच्छेदकत्वादीनां तत्र तत्र प्रवेशात् तेषां च स्वरूपसंबन्धविशेषरूपत्वात् तेषां संबन्धत्वेन निवेशे संबन्धत्वस्य विशिष्टबुद्धिनियामकत्वरूपतया तत्र नियमस्य घटकत्वात् नियमस्य च व्याप्तिरूपत्वात् व्याप्तिस्वरूपे व्याप्तिप्रवेशे अनवस्था स्यादिति शङ्कां निराकरोति **दीधितौ प्रतियोगित्वादिश्चेति** इत्याह **गादाधर्यां प्रतियोगित्वेति** । सिद्धान्ते प्रतियोगित्वादीनां संबन्धविशेषरूपत्वमेव न पदार्थान्तरत्वम् । अथापि उक्तव्याप्तिस्वरूपे तेषां संबन्धत्वेन न निवेशः, येनानवस्था स्यात् । किं तु प्रतियोगितात्वावच्छेदकत्वत्वादिना । क्वचित्तु स्वरूपत एव संसर्गतया । तथा च सति नियमस्याघटकतया न पूर्वोक्तदोष इति भावः ।।



एवमेव व्याप्तिघटके साध्यसामानाधिकरण्ये साध्यसंबन्धिसंबन्धरूपे संयोगादिसंबन्धः संयोगत्वादिनैव निवेश्यते, न संबन्धत्वेन, उक्तदोषात् इत्याह–**ननु इत्यादिना** । साध्यसाधनभेदेनेव संबन्धभेदेनापि व्याप्तेः भेदस्येष्टत्वात् न व्याप्त्यैक्यप्रत्याशया संबन्धत्वेनानुगतरूपेण निवेश इति भावः । क्वचित् स्वरूपत एव संबन्धस्य निवेश इति । स्थलं दर्शयति – **साध्यसामानाधिकरण्य** इत्यादिना । यत्र संसर्गतया संयोगादिभानं तत्र स्वरूपत एव । जात्यतिरिक्तस्यापि संबन्धतया भाने स्वरूपतो भानमभ्युपगम्यते । तथा च साध्यवत्संयुक्तत्वमित्यत्र अधिकरणस्य साध्येन रूपेण प्रवेशलाघवात् । तत्र संसर्गतया संयोगस्य स्वरूपत एव निवेश इति फलितम् ।।

## गादाधरी

संबन्धित्वनिवेशेऽपि च न क्षतिरित्याह – **दर्शितं च नियमाघटितमिति** । **तत्प्रतियोगिकत्वविशेष एव** तदीयसंबन्धत्वम्, न तु तद्विशिष्टबुद्धिनियामकत्वम् । अतीन्द्रियसंबन्धे जनकत्वरूपनियामकत्वासंभवात् । तत्प्रतीतिविषयत्वरूपनियामकत्वनिवेशे व्याप्तेरेवानन्तर्भावात् प्रमेयमात्रेऽतिप्रसङ्गाच्च ।।

**न च विशेष्यतान्य**तत्प्रकारतानिरूपित विषयतायाः विवक्षणीयतया नातिप्रसङ्ग इति वाच्यम् । एवमपि संयोगादिना द्रव्यत्वादिभ्रमविषयत्वमादाय तस्यापि तत्संबन्धत्वापातात् ।।

**न च विषयतायां** प्रमाप्रतियोगिकत्वनिवेशात् नायमतिप्रसङ्ग इति वाच्यम् । प्रमात्वस्य तत्संबन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपतया संबन्धत्वघटितत्वात् । एवं तदनुयोगिकत्वविशेष एव तत्रसंवन्धत्वमिति भावः ।।

## व्याख्या

**तत्प्रतियोगिकत्वविशेष एवेति** । अभावादिप्रतियोगित्वव्यावृत्ततत्प्रतियोगितानिरूपकत्वमेव तदीयसंबन्धत्वम्, न तु तद्विशिष्टबुद्धिनियामकत्वम् । अतीन्द्रिययोः संबन्धे विशिष्टबुद्धिजनकतारूपनियामकत्वासंभवात् । तथा हि – अतीन्द्रिययोः लौकिकप्रत्यक्षात्मकविशिष्टबुद्धिः न भवितुमर्हति । तत्कारणा-भावात् तत्कारणत्वं संबन्धस्य न भवति ।।

नन्वेवमपि अलौकिकतत्प्रत्यक्षे विषयस्याकारणतेति तत्र जनकत्वरूपनियामकत्वा-भावेऽपि तत्प्रतीतिविषयत्वरूपनियामकत्वसत्त्वात् तन्निवेशे का गतिरितिचेत् – तत्र व्याप्तेरेवानन्तर्भावात् । जनकत्वस्यैव व्याप्तिगर्भत्वात् । प्रतीतिविषयत्वस्य संसर्गभिन्नेऽपि सत्त्वेन अतिप्रसङ्गाच्च तेन रूपेण निवेशो न संभवति ।।

**न च विशेष्यतान्येत्यादि** । विशेष्यताभिन्ना किंचिन्निष्ठप्रकारतानिरूपिता या प्रतीतिविषयता सा संसर्गमात्रसाधारणीति तेन रूपेण निवेशे नातिप्रसङ्ग इति न च वाच्यम् । एवमपि संयोगेन द्रव्यत्वमिति भ्रमात्मकज्ञानीयतादृशविषयतायाः संयोगे सत्त्वेन तस्य द्रव्यत्वसंसर्गत्वापत्तेः । उक्तरीत्या तत्प्रकारकप्रतीतिनिरूपितविशेष्यतान्य-विषयत्वरूपतत्संबन्धत्वस्य तत्र सत्त्वात् ।।

**न च विषयतायामिति** । न च तादृशविषयतायां प्रमानिरूपितत्वनिवेशात् भ्रमविषयतामादाय न दोष इति वाच्यम् । प्रमात्वस्य तत्प्रतियोगिकसंबन्धानुयोगि-विशेष्यकतत्प्रकारकज्ञानत्वरूपत्वात् तस्य च संबन्धत्वघटितत्वेन अनव-स्थापातात् । तस्मात् तत्प्रतियोगिकत्वविशेष एव तत्संबन्धत्वमिति भावः । एवं तदनुयोगिकत्वविशेष एव तत्र संबन्धत्वम् ।।



## गादाधरी

इत्थं च सामान्यतः संबन्धघटितं साध्यवत्संबद्धत्वरूपसाध्यसामानाधिकरण्यं साध्यवदनुयोगिकप्रतियोगित्वं प्रतियोगितासंबन्धेन साध्वदनुयोगिकवत्त्वं वा । तस्य संयोगत्वादिना तद्घटितात् साध्यवदनुयोगिकसंयोगप्रतियोगित्वादिरूपात् लघुशरीरमिति तदेव व्याप्तिघटकं वाच्यम् । **अतिप्रसङ्गस्य** व्यापकतायां विशिष्य संबन्धनिवेशेनैव वारणसंभवात् ।।

हेतौ साध्यवदसंयुक्तत्वादिनिश्चयदशायां संयोगादिना **पक्षे** हेतुमत्तानिश्चयस्य साक्षादनुमितिप्रतिबन्धकतायाः अग्रे वक्तव्यतया तत्रानुमित्यापत्त्यनवकाशात् इति सूचितम् ।।

## व्याख्या

संबन्धत्वेन संबन्धस्य निवेशाभावे साध्यसामानाधिकरण्यमपि साध्यवदनुयो-गिकप्रतियोगित्वरूपं, प्रतियोगितासंबन्धेन साध्यवदनुयोगिकवत्त्वरूपं वा, विशिष्य संयोगत्वेन संयोगघटितात् साध्यवदनुयोगिकसंयोगप्रतियोगित्वरूपात् लघुभूतमिति तदेव व्याप्तिघटकतया वाच्यम् इति भावः ।।

नन्वेवं संबन्धान्तरेण साध्यसामानाधिकरण्यस्यापि साध्यव्याप्यत्वं स्यादिति विशिष्य संबन्धनिवेशः आवश्यकः इत्यत्राह–**अतिप्रसङ्गस्येति** । हेतुव्यापकसाध्य-सामानाधिकरण्यमित्यत्र व्यापकताशरीरे विशिष्य संबन्धनिवेशेनैव अतिप्रसङ्गवारण-संभवात् । कालिकसंबन्धेन साध्यसंबद्धघटादीनां साध्यतावच्छेदकीभूतसंयोगेन प्रकृतहेतुव्यापकत्वाभावात् ।।

नन्वेवं सति वह्निमान् जलात् इत्यत्र साध्यवदसंयुक्तत्वरूपविरोध-ज्ञानदशायामपि सामान्यतः साध्यवत्संबद्धत्वज्ञानसंभवात् सामानाधिकरण्यांश एव विरोधज्ञानस्य

प्रतिबन्धकतायाः वक्तव्यत्वात् तस्य चासंभवात् कथं विरोधस्य हेत्वाभासत्वम् इति शङ्कायामाह–**पक्ष** इति । साध्यवदसंयुक्तत्वनिश्चयसहितस्य पक्षे हेतुमत्तानिश्चयस्य साक्षात् अनुमितिप्रतिबन्धकत्वात् विरोधस्य हेत्वाभासत्वमुपपद्यत इति भावः ।।

## दीधितिः

**अभावत्वं च** ''इदमिह नास्ति, इदमिदं न भवति'' इति प्रतीतिनियामकः **भावाभावसाधारणः स्वरूपसंबन्धविशेषः** । अतो नाभावसाध्यकव्यभिचारिण्यतिप्रसङ्गः ।।

## गादाधरी

**अभावत्वं चेत्** अत्र भावभिन्नत्वं तदा प्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वतादृशसंबन्धावच्छिन्नत्वोभयाभावनिवेशपक्षे दैशिकविशेषणतया घटत्वाभावादिसाध्यके व्यभिचारिण्यतिप्रसङ्गः । **तादृशसंबन्धावच्छिन्नतदभावस्य** घटत्वादिरूपतया भावभिन्ननिरूपितप्रतियोगितायां तत्संबन्धावच्छिन्नत्वघटत्वाभावत्वावच्छिन्नत्वोभयाभावस्याक्षतत्वात् इत्याशङ्कां निरस्यति – **अभावत्वं चेति** । इदमिह नास्ति, इदमिदं न भवतीति **द्विविधप्रतीतिकथनेन** अभावत्वस्य संसर्गाभावान्योन्याभावोभयसाधारण्ये प्रमाणमुपदर्शितम् । तस्यान्योन्याभावसाधारण्यविरहेऽभावान्तरप्रतियोगितासामान्ये तादात्म्यसंबन्धावच्छिन्नत्वविरहेण तेन साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् ।।

**भावाभावसाधारण** इति । **भावेनापि** घटे घटत्वाभावो नास्ति, घटो न घटभिन्नः इति प्रतीतेर्जननादिति भावः । **तदवच्छिन्ने** चाभावशब्दस्य रूढिशक्तिः परिभाषैव वा । अतो न भावोऽभाव इत्यवयवव्युत्पत्त्या तद्धर्मप्रत्ययेऽपि न क्षतिः ।।

**स्वरूपसंबन्धविशेष** इति । **अभावे** तत्स्वरूपप्रतियोगितानिरूपितानुयोगित्वनामा स्वरूपसंबन्धविशेष इत्यर्थः । **न चाभावत्वस्य** स्वरूपसंबन्धरूपत्वेऽनु-



गमात् अनुगतप्रत्ययानुपपत्तिः । **तदनुगमकरूपान्तराभ्युपगमात्** । पदार्थान्तरत्वेऽपि निरूपकभेदेन संबन्धान्तरवत् तद्भेदस्य आवश्यकतया अनुगमकरूपान्तरापेक्षणात् ।।

## व्याख्या

एतावता प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितायां यद्धर्मावच्छिन्नत्वयत्संबन्धावच्छिन्नत्वोभयाभावः तेन संबन्धेन तद्धर्मावच्छिन्नसमानाधिकरण्यं व्याप्तिरिति स्थिरीकृतम् । तदुपरि प्रवृत्तं **अभावत्वं चेति दीधितिग्रन्थमवतारयति–अभावत्वं चेत्** इति । अत्र लक्षणे प्रविष्टम् अभावत्वं यदि भावभिन्नत्वं, तदा पटः घटत्वाभाववान् मेयत्वात् इत्यत्रातिव्याप्तिः । साध्याभाववति घटत्वाभावाभाववति घटे मेयत्वसत्त्वात् अयं हेतुः व्यभिचारी । अत्र साध्यतावच्छेदकसंबन्धः स्वरूपसंबन्धः । हेतोः मेयत्वस्य अधिकरणं घटः तद्वृत्तिः प्रकृतसाध्याभावः घटत्वाभावाभावः तदीयप्रतियोगितायां घटत्वाभावनिष्ठायां साध्यतावच्छेदको यो धर्मः घटत्वाभावत्वं साध्यतावच्छेदको यः स्वरूपसंबन्धः तदुभयावच्छिन्नत्वमेव वर्तते, न तु तदुभयाभाव इति अतिव्याप्तिः वारणीया । यदि अभावपदस्य भावभिन्न इत्यर्थः, तदा घटत्वाभावाभावस्य घटत्वरूपस्य भावभिन्नत्वाभावात् लक्षणाघटकतया भावभिन्नस्य पटाद्यभावस्य ग्रहणे तदीयप्रतियोगितायां पटनिष्ठायां साध्यतावच्छेदकघटत्वाभावत्वावच्छिन्नत्व - साध्यतावच्छेदकस्वरूपसंबन्धावच्छिन्नत्वोभयाभावसत्त्वात् तद्धर्मघटत्वाभावत्वावच्छिन्नघटत्वाभावसामानाधिकरण्यं मेयत्वरूपहेतावस्तीति अतिव्याप्तिः स्यात् । अतोऽभावत्वं न भावभिन्नत्वरूपम् । अपि तु स्वरूपसंबन्धविशेष इति भावः ।।

**तादृशसंबन्धावच्छिन्नतदभावस्येति** । स्वरूपसंबन्धावच्छिन्नघटत्वाभावनिष्ठप्रतियोगिताकाभावस्य घटत्वरूपतया भावभिन्नत्वाभावात् घटत्वाभावाभावो न लक्षणघटकः, अपितु घटपटाद्यभावः, भावभिन्नतन्निरूपितप्रतियोगितायां घटपटादिनिष्ठायां

तत्संबन्धावच्छिन्नत्व – स्वरूपसंबन्धावच्छिन्नत्वघटत्वाभावत्वावच्छिन्नत्वोभयाभावसत्त्वात् व्यभिचारिण्यतिप्रसङ्गः इत्यन्वयः ।।

**द्विविधप्रतीतिकथनेनेति** । इदमिह नास्ति, इदमिदं न भवतीति द्विविधप्रतीतिकथनेनेत्यर्थः । अभावत्वं संसर्गाभावान्योन्याभावोभयसाधारणमिति सूचितम् । अभावत्वस्य अन्योन्याभावसाधारण्यविरहे तादात्म्यसंबन्धेन साध्यतास्थले अयं घटः पृथिवीत्वात् इत्यादौ हेतुसमानाधिकरणाभावपदेन घटान्योन्याभावस्य ग्रहीतुमशक्यतया संयोगादिसंबन्धावच्छिन्नघटाद्यभावग्रहणे तदीयप्रतियोगितायां साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वाभावप्रयुक्तोभयाभावस्य सत्त्वात् अतिव्याप्तिः स्यात् । अतोऽभावत्वमन्योन्याभावे संसर्गाभावे च वर्तते इति स्वीकरणीयम् । तथा सति पूर्वोक्तस्थले तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकस्य घटान्योन्याभावस्यापि हेतुसमानाधिकरणाभाव इत्यनेन ग्रहीतुं शक्यतया तदीयघटनिष्ठप्रतियोगितायां साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वतादृशघटत्वावच्छिन्नत्वोभयमेवास्तीति नातिव्याप्तिरिति भावः ।।

भावाभावसाधारण इत्यस्य उभयस्मिन्नभावे संसर्गाभावे अन्योन्याभावे च समन्वयमाह–**भावेनापीति** । घटे घटत्वाभावो नास्तीति प्रतीत्या घटत्वात्मकभावस्वरूपः अत्यन्ताभावः, घटो न घटभिन्नः इति प्रतीत्या घटत्वात्मकभावरूपः घटभिन्नभेदश्च दर्शितः । एवं चात्यन्ताभावान्योन्याभावोभयसाधारणम् अभावत्वमिति भावः । **तदवच्छिन्ने** – स्वरूपसंबन्धविशेषरूपाभावत्वावच्छिन्ने अभावपदस्य रूढिशक्तिः परिभाषा वा । न तु अभावपदं यौगिकम् । तथा सति न भावः अभावः इति अवयवशक्त्या भावभिन्नत्वस्यैव बोधनात् उक्तविधस्य स्वरूपसंबन्धविशेषरूपाभावत्वावच्छिन्नस्य अभावपदात् प्रतीतिर्न स्यात् इति भावः । स्वरूपसंबन्धविशेष इत्यस्य अर्थमाह–



**अभावे** इति । अभावे विद्यमानमभावत्वं नाम अभावात्मकः स्वरूपसंबन्धविशेषः प्रतियोगिनिरूपितानुयोगित्वनामा इति ।।

शङ्कते – **न चाभावत्वस्येति** । अभावत्वस्य स्वरूपसंबन्धरूपत्वे तत्तदभावस्वरूपभेदेन अभावत्वस्य भेदात् अनुगताभावप्रत्ययो न स्यादिति भावः । समाधत्ते–**तदनुगमकेति** । स्वरूपसंबन्धात्मकाभावत्वानुगमकम् अभावत्वत्वं नाम धर्मान्तरं स्वीक्रियते । पदार्थान्तरमभावत्वमिति पक्षेऽपि प्रतियोगिभेदेन तद्भेदस्यावश्यकतया तदनुगमकरूपान्तरस्यापेक्षणीयत्वेन साम्यात् । परं तु अभावत्वत्वमपि पदार्थान्तरमिति कल्पने गौरवमिति भावः ।।

## गादाधरी

**यत्तु** प्रतियोगिनिरूपितसंबन्धानामननुगमेऽपि प्रतियोगिधर्मितावच्छेदकस्य नञ्पदप्रवृत्तिनिमित्ताखण्डधर्मान्तरस्य सत्त्वात् पटो नास्ति, घटो नास्ति इत्यादि अनुगतप्रमितिनिर्वाह इति; **तन्न साधीयः** । घटादौ घटाभावादेः कालिकादि-संबन्धस्यापि स्वरूपतया तत्संसर्गकप्रतीतितो घटाभावो नास्तीत्याद्यनुयो-गितासंसर्गकप्रतीतेः वैलक्षण्याय संसर्गतावैलक्षण्यावश्यकतया संसर्गतावच्छेद-कधर्मविशेषस्वीकारस्य तन्निर्वाहकस्यावश्यकत्वात् तेन अनुगतीकृतानुयोगिताया एव संसर्गतावत् धमितावच्छेदकताया अपि संभवेनाभावनिष्ठाखण्डधर्मान्तरे मानाभावात्, नञ्पदप्रवृत्तिनिमित्ततया अपि तस्यामेवोपगमात् ।।

## व्याख्या

अभावत्वमखण्डधर्मान्तरमिति वादिनां मतमाह–**यत्तु** इति । पूर्वोक्तायाः घटादिप्रतियोगिकस्वरूपसंबन्धविशेषरूपायाः अनुयोगितायाः अभावत्वस्वरूपत्वे अननुगमेऽपि अभावेषु नञ्पदशक्यतावच्छेदकतया अनुयोगित्वातिरिक्तम् अभावत्वाख्यम्

अखण्डधर्मान्तरं सिध्यति । तेनैव घटो नास्ति, पटो नास्ति इत्याद्यनुगतप्रतीति-व्यवहारयोरुपपत्तिः । अनुगतप्रतीतिव्यवहारावेव तत्र प्रमाणम् । तच्च घटादिप्रति-योगिधर्मितावच्छेदकम् । घटो नास्तीत्यादौ घटं प्रति अभावस्य विशेष्यतया विशेष्यतावच्छेदकं किंचित् वक्तव्यमिति यावत् ।।

तन्मतं दूषयति–**तन्न साधीय** इत्यादिना । अभावे प्रतियोगिनः स्वनिरूपितानु-योगिताख्यः स्वरूपसंबन्धः अस्ति । तथा घटे घटाभावस्य कालिकसंबन्धः घटस्वरूपः अस्ति । अथापि कालिकसंसर्गकघटाभावप्रतीतितः, घटे घटाभावो नास्ति इति अनुयोगितासंसर्गकघटाभावप्रतीतौ वैलक्षण्याय संसर्गतावैलक्षण्यमावश्यकम् । तच्च कालिकसंबन्धस्य ऽक्तानुयोगिताविशेषस्य च अभावस्वरूपात्मकत्वेन स्वतो न निर्वहतीति तन्निर्वाहकसंसर्गतावच्छेदकम् अनुयोगित्वविशेषत्वमवश्यं स्वीकरणीयम् । धर्मिता-वच्छेदकमभावत्वम् उभयसंसर्गकप्रतीतावपि एकमेवेति न तेन वैलक्षण्यनिर्वाहः । एवं च विलक्षणतया स्वीकार्यायाः अनुयोगिताया एव तादृशधर्मविशिष्टायाः संसर्गत्ववत् धर्मितावच्छेदकतायाः नञ्पदप्रवृत्तिनिमित्ततायाश्च स्वीकारे लाघवसत्त्वात् इदमेव युक्तमिति भावः ।।

## गादाधरी

अथ नास्तीत्यादौ अनुयोगितारूपसंबन्धविशेषप्रकारेण भावभानोपगमे तदंश **एव** स्वनिरूपितत्वसंबन्धेन प्रतियोगिनः प्रकारत्वसंभवात् अभावांशे तत्संबन्धेन प्रतियोगिनो भाने मानाभावादनुयोगितायाः संबन्धत्वमेव न सिध्येत् इति चेत्–

न । **मण्याद्यभावस्य** दाहादिहेतुतायां मण्यादिरूपप्रतियोग्यवच्छिन्नानुयोगि-ताविशेषस्य अवच्छेदकत्वापेक्षया अनुयोगितासंबन्धेन मण्यादेस्**तथात्वे** लाघवेन **तत्संबन्धतासिद्धेः** ।।



**न चोभयाभावादिवारणाय** मणित्वावच्छिन्ननिरूपितानुयोगिता मण्यादेः संबन्धो वाच्यः । तथा च तादृशानुयोगितायाः स्वाश्रयतासंबन्धेनावच्छेदकत्वेऽपि गौरवमिति वाच्यम् ।।

**उभयत्वावच्छिन्ननिरू**पितानुयोगितायाः मणित्वादिविशिष्टसंबन्धताविरहात् शुद्धानुयोगितासंबन्धेनैव मणित्वादिविशिष्टस्य उभयत्वावच्छिन्नाभावव्यावर्तकता-संभवेन **तादृशानुयोगितात्वेन संबन्धतानुपगमात्** ।।

## व्याख्या

पूर्वोक्तनिष्कर्षोपरि शङ्कते–**अथे**त्यादिना । घटो नास्तीत्यादौ भावस्य घटादेः अनुयोगितारूपसंबन्धविशेषप्रकारेण नञर्थेऽभावे भानोपगमे **तदंशएव** –अनुयोगिताविशेष एव स्वनिरूपितत्वसंबन्धेन घटादेः प्रकारत्वसंबन्धेन प्रतियोगिनो घटादेः भाने प्रमाणाभावात् अनुयोगितायाः संबन्धत्वमेव न सिध्येत् इति शङ्का । नञः अभावत्ववान् अर्थः । अभावत्वं चानुयोगिताविशेषः । तत्रैव निरूपितत्वसंबन्धेन घटादेः भानमस्तु, अनुयोगितासंबन्धेन नञर्थेऽभावे घटादेः भानं मास्तु इत्याशयः ।।

तत्र समाधत्ते–**मण्याद्यभावस्येति** । वह्निना दाहे जननीये प्रतिबन्धकीभूतमणेरभावः कारणम् । मण्यभावो नाम त्वदुक्तरीत्या निरूपितत्वसंबन्धेन मणिबिशिष्टा या अनुयोगिता तद्वान् । कारणतावच्छेदकं निरूपितत्वसंबन्धेन मणिविशिष्टमनुयोगित्वम् । अनुयोगितासंबन्धेन मणेः साक्षात् अभावेऽन्वयेन मणिविशिष्टाभावः दाहकारणम् इति स्वीकारे कारणतावच्छेदकः मणिः । स च मणिविशिष्टानुयोगित्वापेक्षया लघुभूतः । **तथात्वे**–कारणतावच्छेदकत्वे । **तत्संबन्धतासिद्धेः**–अनुयोगितायाः संबन्धत्वसिद्धेः इति भावः । तत्र शङ्कते–**न चोभयाभावादिवारणायेति** । अनुयोगितासंबन्धेन मणिविशिष्टाभावः कारणमिति स्वीकारे मणिघटोभयाभावस्यापि अनुयोगितासंबन्धेन

मणिविशिष्टतया तस्यापि दाहकारणत्वप्रसङ्गः । तद्वारणाय मणित्वावच्छिन्ननिरूपितानुयोगितासंबन्धेन मणिविशिष्टाभावः कारणमिति वक्तब्यम् । तथा च मणित्वावच्छिन्ननिरूपितानुयोगितायाः कारणतावच्छेदकत्वपक्षेऽपि गौरवमिति भावः। तत्र समाधत्ते–**उभयत्वाद्यवच्छिन्नेति** । मणित्वविशिष्टस्य अभावे उभयत्वावच्छिन्ननिरूपितानुयोगिता न संबन्धः । शुद्धानुयोगितैव मणेः अभावे संबन्धः । तावतापि मणिघटोभयाभावस्य वारणसंभवात् । तत्र उभयत्वावच्छिन्नानुयोगिताया एव संबन्धत्वात्। तस्य मणित्वविशिष्टप्रतियोगिकसंबन्धत्वविरहात् । **तादृशानुयोगितात्वेन**–उभयत्वावच्छिन्ननिरूपितानुयोगितात्वेन । **संबन्धतानुपगमात्** – मणिप्रतियोगिकाभावानुयोगिकसंबन्धत्वानुपगमात् ।।

## गादाधरी

**न च** – तादृशस्य **विशिष्टमणित्वाद्यवच्छिन्नाभावव्यावर्तकता** न संभवति, विशिष्टमणित्वाद्यवच्छिन्ननिरूपितानुयोगितायामपि अधिकं तु इत्यादिन्यायेन मणित्वादिविशिष्टनिरूपितत्वसत्त्वेन **तस्या अपि** तत्संबन्धत्वात् इति–वाच्यम् ।।

**कारणतावच्छेदकता**पर्याप्त्यधिकरणपरिसमाप्त**प्रतियोगिताकसंबन्धिन** एव कारणतया मणिर्नास्तीत्याकारकशुद्धमणित्वाद्यवच्छिन्नप्रकारकप्रतीत्यविषय**विशेषणान्तर**सहितमणित्वाद्यवच्छिन्ना**भावनिष्ठ**तादृशमणित्वाद्यवच्छिन्ननिरूपित**संबन्धे** च शुद्धमणित्वादिविशिष्टपर्याप्तप्रतियोगिताकत्वविरहेण **तादृशाभावव्यावर्तनसंभवात्** ।।

## व्याख्या

दाहं प्रति मण्यभावस्य कारणत्वम् । तत्र प्रतियोगितावच्छेदकमणित्वविशिष्टस्य स्वनिरूपितानुयोगितासंबन्धेन अभावेऽन्वयः । न तु मणित्वा-वच्छिन्ननिरूपितानुयोगितासंबन्धेन । तावतैव मणिघटोभयाभावस्य व्यावृत्तिर्भवति । उभयाभावे उभयत्वावच्छिन्ननिरूपितानुयोगितायाः संबन्धत्वात् तस्याभावस्य शुद्धानुयोगितासंबन्धेन मणिविशिष्टत्वाभावात् इति पूर्वमुक्तम् । तदुपरि शङ्कते–**न चेति** । शुद्धानुयोगितासंबन्धेन मणिविशिष्टत्वाभावात् मणिघटोभयाभावस्य वारणेऽपि **विशिष्टमणित्वावच्छिन्नाभावव्यावर्तकता** – पूर्वक्षणवृत्तित्वविशिष्टमणित्वावच्छिन्नाभावव्यावर्तकता न संभवति । विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन पूर्वक्षणवृत्तित्वविशिष्टमणित्वावच्छिन्ननिरूपितानुयोगितायां अधिकस्य पूर्वक्षणवृत्तित्ववैशिष्ट्यस्य प्रवेशेऽपि ''अधिकंतु प्रविष्टं चेत् न तद्धान्यै'' इतिन्यायेन मणित्वविशिष्टनिरूपितत्वसत्त्वेन **तस्या अपि**–पूर्वक्षणवृत्तित्वविशिष्टमणित्वावच्छिन्ननिरूपितानुयोगिताया अपि तत्संबन्धत्वात् मणित्वविशिष्टप्रतियोगिकसंबन्धत्वात् । तथाच मणिसत्त्वेऽपि दाहापत्तिः उक्तविशिष्टाभावरूपकारणसत्त्वादिति शङ्कितुराशयः । विशिष्टमणित्वावच्छिन्नेत्यत्र सामानाधिकरण्यसंबन्धेन पूर्वक्षणवृत्तित्वविशिष्टं यत् मणित्वं तदवच्छिन्नाभावेत्यर्थः।।



उक्तशङ्कायाः समाधानमाह–**कारणतावच्छेदकतेत्यादिना** । अयमाशयः– दाहं प्रति मणित्वविशिष्टमण्यभावः कारणम् । तादृशाभावस्य प्रतियोगी मणित्वविशिष्टमणिः, तस्य अभावे अनुयोगित्वं संबन्धः । कारणतावच्छेदकेत्यत्र कारणतापदेन दाहनिरूपिता मणिनिष्ठा कारणता विवक्षिता । कारणतावच्छेदकं मणित्वम् । तदवच्छिन्नो मणिः अनुयोगितासंबन्धेनाभावे प्रकारः । तथाच कारणतावच्छेदकतापर्याप्त्यधिकरणं मणित्वं तत्पर्याप्तावच्छेदकताकमणिनिष्ठप्रतियोगितानिरूपकानुयोगितासंबन्धेन मणिविशिष्टस्याभावः दाहकारणम् इति पर्यवसितम् । पूर्वक्षणवृत्तित्वविशिष्टमण्यभावस्तु नैतादृशः अनुयोगितारूप-संबन्धनिरूपितप्रतियोगिताया मणित्वविशिष्टे पर्याप्ततया

पूर्वक्षणवृत्तित्वविशिष्टमणित्वेऽपर्याप्तत्वात् । अतो न पूर्वक्षणवृत्तित्वविशिष्टमण्यभावस्य दाहकारणत्वापत्तिः इति । **सावधानं पठनीयम्** ।।

**प्रतियोगिताकसंबन्धिन** इति । प्रतियोगितानिरूपकानुयोगितारूपसंबन्धवतः अभावस्येत्यर्थः । **विशेषणान्तरम्** – पूर्वक्षणवृत्तित्वम् । **अभावनिष्ठे**त्यस्य **संबन्ध** पदार्थानुयोगितायामन्वयः । **तादृशाभावव्यावर्तनसंभवात्**–पूर्वक्षण-वृत्तित्वविशिष्टमण्यभावस्य कारणत्ववारणसंभवात् ।।

## गादाधरी

**एतेन** विशिष्टमणित्वाद्यवच्छिन्नाभाववारणाय शुद्धमणित्वाद्यवच्छिन्नप्रतियोगि-ताकत्वेन हेतुता वाच्या । शुद्धमणित्वाद्यवच्छिन्नत्वं च मणित्वाद्यन्यधर्मानवच्छिन्नत्वम् । तदपि यदि तादृशधर्मावच्छेद्यत्वत्वावच्छिन्नाभावः तदा किंचिद्विशिष्टतादृशावच्छेद्यत्वत्वा-वच्छिन्नाभावमादाय अतिप्रसङ्ग इति शुद्धतादृशधर्मावच्छेद्यत्वत्वावच्छिन्नाभाव एव निवेशनीयः । शुद्धतादृशावच्छेद्यत्वत्वाद्यवच्छेद्यत्वमपि तदतिरिक्तानवच्छिन्नत्वमिति विशेषणानवस्थाप्रसङ्ग इत्यपि निरस्तम् – इत्यलमप्रस्तुताधिकजल्पनया ।।

## व्याख्या

पक्षान्तरं निरस्यति–**एतेनेति** । पूर्वक्षणवृत्तित्वविशिष्टमणित्वावच्छिन्नाभावस्य दाहकारणत्ववारणाय शुद्धमणित्वावच्छिन्नप्रतियोगिताकत्वेन मण्यभावस्य कारणत्वं वाच्यम् । शुद्धमणित्वावच्छिन्नत्वं च मणित्वान्यधर्मानवच्छिन्नत्वम् । पूर्वक्षणवृत्तित्व-विशिष्टमणित्वावच्छिन्नाभावस्य मणित्वान्यपूर्वक्षणवृत्तित्वावच्छिन्नप्रतियोगिताकतया न दोष इति वाच्यम् । परं तु मणित्वान्यधर्मानवच्छिन्नत्वं किंरूपमिति विवेचनीयम् । यदि मणित्वान्यधर्मावच्छेद्यत्वत्वाच्छिन्नाभावः तर्हि पूर्वक्षणवृत्तित्वविशिष्टं यत् मणित्वान्यधर्मावच्छेद्यत्वं तदभावमादाय दोषप्रसङ्गः । तद्वारणाय शुद्धं यत्



मणित्वान्यधर्मावच्छेद्यत्वं तदभावो निवेशनीयः । तत्रापि पूर्वक्षणवृत्तित्वविशिष्टं यत् शुद्धमणित्वावच्छेद्यत्वं तदभावमादायातिप्रसङ्ग इति उत्तरोत्तरविशेषणसंयोजनेन अनवस्थाप्रसङ्ग इत्यपि निरस्तम् ।।

पूर्वोक्तरीत्या पर्याप्तिनिवेशेन अनवस्थायाः वारणादिति भावः ।।

## दीधितिः

**तदपि वा नोपादेयम् । प्रयोजनविरहात्** ।।

## गादाधरी

**तदपि**–तादृशाभावत्वमपि । **नोपादेयम्**–हेतुसामानाधिकरण्यांशे विशेषणतया (विशेष्यतया) न निवेशनीयम् । **प्रयोजनविरहादिति** । स्वावच्छेदकविशिष्टान-धिकरणहेतुमन्निष्ठत्वपुरस्कारेणाभावं निवेश्य तदीयत्वेन प्रतियोगितानिवेशादेव सर्वसामञ्जस्यादिति भावः ।।

## व्याख्या

एतावता प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधि-करणहेत्वधिकरणनिष्ठाभावीयप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मा-वच्छिन्नत्वोभयाभावः तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिः इति पर्यवसितम् । तत्र अभावत्वेन रूपेण्ण अभावो न निवेशनीयः । प्रयोजनाभावात् । अपि तु निरुक्तहेत्वधि-करणनिष्ठत्वेनैव निवेशनीयः । तथाच स्वावच्छेदकसंबन्धेन स्वावच्छेदकविशिष्टा-नधिकरणहेत्वधिकरणनिष्ठः यः तन्निरूपितप्रतियोगितासमान्ये यद्धर्मावच्छिन्नत्वय-त्संबन्धावच्छिन्नत्वोभयाभावः तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिः । वह्निमान्

धूमात् इत्यादौ स्वं घटाद्यभावीयप्रतियोगिता, तदवच्छेदकं घटत्वादि तदवच्छिन्नानधिकरणं यत् हेत्वधिकरणं– धूमाधिकरणं पर्वतः तन्निष्ठः घटाद्यभावः तदीयप्रतियोगितायां वह्नित्वावच्छिन्नत्व– संयोगसंबन्धावाच्छिन्नत्वोभयाभावसत्त्वात् लक्षणसमन्वयः । धूमवान् वह्नेः इत्यादौ स्वपदेन धूमाभावीयप्रतियोगिता ग्राह्या । तदवच्छेदकधूमत्वावच्छिन्नानधिकरणवह्निरूपहेत्वधिकरणायोगोलनिष्ठः धूमाभावोऽपि तदीयप्रतियोगितायां धूमत्वावच्छिन्नत्वसंयोगसंबन्धावच्छिन्नत्वोभयमेवास्तीति नातिव्याप्तिः ।।

एवं च स्वावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभाववद्धेत्वधिकरणवृत्तिनिरूपितप्रतियोगितासामान्यको यो धर्मः (वह्नित्वादिः) तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः इति निष्कर्षः । स्वपदेन साध्यतावच्छेदकं ग्राह्यम् । उभयाभाववत्त्वं प्रतियोगितायामन्वेति । हेत्वधिकरणवृत्तिपदेन सद्धेतौ घटाद्यभावः । व्यभिचारिणि साध्याभावः–धूमाद्यभावः, ग्राह्यः ।।

स्वावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभाववती या हेत्वधिकरणवृत्तिनिरूपिता प्रतियोगिता तत्को यो धर्मः तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः । स्वं–वह्नित्वं । हेत्वधिकरणवृत्तिः घटाद्यभावः तदीयप्रतियोगितायां वह्नित्वावच्छिन्नत्वं नास्तीति तदभावप्रयुक्तोभयाभाववती घटाद्यभावीयप्रतियोगिता, तस्यां वह्नित्वावच्छिन्नत्वाभावप्रयुक्तोभयाभावसत्त्वात् लक्षणसमन्वयः ।।

धूमवान् वह्नेरित्यादौ स्वं धूमत्वम् । हेत्वधिकरणवृत्तिः धूमाभावोऽपि तदीयप्रतियोगितायां धूमत्वावच्छिन्नत्वसंयोगसंबन्धावच्छिन्नत्वोभयमेवास्तीति नातिव्याप्तिरिति सिद्धम् ।।



## दीधितिः

**विषयता**तत्त्वादिवत्, प्रतियोगित्वाधिकरणत्वतत्त्वसंबन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येकदेशिनः ।।

## गादाधरी

प्रसङ्गात् प्रतियोगित्वादीनामपि पदार्थान्तरत्वं व्यवस्थापयति – **विषयतेति** । **तत्त्वं** विषयतात्वम् । प्राचीनैकदेशिभिः विषयतायाः अतिरिक्तपदार्थत्वोपगमात् दृष्टान्तत्वेन तदुपन्यासः ।।

**यथा** विषयतायाः विषयस्वरूपत्वे द्रव्यत्वावच्छिन्नघटविषयकज्ञानात् घटत्वावच्छिन्नतद्विषयकज्ञानस्य विषयवैलक्षण्यविरहात् अवैलक्षण्यापत्तिः ।।

न च द्रव्यत्वघटत्वयोरपि तत्र विषयतया तद्वैलक्षण्यादेव वैलक्षण्यमिति वाच्यम् । तावतापि द्रव्यत्वेन घटविषयकात् घटत्वेन च पटविषयकात् ज्ञानात् घटत्वेन घटं द्रव्यत्वेन पटमवगाहमानस्य ज्ञानस्य वैलक्षण्योपपादनस्याशक्यत्वात् ।।

ज्ञानस्वरूपत्वे घटपटौ इत्यादि समूहालम्बनीयघटपटादिविषयतानामभिन्नतापत्त्या तादृशज्ञानस्य घटत्वाद्यवच्छिन्नपटादिनिष्ठविषयताशालितया भ्रमत्वापत्तिः।।

ज्ञानविषयोभयरूपत्वे च जातिमान् घटः इत्यादिसमूहालम्बनज्ञानीयघटत्वादिविषयतायाः वैचित्र्यानुपपत्तिः । ज्ञानविषययोरविशेषात् इति जातिमान् इत्याद्याकारकएकविधघटत्वादिविषयताशालिज्ञानात् तादृशबुद्धेः विलक्षणाकारता न स्यात् इत्यादियुक्त्या विषयतायाः, विषयादिभेदभिन्नविषयतानामनुगमकतया च विषयतात्वस्यातिरिक्तत्वसिद्धिः–

## व्याख्या

प्रतियोगिताप्रतियोगितात्वादीनामतिरिक्तपदार्थत्वं साधयितुं दृष्टान्ततया विषयता-विषयतात्वयोः अतिरिक्तत्वं साधयति–**यथे**त्यादिना ।।

(I) विषयतायाः विषयस्वरूपत्वं न संभवति । द्रव्यत्वेन घटविषयकात् इदं द्रव्यमिति ज्ञानात् घटत्वेन घटविषयकस्य अयं घटः इति ज्ञानस्य वैलक्षण्यं न स्यात् । उभयत्र घटस्यैव विषयतया विषयभेदाभावात् ।।

न च तयोः ज्ञानयोः विषयविशेषणतया द्रव्यत्वघटत्वयोः भानात् तद्भेदादेव भेद इति वाच्यम् ।।

तावतापि द्रव्यत्वेन घटविषयकात् घटत्वेन च पटविषयकात् ज्ञानात् ''इमौ द्रव्यघटौ'' इत्याकारकात् ज्ञानात् घटत्वेन घटं द्रव्यत्येन पटमवगाहमानस्य ''इमे घटद्रव्ये'' इत्याकारकज्ञानस्य विषयवैलक्षण्याभावात् वैलक्षण्यं न स्यात् ।।

उक्तदोषवारणाय विषयतायाः ज्ञानस्वरूपत्वाङ्गीकारे घटपटौ इत्यादि-समूहालम्बन-ज्ञानीयघटपटादिनिष्ठविषयतानामभिन्नत्वापत्तिः । ज्ञानस्य अभिन्नत्वात् (एकत्वात्) । न चेष्टापत्तिः । विषयतानामभिन्नत्वे तादृशज्ञानस्य घटत्वावच्छिन्नपटनिष्ठविषयताशालितया भ्रमत्वापत्तिः । ज्ञानैक्यप्रयुक्ताया घटत्वावच्छिन्नघटनिष्ठविषयतायाः पटत्वावच्छिन्नपटनिष्ठ-विषयतायाश्चैक्यात् घटत्वाभाववत्पटनिष्ठविषयताशालितया पटत्वाभाववद्धटनिष्ठ-विषयताशालितया च भ्रमत्वस्यावर्जनीयत्वात् ।।

एतावता विषयतायाः विषयस्वरूपत्वे ज्ञानस्वरूपत्वे च दोषः प्रदर्शितः । अथ ज्ञानविषयोभयस्वरूपत्वे दोष उच्यते । जातिमान् घट इति ज्ञानीय–जातित्वावच्छिन्न-घटविषयताघटत्वावच्छिन्नघटविषयतयोः वैलक्षण्यं न स्यात्, ज्ञानस्य विषयस्य घटस्य



च एकत्वात् । जातिमान् इत्याकारकं एकविधं ज्ञानं यथा घटत्वघटोभयविषयकं जातित्वविषयकं च, तथा जातिमान् घट इति ज्ञानं च इति ''जातिमान् घटः'' इति ज्ञानात् ''जातिमान्'' इति ज्ञानस्य भेदो न स्यात् इति भावः ।।

एवमादियुक्त्या विषयतायाः भेदः अङ्गीकरणीयः, तथा विषयभेदेन भिन्नानां विषयतानामनुगमकतया विषयतात्वस्य च अतिरिक्तता सिध्यतीति भावः ।।

## गादाधरी

**तथा** प्रतियोगितायाः प्रतियोगिस्वरूपत्वे घटादिनिष्ठानां घटत्वद्रव्यत्वादि-रूपविभिन्नधर्मावच्छिन्नानां संयोगसमवायादिरूपविभिन्नसंबन्धावच्छिन्नप्रतियोगितानाम् अवैलक्षण्येन अभाववैलक्षण्यानुपपत्तिः ।।

अभावस्वरूपत्वे घटाद्यभावीयघटत्वाद्यवच्छिन्नप्रतियोगित्वात् किंचिद्विशिष्टघटा-भावाभावत्वाद्यवच्छिन्नप्रतियोगितानामवैलक्षण्यापत्तेः, घटत्वादेः न्यूनवृत्तितया तद-वच्छेदकत्वानुपपत्तेः, **घटाद्यभावस्य पटादिसाधारण्येन पटादेरपि तत्प्रतियोगितापत्तेश्च** इत्यादियुक्त्या प्रतियोगित्वमप्यतिरिक्तं सिध्यति ।।

## व्याख्या

प्रतियोगित्वस्यातिरिक्तत्वं साधयति–**तथेति** । यथा विषयस्यातिरिक्तत्वं तथा प्रतियोगित्वस्याप्यतिरिक्तत्वम् । तथाहि – प्रतियोगितायाः प्रतियोगिस्वरूपत्वाङ्गीकारे घटनिष्ठाः याः घटत्वावच्छिन्न–पृथिवीत्वावच्छिन्नद्रव्यत्वावच्छिन्नाः प्रतियोगिताः याश्च संयोगसमवायादिविभिन्नसंबन्धावच्छिन्नाः प्रतियोगिताः तासां घटस्वरूपत्वेन तन्निरूपकाभावानां वैलक्षण्यानुपपत्तिः । प्रतियोगितानां भेदेन हि अभावभेदः भवितुमर्हति । प्रतियोगितायाः प्रतियोगिस्वरूपत्वे प्रतियोगिघटैक्यात् उक्ताभावानां भेदो न स्यात् ।।

प्रतियोगितायाः तन्निरूपकाभावस्वरूपत्वे घटाभावीयघटत्वावच्छिन्नायाः प्रतियोगितायाः पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावत्वावच्छिन्नप्रतियोगितायाश्च घटनिष्ठायाः वैलक्षण्यं न स्यात् । तन्निरूपकयोः घटाभाव–पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावयोश्च एकत्वात् । एवं घटत्वस्य प्रतियोगितान्यूनवृत्तितया घटाभावप्रतियोगितावच्छेदकत्वं न स्यात् । घटाभावीयप्रतियोगिता हि घटे इव पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावेऽपि वर्तते । न हि तत्र घटत्वमस्ति ।।

**एवं घटाद्यभावस्य पटादिसाधारण्येन पटादेरपि तत्प्रतियोगितापत्ते-श्चेति** । यदि घटाभावीयप्रतियोगिता घटाभावस्वरूपा तदा पटादौ घटाभावस्य सत्त्वेन तत्स्वरूपा घटाभावीयप्रतियोगिता पटादावपि स्यात् इत्यादियुक्त्या प्रतियोगित्वमतिरिक्तः पदार्थः ।।

## गादाधरी

**एवम्** अधिकरणत्वं नाधिकरणस्वरूपम् आधेयस्वरूपं वा । भूतले घटसंयोगदशायामिव परस्परासंयुक्तघटभूतलसत्त्वदशायामपि इदानीं भूतलं घटवत् इत्यापि प्रत्ययप्रसङ्गात् । संयोगरूपत्वे आधेयत्वस्यापि तुल्ययुक्त्या तद्रूपतया आधारत्वाधेयत्वयोरभेदप्रसङ्गेन वैपरीत्येनाधाराधेयभावप्रत्ययप्रसङ्गात् इति तदप्यतिरिक्तः पदार्थः ।।

## व्याख्या

आधारत्वाधेयत्वयोरतिरिक्तपदार्थत्वं निरूपयति – **एवमिति** । आधारत्वं अधिकरणस्वरूपं इति वा आधेयस्वरूपम् इति वा वक्तुं न शक्यते । भूतले घटसंयोगदशायामिव भूतलघटयोः असंयोगदशायामपि इदानीं भूतलं घटवत् इति प्रत्ययप्रसङ्गात्, भूतलस्वरूपस्य घटस्वरूपस्य च सद्भावात् ।।



आधारत्वाधेयत्वयोः संयोगस्वरूपत्वे उभयोः ऐक्यप्रसङ्गात् भूतलं घटवत् इतिवत् घटो भूतलवान् इत्यपि प्रसङ्गात् । अतः आधारत्वम् आधेयत्वं चातिरिक्तपदार्थः ।।

## गादाधरी

**संबन्धत्वमपि** क्लृप्तपदार्थान्तर्भावेन दुर्वचमिति भावः । आदिपदात् अभावत्वादिपरिग्रहः ।।

**इदं तु बोध्यम्** । अभावत्वं प्रतियोगित्वान्नातिरिच्यते । तदभावस्य तत्प्रतियोगित्वनियमात् । **न चैवं** घटादेः घटादिभेदाभावत्वापत्त्या घटादिमति भूतले घटभेदो नास्तीत्यादिप्रतीत्यापत्तिरिति वाच्यम् । संसर्गावच्छिन्नप्रतियोगिताया एव अभावत्वरूपत्वोपगमात् । घटादिभेदस्य घटत्वाद्यत्यन्ताभावसमनियतत्वेन तदभिन्नतया घटत्वादौ तदीयसंसर्गावच्छिन्नप्रतियोगित्वासत्त्वात्तेनैव तदभावप्रत्यायनात् ।।

**न चैवमपि** घटभेदादेः घटाद्यभावत्वानुपपत्तिः, **तद्प्रतियोगित्वात्** इति वाच्यम् । **अत्यन्ताभावत्वात्म**कानुयोगिताविशेषस्यैव प्रतियोगित्वानतिरिक्तत्वोपगमादिति ।।

## व्याख्या

**संबन्धत्वमपि** इति । संबन्धत्वस्य संबन्धिस्वरूपत्वे असंबन्धदशायामपि संबद्धत्वव्यवहारापत्त्या संबद्धत्वमप्यतिरिक्तः पदार्थ इति भावः । **दीधितौ संबन्धत्वादी**त्यादिपदेन अभावत्वं गृहीत्वा अभावत्वमप्यतिरिक्तः पदार्थ इति **केचित्** व्याचक्षते ।।

तत्र स्वाभिप्रायमाह–**इदं तु बोध्यमि**त्यादिना । अभावत्वं प्रतियोगित्वात् नातिरिच्यते । तदभावस्य – घटाभावस्य तत्प्रतियोगित्वनियमात् – घटप्रतियो-

गित्वनियमात् घटाभावस्य यथा घटः प्रतियोगी तथा, घटाभावाभावोऽपि प्रतियोगी । घटाभावाभावो हि घटस्वरूपः । तथा च घटस्य घटाभावः प्रतियोगी । घटः घटाभावप्रतियोगी । तथा च घटाभावत्वं नाम घटप्रतियोगित्वमेव । अतः अभावत्वं प्रतियोगित्वान्नातिरिच्यते । प्रतियोगित्वं तु अतिरिक्तपदार्थ इति पूर्वं निरूपितमेव ।।

अभावत्वस्य प्रतियोगित्वरूपत्वं न संभवतीति शङ्कते – **न चैवमिति** । यदि अभावत्वं प्रतियोगित्वरूपं स्यात्, तदा घटभेदाभावत्वं घटस्य स्यात्, घटभेदाभावत्वं हि घटभेदप्रतियोगित्वरूपम्, घटभेदप्रतियोगित्वं च घटस्य वर्तते । ततश्च घटस्य घटभेदाभावरूपत्वं स्यात् । न चेष्टापत्तिः । घटत्वस्यैव घटभेदाभावरूपत्वादिति शङ्का । समाधानं तु संसर्गावच्छिन्नप्रतियोगिताया एवाभावत्वरूपत्वमङ्गीक्रियते । घटभेदनिरूपितप्रतियोगिता तु न संसर्गावच्छिन्ना । अतो न तस्या अभावत्वरूपता । संसर्गावच्छिन्नप्रतियोगितेत्यस्य तादात्म्यातिरिक्तसंबन्धावच्छिन्नप्रतियोगितेत्यर्थः । तथा च घटनिष्ठायाः घटभेदप्रतियोगितायाः घटभेदाभावत्वरूपत्वं नास्तीति घटस्य न घटभेदाभावरूपत्वम् । अतः घटवति भूतले घटभेदः भवितुमर्हति । घटस्य घटभेदाप्रतियोगित्वात् । अतो न घटभेदो नास्तीति प्रत्ययापत्तिः इत्याशयः ।।

यदि घटप्रतियोगित्वमेव घटाभावत्वं तदा घटभेदस्य घटाभावत्वं न स्यात्, घटभेदे घटनिरूपितप्रतियोगित्वविरहादिति शङ्कते–**न चेति** । **तदप्रतियो-गित्वात्**– घटनिरूपितप्रतियोगित्वाभावात् । समाधत्ते – **अत्यन्ताभावत्वेति** । अत्यन्ताभावत्व-रूपानुयोगितायाः एव प्रतियोगितानतिरिक्तत्वमङ्गीक्रियते । भेदत्वरूपानुयोगितायास्तु प्रतियोगित्वानतिरिक्तत्वं नाङ्गीक्रियते । अतः घटनिरूपितप्रतियोगिताशून्ये घटभेदे घटनिरूपितमनुयोगित्वमस्तीति भावः । अत्र बहु अवधानमावश्यकम् । यथाबुद्धिशक्ति विवरणमकरवम् । विद्वांसः प्रमाणम् । इत्थं च **भट्टाचार्यः** विषयताविषयतात्व –



प्रतियोगित्वप्रतियोगितात्व– अधिकरणत्वाधिकरणतात्वसंबन्धत्वानामतिरिक्त-पदार्थत्वमङ्गीकुर्वन्नपि आदिपदग्राह्यस्य अभावत्वस्यातिरिक्तपदार्थत्वं नाङ्गीकरोतीति सिद्धम् ।।

**इति महामहोपाध्यायेन राष्ट्रपतिसंमानितेन**

**शास्त्रकल्पद्रुमः-तर्कपञ्चाननः-पण्डितरत्नं-विश्वभारती**

**दर्शनसार्वभौमः इत्यादिनानाबिरुदभाजा**

**नावल्पाकाभिजनेन शठकोपरामानुजताताचार्येण** विरचिता

**सुबोधिन्याख्या सिद्धान्तलक्षणव्याख्या**

**समाप्तिमगमत् ।।**

**।। शुभमस्तु ।।**

**श्रीवेङ्कटाद्रिनिलयः श्रीनिवासो दयानिधिः ।**

**अभङ्गुरविभूतिर्नः तरङ्गयतु मङ्गलम् ।।**



